‘दूतं वः' इत्यष्टर्चमष्टमं सूक्तं वामदेवस्यार्षं गायत्रीछन्दस्कमग्निदेवताकम् । तथा चानुक्रम्यते -- ‘दूतं वोऽष्टौ गायत्रं तु' इति । व्यूळ्हे दशरात्रे प्रथमे छन्दोमे इदं सूक्तं जातवेदस्यनिविद्धानीयम् । तथा च सूत्रितं - दूतं व इत्याग्निमारुतम् ' (आश्व. श्रौ. ८.९ ) इति । इदमादिके द्वे सूक्ते प्रातरनुवाकस्याग्नेये क्रतौ गायत्रे छन्दसि विनियुक्ते । सूत्रितं च - ‘ अग्ने पावक दूतं व इति सूक्ते' (आश्व. श्रौ. ४. १३ ) इति ॥

दू॒तं वों वि॒श्ववेंदसं हव्य॒वाह॒ममंर्त्यम् ।

यजिंष्ठमृञ्जसे गि॒रा ॥१

दू॒तम् । व॒: । वि॒श्वऽवेंदसम् । ह॒व्य॒ऽवाहंम् । अमंर्त्यम् ।

यजिंष्ठम् । ऋ॒ञ्ज॒से॒ । गि॒रा ॥१

दूतम् । वः । विश्वऽवेदसम् । हव्यऽवाहम् । अमर्त्यम् ।

यजिष्ठम् । ऋञ्जसे । गिरा ॥१

हे अग्ने “विश्ववेदसम् । विश्वं समस्तं वेदो धनं यस्यासौ विश्ववेदाः। तं सर्वविदं वा “हव्यवाहं देवेभ्यो हविषां वोढारम् “अमर्त्यम् अमरणधर्माणं “यजिष्ठम् अतिशयेन यष्टारं "दूतं देवानां “वः त्वां “गिरा स्तुतिरूपया वाचा “ऋञ्जसे यजमानोऽहं प्रसाधयामि । वर्धयामीत्यर्थः । ‘ ऋञ्जतिः प्रसाधनकर्मा ' इति यास्कः ॥

स हि वेदा॒ वसुं॑धितिं म॒हाँ आ॒रोधं॑नं दि॒वः ।

स दे॒वाँ एह वं॑क्षति ॥२

सः । हि । वेदं॑ । वसुं॑ऽधितिम् । म॒हान् । आ॒ऽरोधं॑नम् । दि॒वः ।

स॒ः । दे॒वान् । आ । इ॒ह । व॒क्ष॒ति॒ ॥२

सः । हि । वेद । वसुऽधितिम् । महान् । आऽरोधनम् । दिवः ।

सः । देवान् । आ । इह । वक्षति ॥२

“स “हि प्रसिद्ध एवाग्निः “वसुधितिं यजमानाभीष्टफलरूपधनस्य दानं “वेद वेत्ति । “महान् प्रभूतोऽग्निः "दिवः "आरोधनम् आरोहणं देवानां स्थानं वेत्ति । “सः अग्निः “इह अस्मिन् यज्ञे “देवान् इन्द्रादीन् “आ “वक्षति आवहतु ॥ वहेर्धातोः ‘ लिङर्थे लेट्' इति लेट् । तस्य तिप् । ‘ सिब्बहुलं लेटि' इति सिप् । 'लेटोऽडाटौ ' इत्यडागमश्च । “हो ढः' इति ढत्वम् । ढत्वकत्वचत्वानि । तिङ्ङतिङः' इति निघातः ॥

स वेंद दे॒व आ॒नमं दे॒वाँ ऋं॒ताय॒ते दमें ।

दातिं प्रि॒याणिं चि॒द्वसुं ॥३

सः । वे॒द॒ । दे॒वः । आ॒ऽनमंम् । दे॒वान् । ऋ॒त॒ऽय॒ते । दमें ।

दातिं । प्रि॒याणिं । चि॒त् । वसुं ॥३

सः । वेद । देवः । आऽनमम् । देवान् । ऋतऽयते । दमे ।

दाति । प्रियाणि । चित् । वसु ॥३

“देवः द्योतमानः “सः अग्निः "आनमं यजमानादीनानमयितुं नमस्कारयितुं “देवान् इन्द्रादीन् “वेद क्रमेण वेत्ति । “दमे यज्ञगृहे “ऋतायते ऋतं यज्ञमिच्छते यजमानाय “प्रियाणि “चित् अभीष्टान्यपि "वसु वसूनि पश्वादीनि धनानि "दाति ददाति प्रयच्छति ॥

स होता॒ सेदु॑ दू॒त्यं॑ चिकि॒त्वाँ अ॒न्तरीं॑यते ।

वि॒द्वाँ आ॒रोध॑नं दि॒वः ॥४

सः । होता॑ । सः । इत् । ऊ॒ इति॑ । दू॒त्यं॑म् । चि॒कि॒त्वान् । अ॒न्तः । ई॒य॒ते॒ ।

वि॒द्वान् । आ॒ऽरोध॑नम् । दि॒वः ॥४

सः । होता । सः । इत् । ऊं इति । दूत्यम् । चिकित्वान् । अन्तः । ईयते ।

विद्वान् । आऽरोधनम् । दिवः ॥४

“सः अग्निः "होता देवानामाह्वाता भवति । "सेदु स एवाग्निः “दूत्यं देवानां दूतकर्म “चिकित्वान् जानन् "दिवः स्वर्गस्य “आरोधनम् आरोहणम् आरोहणार्हं देवानां स्थानं

च “विद्वान् जानन् “अन्तः द्यावापृथिव्योर्मध्ये "ईयते गच्छति ॥ ईङ् गतौ'। ‘दिवादिभ्यः श्यन्'। तिङ्ङतिङः ' इति निघातः ॥

ते स्यांम॒ ये अ॒ग्नयें ददा॒शुर्ह॒व्यदांतिभिः ।

य ई॒ं पुष्यंन्त इन्ध॒ते ॥५

ते । स्या॒म॒ । ये । अ॒ग्नयें । द॒दा॒शुः । ह॒व्यदांतिऽभिः ।

ये । ई॒म् । पुष्यंन्तः । इ॒न्ध॒ते ॥५

ते । स्याम । ये । अग्नये । ददाशुः । हव्यदातिऽभिः ।

ये । ईम् । पुष्यन्तः । इन्धते ॥५

“ते तव यजमानाः “स्याम भूयाम । ते इत्युक्तम् । के इत्युच्यते । "ये यजमानाः “अग्नये “हव्यदातिभिः हविर्दानैः "ददाशुः प्रीतिं कुर्वन्ति । “ईम् एनमग्निं "पुष्यन्तः वर्धयन्तः "ये यजमानाः "इन्धते समिद्भिर्दीप्तियुक्तं कुर्वन्ति ॥

ते रा॒या ते सु॒वीर्यै॑ः सस॒वांसो॒ वि शृं॑ण्विरे ।

ये अ॒ग्ना द॑धि॒रे दुव॑ः ॥६

ते । रा॒या । ते । सु॒ऽवीर्यै॑ः । स॒स॒ऽवांस॑ः । वि । शृ॒ण्वि॒रे॒ ।

ये । अ॒ग्ना । द॒धि॒रे । दुव॑ः ॥६

ते । राया । ते । सुऽवीर्यैः । ससऽवांसः । वि । शृण्विरे ।

ये । अग्ना । दधिरे । दुवः ॥६

“ये यजमानाः “अग्ना अग्नौ ॥ ‘सुपां सुलुक्' इत्याकारः॥ “दुवः परिचर्यां “दधिरे धारयन्ति। कुर्वन्तीत्यर्थः। “ते “ससवांसः अग्निं संभजमानाः “राया पश्वादिलक्षणेन धनेन “वि “शृण्विरे विश्रूयन्ते प्रख्यायन्ते । “ते सुवीर्यैः शोभनवीर्योपेतैः पुत्रादिभिश्च विश्रूयन्ते ॥

अ॒स्मे रायो॑ दि॒वेदि॑वे॒ सं च॑रन्तु पुरु॒स्पृह॑ः ।

अ॒स्मे वाजा॑स ईरताम् ॥७

अ॒स्मे इति॑ । राय॑ः । दि॒वेऽदि॑वे । सम् । च॒र॒न्तु॒ । पु॒रु॒ऽस्पृह॑ः ।

अ॒स्मे इति॑ । वाजा॑सः । ई॒र॒ता॒म् ॥७

अस्मे इति । रायः । दिवेऽदिवे । सम् । चरन्तु । पुरुऽस्पृहः ।

अस्मे इति । वाजासः । ईरताम् ॥७

“पुरुस्पृहः ऋत्विगादिभिरभिलष्यमाणाः “रायः पश्वादिधनानि "अस्मे अस्मासु यजमानेषु “दिवेदिवे प्रतिदिनं “सं “चरन्तु प्रचरन्त्यो भवन्तु ॥ दिव्शब्दादुत्तरस्याः सप्तम्याः ‘सुपां सुलुक्' इत्यादिना शेआदेशः । ‘ ऊडिदम्' इत्यादिना च तस्योदात्तत्वम् । “ नित्यवीप्सयोः' इति द्विर्भावे सत्युत्तरभागस्य ' अनुदात्तं च ' इत्यनुदात्तत्वम् ॥ “वाजासः अन्नानि च "अस्मे अस्मान् “ईरतां यज्ञार्थं प्रेरयन्तु ॥

स विप्रंश्चर्षणी॒नां शवं॑सा॒ मानुं॑षाणाम् ।

अतिं॑ क्षि॒प्रेवं॑ विध्यति ॥८

सः । विप्रः॑ । च॒र्ष॒णी॒नाम् । शवं॑सा । मानुं॑षाणाम् ।

अतिं । क्षि॒प्राऽइंव । वि॒ध्य॒ति॒ ॥८

सः । विप्रः । चर्षणीनाम् । शवसा । मानुषाणाम् ।

अति । क्षिप्राऽइव । विध्यति ॥८

"विप्रः मेधावी । विप्र इति मेधाविनाम ‘विप्रो धीरः' (नि. ३. १५. १ ) इति तन्नामसु पाठात् । “सः अग्निः “शवसा बलेन । शव इति वलनाम ‘पाजः शवः' (नि. २.९. ३) इति तन्नामसु पाठात् । “मानुषाणां मनुसंबन्धिनां “चर्षणीनां प्रजानां “क्षिप्रेव क्षेप्याप्येव विनाशयितुमर्हाणि । दुरितानीति शेषः । “अति “विध्यति अतिविध्यतु अतिशयेन नाशयतु ॥ ॥ ८ ॥

# ऋग्वेदः सूक्तं ४.९



## दे. अग्निः। गायत्री

अग्ने मृळ महाँ असि य ईमा देवयुं जनम् ।

इयेथ बर्हिरासदम् ॥१॥

स मानुषीषु दूळभो विक्षु प्रावीरमर्त्यः ।

दूतो विश्वेषां भुवत् ॥२॥

स सद्म परि णीयते होता मन्द्रो दिविष्टिषु ।

उत पोता नि षीदति ॥३॥

उत ग्ना अग्निरध्वर उतो गृहपतिर्दमे ।

उत ब्रह्मा नि षीदति ॥४॥

वेषि ह्यध्वरीयतामुपवक्ता जनानाम् ।

हव्या च मानुषाणाम् ॥५॥

वेषीद्वस्य दूत्यं यस्य जुजोषो अध्वरम् ।

हव्यं मर्तस्य वोळ्हवे ॥६॥

अस्माकं जोष्यध्वरमस्माकं यज्ञमङ्गिरः ।

अस्माकं शृणुधी हवम् ॥७॥

परि ते दूळभो रथोऽस्माँ अश्नोतु विश्वतः ।

येन रक्षसि दाशुषः ॥८॥

## सायणभाष्यम्

‘ अग्ने मृळ 'इत्यष्टर्चं नवमं सूक्तं वामदेवस्यार्षं गायत्रीच्छन्दस्कमग्निदेवताकम् । अनुक्रान्तं च - ' अग्ने मृळ ' इति । द्वितीये छन्दोमे इदं सूक्तं जातवेदस्यनिविद्धानीयम् । सूत्रितं च ‘_ ‘ क्रीळं वः शर्धोऽग्ने मृळेत्याग्निमारुतम्' (आश्व. श्रौ. ८. १०) इति ॥

अग्नें मृ॒ळ म॒हाँ अ॑सि॒ य ई॒मा दें॒व॒युं जनं॑म् ।

इ॒येथं ब॒र्हिरा॒सदं॑म् ॥१

अग्नें । मृ॒ळ । म॒हान् । अ॒सि॒ । यः । ई॒म् । आ । दे॒व॒ऽयुम् । जनं॑म् ।

इ॒येथं । ब॒र्हिः । आ॒ऽसदं॑म् ॥१

अग्ने । मृळ । महान् । असि । यः । ईम् । आ । देवऽयुम् । जनम् ।

इयेथ । बर्हिः । आऽसदम् ॥१

हे “अग्ने "मृळ अस्मान् सुखय । स त्वं “महान् “असि प्रभूतो भवसि । “यः त्वम् “ईम् इमं “देवयुं देवानां कामयितारं “जनं यजमानं “बर्हिः दर्भम् “आसदं यज्ञे आसत्तुम् “आ “इयेथ आगच्छसि ॥

स मानुंषीषु दूळभों वि॒क्षु प्रा॒वीरमंर्त्यः ।

दूतो विश्वेंषां भुवत् ॥२

सः । मानुंषीषु । दुःऽदभः॑ । वि॒क्षु । प्र॒ऽअ॒वीः । अमंर्त्यः ।

दूतः । विश्वेंषाम् । भुव॒त् ॥२

सः । मानुषीषु । दुःऽदभः । विक्षु । प्रऽअवीः । अमर्त्यः ।

दूतः । विश्वेषाम् । भुवत् ॥२

“दूळभः दुर्दभो राक्षसादिना दुर्हिंसः “मानुषीषु मनुसंबन्धिनीषु “विक्षु प्रजासु “प्रावीः प्रकर्षेण गन्ता "अमर्त्यः अमरणधर्मा “सः अग्निः “विश्वेषां सर्वेषां देवानां “दूतः “भुवत् भवतु ॥

स सद्म॒ परि॑ णीयते॒ होता॑ म॒न्द्रो दिवि॑ष्टिषु ।

उ॒त पोता॒ नि षी॑दति ॥३

सः । सद्म॑ । परि॑ । नी॒य॒ते॒ । होता॑ । म॒न्द्रः । दिवि॑ष्टिषु ।

उ॒त । पोता॑ । नि । सी॒द॒ति॒ ॥३

सः । सद्म । परि । नीयते । होता । मन्द्रः । दिविष्टिषु ।

उत । पोता । नि । सीदति ॥३

“सः अग्निः “सद्म यज्ञगृहं “परि “णीयते ऋत्विग्भिः परितो नीयते । नीयमानः सन् “दिविष्टिषु योगेषु “मन्द्रः मदनीयः स्तुत्यः सोऽग्निः “होता च भवति । "उत अपि च “पोता सन् “नि “षीदति यज्ञगृहे उपविशति ।।

उ॒त ग्ना अ॒ग्निर॑ध्व॒र उ॒तो गृ॒हप॑ति॒र्दमे॑ ।

उ॒त ब्र॒ह्मा नि षी॑दति ॥४

उ॒त । ग्नाः । अ॒ग्निः । अ॒ध्व॒रे । उ॒तो इति॑ । गृ॒हऽप॑तिः । दमे॑ ।

उ॒त । ब्र॒ह्मा । नि । सी॒द॒ति॒ ॥४

उत । ग्नाः । अग्निः । अध्वरे । उतो इति । गृहऽपतिः । दमे ।

उत । ब्रह्मा । नि । सीदति ॥४

“उत अपि च "अग्निः “अध्वरे यागे "ग्नाः देवपत्नीर्यजति । यष्टा भवतीत्यर्थः । यद्वा । ग्ना गच्छन् अध्वर्युर्भवति । "उतो अपि च सोऽग्निः "दमे यज्ञगृहे “गृहपतिः यजमानश्च भवति । “उत अपि च “ब्रह्मा ब्राह्मणाच्छंसी सन् “नि “षीदति उपविशति ॥

वेषि॒ ह्यं॑ध्वरीय॒तामुं॑पव॒क्ता जनां॑नाम् ।

ह॒व्या च॒ मानुं॑षाणाम् ॥५

वेषिं । हि । अ॒ध्व॒रि॒ऽय॒ताम् । उ॒प॒ऽव॒क्ता । जनां॑नाम् ।

ह॒व्या । च॒ । मानु॑षाणाम् ॥५

वेषि । हि । अध्वरिऽयताम् । उपऽवक्ता । जनानाम् ।

हव्या । च । मानुषाणाम् ॥५

"अध्वरीयतां यज्ञमिच्छतां "मानुषाणां मनुसंबन्धिनां “जनानां “हव्या “च हव्यानि हवींषि हे अग्ने “वेषि “हि कामयसे खलु । "उपवक्ता अध्वर्युप्रभृतीनां सर्वेषां कर्मणामनुज्ञार्थं ‘ मां प्रणय ' इत्यादिरूपस्य वाक्यस्य वक्ता सन् ब्रह्मा चासि । ‘ ब्रह्मा त्वो वदति जातविद्याम् ' ( ऋ. सं. १०. ७१. ११ ) इति श्रुतेः । उपवक्ता सर्वेषां कर्मणामवैकल्यार्थमुपद्रष्टा वा सदस्योऽसि । ' स हि सप्तदशः कर्मणामुपद्रष्टा भवति' इत्यापस्तम्बेनोक्तत्वात् ॥

वेषीद्व॑स्य दू॒त्यं१॒ यस्य॒ जुजो॑षो अध्व॒रम् ।

ह॒व्यं मर्त॑स्य॒ वोळ्हं॑वे ॥६

वेषि॑ । इत् । ऊ॒ इति॑ । अ॒स्य॒ । दू॒त्यं॑म् । यस्यं॑ । जुजो॑षः ।
अ॒ध्व॒रम् ।

ह॒व्यम् । मर्त॑स्य । वोळ्हं॑वे ॥६

वेषि । इत् । ऊं इति । अस्य । दूत्यम् । यस्य । जुजोषः ।
अध्वरम् ।

हव्यम् । मर्तस्य । वोळ्हवे ॥६

हे अग्ने त्वं “मर्तस्य मनुष्यस्य/“यस्य यजमानस्य “अध्वरं
यागं “हव्यं हविः "वोळ्हवे वोढुम् ॥ वहेर्धातोः ‘तुमर्थे
सेसेनसे ' इति तवेन्प्रत्ययः । ‘ ञ्नित्यादिर्नित्यम्'

इत्याद्युदात्तत्वम् ॥ "जुजोषः सेवेथाः ॥ ‘जुषी प्रीतिसेवनयोः' । लेट्। 'बहुलं छन्दसि ' इति शपः श्लुर्द्विर्भावश्च । 'लेटोऽडाटौ' इत्यडागमः ॥ “अस्य यजमानस्य दूत्यं दूतकर्म “वेषीदु कामयस एव ।।

अ॒स्माकं॑ जोष्यध्व॒रम॒स्माकं॑ य॒ज्ञमं॑ङ्गिरः ।

अ॒स्माकं॑ शृणुधी॒ हवं॑म् ॥७

अ॒स्माकं॑म् । जो॒षि॒ । अ॒ध्व॒रम् । अ॒स्माकं॑म् । य॒ज्ञम् । अ॒ङ्गि॒र॒ः ।

अ॒स्माकं॑म् । शृ॒णु॒धि॒ । हवं॑म् ॥७

अस्माकम् । जोषि । अध्वरम् । अस्माकम् । यज्ञम् । अङ्गिरः ।

अस्माकम् । शृणुधि । हवम् ॥७

हे “अङ्गिरः अग्ने त्वम् “अस्माकम् “अध्वरम् अस्मदीयं यागं “जोषि जुषस्व सेवस्व । “अस्माकम् अस्मदीयं “यज्ञं यजनसाधनं हविश्च जुषस्व । “अस्माकम् अस्मदीयं “हवम् आह्वानरूपं स्तोत्रं च “शृणुधि शृणु ॥ शृणोतेर्लोण्मध्यमैकवचनम् । सिप् । तस्य हिरादेशे ‘ श्रुवः शृ च ' इति धातोः श्नुप्रत्ययः शृभावश्च । ' श्रुशृणुपॄकृवृभ्यश्छन्दसि ' इति हेर्धिरादेशः ॥

परिं ते दू॒ळभो॒ रथो॒ऽस्माँ अंश्नोतु वि॒श्वतः॑ ।

येन॒ रक्षंसि दा॒शुषः॑ ॥८

परिं । ते॒ । दुः॒ऽदभः॑ । रथः॑ । अ॒स्मान् । अ॒श्नो॒तु॒ । वि॒श्वतः॑ ।

येनं । रक्षंसि । दा॒शुषः॑ ॥८

परि । ते । दुःऽदभः । रथः । अस्मान् । अश्नोतु । विश्वतः ।

येन । रक्षसि । दाशुषः ॥८

हे अग्ने त्वं “येन रथेन "विश्वतः विश्वास सर्वासु दिक्षु गच्छन् “दाशुषः हविष्प्रदातॄन् यजमानान् “रक्षसि विघ्नेभ्यः पालयसि । “ते त्वदीयः “दूळभः दुर्दभः दुर्हिंसः सः “रथः “अस्मान् यजमानानु “परि परितः सर्वतः “अश्नोतु व्याप्नोतु ॥ अश्नोतेर्व्यत्ययेन परस्मैपदम् ॥ ॥ ९॥

# ऋग्वेदः सूक्तं ४.१०

ऋग्वेदः - मण्डल ४
← सूक्तं ४.९ | सूक्तं ४.१० | सूक्तं ४.११ →

वामदेवो गौतमः

दे. अग्निः। पदपङ्क्तिः, ४,६,७ उष्णिग्वा, ५ महापङ्क्तिः, ८ उष्णिक्

---

अग्ने तमद्याश्वं न स्तोमैः क्रतुं न भद्रं हृदिस्पृशम् ।

ऋध्यामा त ओहैः ॥१॥

अधा ह्यग्ने क्रतोर्भद्रस्य दक्षस्य साधोः ।

रथीरृतस्य बृहतो बभूथ ॥२॥

एभिर्नो अर्कैर्भवा नो अर्वाङ्स्वर्ण ज्योतिः ।

अग्ने विश्वेभिः सुमना अनीकैः ॥३॥

आभिष्टे अद्य गीर्भिर्गृणन्तोऽग्ने दाशेम ।

प्र ते दिवो न स्तनयन्ति शुष्माः ॥४॥

तव स्वादिष्ठाग्ने संदृष्टिरिदा चिदह्न इदा चिदक्तोः ।

श्रिये रुक्मो न रोचत उपाके ॥५॥

घृतं न पूतं तनूररेपाः शुचि हिरण्यम् ।

तत्ते रुक्मो न रोचत स्वधावः ॥६॥

कृतं चिद्धि ष्मा सनेमि द्वेषोऽग्न इनोषि मर्तात् ।

इत्था यजमानादृतावः ॥७॥

शिवा नः सख्या सन्तु भ्रात्राग्ने देवेषु युष्मे ।

सा नो नाभिः सदने सस्मिन्नूधन् ॥८॥

**सायणभाष्यम्**

‘ अग्ने तमद्य' इत्यष्टर्चं दशमं सूक्तं वामदेवस्यार्षम् आग्नेयम् । तथा चानुक्रमणिका - अग्ने तमद्य पदपाङ्क्तं पञ्चमी महापदपङ्क्तिरन्त्योष्णिक् चतुर्थी षष्ठ्युपान्त्या वा सप्तम्याः पञ्चकौ मुख्यौ तृतीयः सप्तको नवकश्चाष्टम्याः पञ्चकः पादश्चतुष्कः सप्तकस्त्रैष्टुभश्च ' इति । इदं कृत्स्नमपि सूक्तं पदपङ्क्तिच्छन्दस्कं ' पञ्चकाश्चत्वारः षट्कश्चैकश्चतुर्थश्चतुष्को वा पदपङ्क्तिः' इत्युक्तलक्षणोपेतत्वात्। पञ्चमी ' तव स्वादिष्ठा' इत्येषा महापदपङ्क्तिः ‘पञ्च पञ्चकाः षट्कश्चैकः ' इति लक्षणसद्भावात् । अन्त्या शिवा नः सख्या ' इत्येषोष्णिक्छन्दस्का । चतुर्थीषष्ठीसप्तम्यः ‘ आभीष्टे अद्य', ' घृतं न पूतं ', ' कृतं चिद्धि ष्मा ' इत्येतास्तिस्र उष्णिहः पदपङ्क्तयो वा । अत्र सप्तम्यष्टम्योः पदपङ्क्त्युष्णिहोः परिभाषोक्तपादविच्छेदापवादाय

प्रकारान्तरेण विच्छेदः कृतः । दशमेऽहनि इदं सूक्तमाज्यशस्त्रम् । सूत्रितं च- ‘ अग्ने तमद्याश्वं न स्तोमैरित्याज्यम्' (आश्व. श्रौ. ८. १२) इति । पिण्डपितृयज्ञे ' अग्ने तमद्य' इत्यनयाग्निं प्रत्यागच्छेत् । सूत्रितं च - ‘अग्निं प्रत्येयादग्ने तमद्याश्वं न स्तोमैः ' ( आश्व. श्रौ. २. ७ ) इति । पौनराधेयिक्यां स्विष्टकृत्येषैव याज्या । सूत्रितं च - ‘ अग्ने तमद्याश्वं न स्तोमैरिति संयाज्ये ' ( आश्व. श्रौ. २. ८) इति ।।

अग्ने॒ तम॒द्याश्वं॒ न स्तोमैः॒ क्रतुं॒ न भ॒द्रं हृ॑दि॒स्पृशं॑म् ।

ऋ॒ध्यामां त॒ ओहैः॑ ॥१

अग्नें । तम् । अ॒द्य । अश्वंम् । न । स्तोमैः॑ । क्रतुंम् । न । भ॒द्रम् । हृ॒दि॒ऽस्पृशं॑म् ।

ऋ॒ध्यामं । ते॒ । ओहैः ॥१

अग्ने । तम् । अद्य । अश्वम् । न । स्तोमैः । क्रतुम् । न । भद्रम् । हृदिऽस्पृशम् ।

ऋध्याम । ते । ओहैः ॥१

हे “अग्ने “अद्य अस्मिन्नहनि वयमृत्विगादयः "ओहैः इन्द्रादिप्रापकैः “स्तोमैः स्तोत्रसमूहैः “तं प्रसिद्धं “ते त्वाम् “ऋध्याम समर्धयामः । कीदृशं त्वाम् । “अश्वं “न वोढारमश्वमिव तथा हविषो वाहकं “क्रतुं “न कर्तारमिव । उपकर्तारमित्यर्थः । तथा “भद्रं भजनीयं “हृदिस्पृशं हृदयंगमम् । अतिशयेन प्रियमित्यर्थः ॥

पौनराधेयक्यामिष्टौ प्रधानस्य ' अधा ह्यग्ने' इत्येषानुवाक्या । ‘ एभिर्नो अर्कैः' इति तस्यां

स्विष्टकृतोऽनुवाक्या । ' आभिष्टे अद्य ' इति प्रधानस्य याज्या । सूत्रितं च - अधा ह्यग्ने क्रतोर्भद्रस्याभिष्टे अद्य गीर्भिर्गृणन्त एभिर्नो अर्कैः' ( आश्व. श्रौ. २. ८ ) इति ॥

अधा॒ ह्य॑ग्ने॒ क्रतो॑र्भ॒द्रस्य॒ दक्ष॑स्य सा॒धोः ।

र॒थीरृ॒तस्य॑ बृह॒तो ब॒भूथ॑ ॥२

अध॑ । हि । अ॒ग्ने॒ । क्रतोः॑ । भ॒द्रस्य॑ । दक्ष॑स्य । सा॒धोः ।

र॒थीः । ऋ॒तस्य॑ । बृ॒ह॒तः । ब॒भूथ॑ ॥२

अध । हि । अग्ने । क्रतोः । भद्रस्य । दक्षस्य । साधोः ।

रथीः । ऋतस्य । बृहतः । बभूथ ॥२

“अधा “हि इदानीमेव हे “अग्ने त्वं “क्रतोः अस्मदीयस्य यागस्य “रथीः नेता “बभूथ भवसि ॥ ‘ छन्दसि

लुङ्लङ्लिटः' इति भवतेर्वर्तमानेऽर्थे लिटि सिपस्थल्। ‘ आर्धधातुकस्येड्वलादेः ' इतीडागमे प्राप्ते ' बभूथाततन्थ° ' इति निपातनादिडभावः ॥ कीदृशस्य यागस्य । “भद्रस्य भजनीयस्य “दक्षस्य प्रवृद्धस्य “साधोः अभीष्टफलानां साधकस्य “ऋतस्य सत्यभूतस्य “बृहतः महतः ॥

ए॒भिर्नो॑ अ॒र्कैर्भवा॑ नो अ॒र्वाङ्स्व१॒र्ण ज्योतिः॑ ।

अग्ने॒ विश्वे॑भिः सु॒मना॒ अनी॑कैः ॥३

ए॒भिः । न॒ः । अ॒र्कैः । भव॑ । न॒ः । अ॒र्वाङ् । स्वः॑ । न । ज्योतिः॑ ।

अग्ने॑ । विश्वे॑भिः । सु॒ऽमनाः॑ । अनी॑कैः ॥३

एभिः । नः । अर्कैः । भव । नः । अर्वाङ् । स्वः । न । ज्योतिः ।

अग्ने । विश्वेभिः । सुऽमनाः । अनीकैः ॥३

हे “अग्ने “ज्योतिः ज्योतिष्मान् “स्वर्ण सूर्य इव तथा “विश्वेभिः विश्वैः समस्तैः “अनीकैः तेजोभिः “सुमनाः शोभनमनस्कस्त्वं “नः अस्मदीयैः “एभिः एतैः "“अर्कैः अर्चनीयैः स्तोत्रैः "नः अस्माकम् “अर्वाङ् अभिमुखः “भव ॥

आ॒भिष्टे॑ अ॒द्य गी॒र्भिर्गृ॒णन्तोऽग्ने॒ दाशे॑म ।

प्र ते॑ दि॒वो न स्तं॑नयन्ति॒ शुष्मां॑ः ॥४

आ॒भिः । ते॒ । अ॒द्य । गी॒ःऽभिः । गृ॒णन्तः॑ । अग्ने॑ । दाशे॑म ।

प्र । ते॒ । दि॒वः । न । स्त॒न॒य॒न्ति॒ । शुष्माः॑ ॥४

आभिः । ते । अद्य । गीःऽभिः । गृणन्तः । अग्ने । दाशेम ।

प्र । ते । दिवः । न । स्तनयन्ति । शुष्माः ॥४

“अद्य अस्मिन् दिवसे हे “अग्ने “आभिः गीर्भिः स्तुतिरूपाभिर्वाग्भिः “गृणन्तः त्वां स्तुवन्तो वयमृत्विगादयः “ते तुभ्यं “दाशेम हवींषि दद्याम'। “दिवो “न सूर्यस्य रश्मय इव “ते त्वदीयाः “शुष्माः शोधका ज्वालाः “प्र “स्तनयन्ति प्रकर्षेण शब्दायन्ते । यद्वा । दिवो न मेघा इव त्वदीया ज्वालाः शब्दायन्ते ॥

तव॒ स्वादि॒ष्ठाग्ने॒ संदृ॑ष्टिरि॒दा चि॒दह्न॑ इ॒दा चि॑द॒क्तोः ।

श्रि॒ये रु॒क्मो न रो॑चत उपा॒के ॥५

तवं । स्वादिंष्ठा । अग्नें । सम्ऽदृंष्टिः । इ॒दा । चि॒त् । अह्नः॑ । इ॒दा । चि॒त् । अ॒क्तोः ।

श्रि॒ये । रु॒क्मः । न । रो॒च॒ते॒ । उ॒पा॒के ॥५

तव । स्वादिष्ठा । अग्ने । सम्ऽदृष्टिः । इदा । चित् । अह्नः । इदा । चित् । अक्तोः ।

श्रिये । रुक्मः । न । रोचते । उपाके ॥५

हे “अग्ने “स्वादिष्ठा स्वादुतमा प्रियतमा “तव त्वदीया “संदृष्टिः दीप्तिः “अह्नः “इदा “चित् दिवसस्येदानीं च "अक्तोः “इदा “चित् । अक्तुरिति रात्रिनाम ‘शर्वरी अक्तुः ऊर्म्या '(नि. १.७.४) इति रात्रिनामसु पाठात् । रात्रेरिदानीं च । अहोरात्र इत्यर्थः ॥ ‘ अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु ' इत्यस्माद्धातोः ‘ किञ्च' इत्यौणादिकसूत्रेण तुप्रत्ययः तस्य किद्वद्भावश्च । तितुत्र' इतीट्प्रतिषेधः । ‘ अनिदिताम्

। इत्युपधानकारलोपः । ‘ चोः कुः' इति कुत्वम् ॥ “रुक्मो “न अलंकार इव “श्रिये पदार्थमाश्रयितुम् “उपाके अन्तिके। उपाक इत्यन्तिकनाम ‘आके उपाके' (नि. २. १६. ७) इति तन्नामसु पाठात् । “रोचते राजते ॥

घृ॒तं न पू॒तं त॒नूर॑रे॒पाः शुचि॒ हिर॑ण्यम् ।

तत्ते॑ रु॒क्मो न रो॑चत स्वधावः ॥६

घृ॒तम् । न । पू॒तम् । त॒नूः । अ॒रे॒पाः । शुचि॑ । हिर॑ण्यम् ।

तत् । ते॒ । रु॒क्मः । न । रो॒च॒त॒ । स्व॒धा॒ऽव॒ः ॥६

घृतम् । न । पूतम् । तनूः । अरेपाः । शुचि । हिरण्यम् ।

तत् । ते । रुक्मः । न । रोचत । स्वधाऽवः ॥६

हे “स्वधावः । स्वधाशब्दोऽन्नवाची । अन्नवन्नग्ने “पूतं शोधितं “घृतं “न आज्यमिव “तनूः त्वदीया मूर्तिः "अरेपाः पापरहिता भवति । “शुचि शुद्धं “हिरण्यं हितरमणीयं “ते त्वदीयं “तत् प्रसिद्धं तेजः “रुक्मो “न भूषणमिव “रोचत रोचते भासते ॥

कृ॒तं चि॒द्धि ष्मा॒ सनें॑मि॒ द्वेषोऽग्नं इ॒नोषि॒ मर्ता॑त् ।

इ॒त्था यजं॑मानादृतावः ॥७

कृ॒तम् । चि॒त् । हि । स्म॒ । सनें॑मि । द्वेषः॑ । अग्नें । इ॒नोषिं । मर्ता॑त् ।

इ॒त्था । यजं॑मानात् । ऋ॒त॒ऽव॒ः ॥७

कृतम् । चित् । हि । स्म । सनेमि । द्वेषः । अग्ने । इनोषि । मर्तात् ।

इत्था । यजमानात् । ऋतऽवः ॥७

हे “ऋतावः सत्यवन् “अग्ने “कृतं "चित् यजमानेन कृतमपि “सनेमि चिरंतनम् । सनेमीति पुराणनाम ‘ सनेमि पूर्व्यम् ' (नि. ३. २७. ४ ) इति पुराणनामसु पाठात् । "द्वेषः पापं “मर्तात् मनुष्यात् यजमानात् “इत्था सत्यम् । इत्थेति सत्यनामैतत् ' अद्धा इत्था ' ( नि. ३. १०. ५) इति तन्नामसु पाठात् । “इनोषि “हि "स्म प्रेरयस्येव खलु । नाशयसीत्यर्थः ॥

शि॒वा नं॑ः स॒ख्या सन्तुं भ्रा॒त्राग्नें दे॒वेषुं यु॒ष्मे ।

सा नो॒ नाभि॑ः सदंने॒ सस्मि॒न्नूधंन् ॥८

शि॒वा । नः॒ । स॒ख्या । सन्तुं । भ्रा॒त्रा । अग्नें । दे॒वेषुं । यु॒ष्मे इतिं ।

सा । न॒ः । नाभिः॑ । सद॑ने । सस्मि॑न् । ऊध॑न् ॥८

शिवा । नः । सख्या । सन्तु । भ्रात्रा । अग्ने । देवेषु । युष्मे इति ।

सा । नः । नाभिः । सदने । सस्मिन् । ऊधन् ॥८

हे “अग्ने "नः अस्मदीयानि “सख्या सख्यानि सखित्वानि "भ्रात्रा भ्रात्राणि भ्रातृसंबन्धीनि कर्माणि "देवेषु द्योतमानेषु "युष्मे युष्मासु ॥ ‘सुपां सुलुक्' इति सप्तमीबहुवचनस्य शेआदेशः ॥ “शिवा शिवानि “सन्तु मङ्गलानि भवन्तु । “सा सखित्वभ्रातृकर्मसंततिः “सदने देवानां स्थाने “सस्मिन्नूधन् सर्वस्मिन् यज्ञे "नः अस्माकं "नाभिः बन्धनं भवति ॥ ॥ १० ॥ ॥ १ ॥

# ऋग्वेदः सूक्तं ४.११

ऋग्वेदः - मण्डल ४
← सूक्तं ४.१०
सूक्तं ४.११
सूक्तं ४.१२ →
वामदेवो गौतमः

## दे. अग्निः। त्रिष्टुप्

भद्रं ते अग्ने सहसिन्ननीकमुपाक आ रोचते सूर्यस्य ।

रुशद्दृशे ददृशे नक्तया चिदरूक्षितं दृश आ रूपे अन्नम् ॥१॥

वि षाह्यग्ने गृणते मनीषां खं वेपसा तुविजात स्तवानः ।

विश्वेभिर्यद्वावनः शुक्र देवैस्तन्नो रास्व सुमहो भूरि मन्म ॥२॥

त्वदग्ने काव्या त्वन्मनीषास्त्वदुक्था जायन्ते राध्यानि ।

त्वदेति द्रविणं वीरपेशा इत्थाधिये दाशुषे मर्त्याय ॥३॥

त्वद्वाजी वाजम्भरो विहाया अभिष्टिकृज्जायते सत्यशुष्मः ।

त्वद्रयिर्देवजूतो मयोभुस्त्वदाशुर्जूजुवाँ अग्ने अर्वा ॥४॥

त्वामग्ने प्रथमं देवयन्तो देवं मर्ता अमृत मन्द्रजिह्वम् ।

द्वेषोयुतमा विवासन्ति धीभिर्दमूनसं गृहपतिममूरम् ॥५॥

आरे अस्मदमतिमारे अंह आरे विश्वां दुर्मतिं यन्निपासि ।

दोषा शिवः सहसः सूनो अग्ने यं देव आ चित्सचसे स्वस्ति ॥६॥

## सायणभाष्यम्

द्वितीयेऽनुवाके एकादश सूक्तानि । तत्र 'भद्रं ते' इति षडृचं प्रथमं सूक्तं वामदेवस्यार्षं त्रिष्टुप्छन्दस्कमग्निदेवताकम् । ' भद्रं षट् ' इत्यनुक्रमणिका । प्रातरनुवाकाश्विनशस्त्रयोराग्नेये क्रतौ

त्रैष्टुभे छन्दसीदमादिके द्वे सूक्ते विनियुक्ते । तथा च सूत्रितं- ‘भद्रं ते अग्न इति सूक्ते ' ( आश्व. श्रौ. ४. १३) इति ।

भ॒द्रं तें अग्ने सहसि॒न्ननींकमुपा॒क आ रोंचत॒े सूर्यंस्य ।

रुशंद्दृ॒शे दंदृशे नक्त॒या चि॒दरूंक्षितं दृ॒श आ रू॒पे अन्नंम् ॥१

भ॒द्रम् । त॒े । अ॒ग्ने॒ । स॒ह॒सि॒न् । अनींकम् । उ॒पा॒के । आ । रो॒च॒ते॒ । सूर्यंस्य ।

रुशंत् । दृ॒शे । द॒दृ॒शे॒ । न॒क्त॒ऽया । चि॒त् । अरूंक्षितम् । दृ॒शे । आ । रू॒पे । अन्नंम् ॥१

भद्रम् । ते । अग्ने । सहसिन् । अनीकम् । उपाके । आ । रोचते । सूर्यस्य ।

रुशत् । दृशे । ददृशे । नक्तऽया । चित् । अरूक्षितम् । दृशे । आ । रूपे । अन्नम् ॥१

हे “सहसिन् बलवन् “अग्ने “ते त्वदीयं "भद्रं भजनीयम् “अनीकं तेजः “सूर्यस्य “उपाके समीपभूते । दिवसे इत्यर्थः । “आ “रोचते समन्ताद्दीप्यते । “रुशत् रोचमानं “दृशे दर्शनीयं तेजः “नक्तया "चित् रात्रावपि “ददृशे दृश्यते । आ इत्ययं शब्दः चेत्यर्थे वर्तते । “आ किंच "अरूक्षितं स्निग्धं “दृशे दर्शनीयम् “अन्नं पुरोडाशादिरूपं हविः “रूपे रूपवति त्वयि ऋत्विगादिभिः हुतं भवति ॥

वि षां॑ह्यग्ने गृण॒ते मं॑नी॒षां खं वेपं॑सा तुविजात॒ स्तवा॑नः ।

विश्वे॑भि॒र्यद्वा॒वनः॑ शुक्र दे॒वैस्तन्नो॑ रास्व सुमहो॒ भूरि॒ मन्म॑ ॥२

वि । सा॒हि॒ । अ॒ग्ने॒ । गृ॒ण॒ते । म॒नी॒षाम् । खम् । वेपं॑सा ।
तु॒वि॒ऽजा॒त॒ । स्तवा॑नः ।

विश्वे॑भिः । यत् । व॒वनः॑ । शु॒क्र॒ । दे॒वैः । तत् । न॒ः । रा॒स्व॒ ।
सु॒ऽम॒ह॒ः । भूरिं॑ । मन्मं॑ ॥२

वि । साहि । अग्ने । गृणते । मनीषाम् । खम् । वेपसा ।
तुविऽजात । स्तवानः ।

विश्वेभिः । यत् । ववनः । शुक्र । देवैः । तत् । नः । रास्व ।
सुऽमहः । भूरि । मन्म ॥२

हे "तुविजात मथनेन अरणिद्वारा यज्ञादिकर्मसु बहुजन्मन् "अग्ने "स्तवानः ऋत्विगादिभिः स्तूयमानस्त्वं "वेपसा यज्ञादिकर्मणा । वेप इति कर्मनाम 'वेषः वेपः विष्ट्वी ' ( नि. २. १. ५) इति कर्मनामसु पाठात् । "मनीषां स्तुतिं "गृणते कुर्वते यजमानाय “खं यजमानप्राप्यस्य

पुण्यलोकस्य द्वारं "वि "षाहि विष्य । विमुञ्चेत्यर्थः ॥ ‘षोऽन्तकर्मणि' इत्यस्माद्धातोर्लोण्मध्यमपुरुषैकवचनं सिप् । ‘दिवादिभ्यः श्यन्'। तस्य ‘ बहुलं छन्दसि' इति लुक् । ‘ आदेच उपदेशेऽशिति' इत्यात्वम् । सेर्हिरादेशः।' तिङ्ङतिङः' इति निघातः ॥ हे "शुक्र दीप्यमानाग्ने त्वं "विश्वेभिः विश्वैः सर्वैः ॥ ‘ बहुलं छन्दसि ' इति भिस ऐसभावः ॥ "देवैः इन्द्रादिभिः सह "यत् पश्वादिधनं “ववनः यजमानेभ्यः प्रयच्छेः ॥ वनतेर्लेट् । तस्य सिपः ‘इतश्च लोपः” इति इकारलोपः । ‘ बहुलं छन्दसि' इति विकरणस्य श्लुः । ‘ श्लौ ' इति द्विर्वचनम् । हलादिशेषः। 'लेटोऽडाटौ ' इत्यडागमः । ‘ यद्वृत्तान्नित्यम्' इति निघाताभावः ॥ हे "सुमहः शोभनतेजस्काग्ने “भूरि प्रभूतं "मन्म मननीयं “तत् धनं "नः अस्मभ्यं "रास्व देहि ।।

महापितृयज्ञे स्विष्टकृदग्निः कव्यवाहनो यष्टव्यः । तस्य द्वे

अनुवाक्ये । तत्र ‘ त्वदग्ने काव्या' इति द्वितीयानुवाक्या । तथा च सूत्रितं - त्वदग्ने काव्या त्वन्मनीषाः स प्रत्नथा सहसा जायमानः ' (आश्व. श्रौ. २. १९ ) इति ॥

त्वद॑ग्ने॒ काव्या॒ त्वन्म॑नी॒षास्त्वदु॒क्था जा॑यन्ते॒ राध्या॑नि ।

त्वदे॑ति॒ द्रवि॑णं वी॒रपे॑शा इ॒त्थाधि॑ये दा॒शुषे॒ मर्त्या॑य ॥३

त्वत् । अ॒ग्ने॒ । काव्या॑ । त्वम् । म॒नी॒षाः । त्वत् । उ॒क्था । जा॒य॒न्ते॒ । राध्या॑नि ।

त्वत् । ए॒ति॒ । द्रवि॑णम् । वी॒रऽपे॑शाः । इ॒त्थाऽधि॑ये । दा॒शुषे॑ । मर्त्या॑य ॥३

त्वत् । अग्ने । काव्या । त्वम् । मनीषाः । त्वत् । उक्था । जायन्ते । राध्यानि ।

त्वत् । एति । द्रविणम् । वीरऽपेशाः । इत्थाऽधिये । दाशुषे । मर्त्याय ॥३

हे अग्ने "काव्या काव्यानि हविर्वहनदेवतानयनादीन्यग्निसंबन्धीनि कर्माणि आध्वर्यवाणि कर्माणि वा “त्वत् त्वत्तः "जायन्ते उत्पद्यन्ते । "मनीषाः स्तुतिरूपा वाचः “त्वत् एव जायन्ते । "राध्यानि राद्धुं योग्यानि "उक्था उक्थानि शस्त्राणि “त्वत् त्वत्तो जायन्ते । "इत्थाधिये। धीरिति कर्मनाम । इत्थेति सत्यनामसु पाठात् सत्यकर्मणे "दाशुषे हवींषि दत्तवते “मर्त्याय मनुष्याय यजमानाय “वीरपेशाः । पेश इति रूपनाम । इदं विक्रान्तरूपम् । अत्र लिङ्गव्यत्ययेन वीरपेशा इति रूपम् । “द्रविणं पश्वादिधनं “त्वत् त्वत्तः “एति निर्गच्छति । उत्पद्यत इत्यर्थः ॥

त्वद्वा॒जी वा॑जम्भ॒रो विहा॑या अभिष्टि॒कृज्जा॑यते स॒त्यशु॑ष्मः ।

त्वद्र॒यिर्दे॒वजू॑तो मयो॒भुस्त्वदा॒शुर्जू॑जु॒वाँ अ॑ग्ने॒ अर्वा॑ ॥४

त्वत् । वा॒जी । वा॒ज॒म्ऽभ॒रः । विऽहा॑याः । अ॒भि॒ष्टि॒ऽकृत् । जा॒य॒ते॒ । स॒त्यऽशु॑ष्मः ।

त्वत् । र॒यिः । दे॒वऽजू॑तः । म॒यः॒ऽभुः । त्वत् । आ॒शुः । जू॒जु॒ऽवान् । अ॒ग्ने॒ । अर्वा॑ ॥४

त्वत् । वाजी । वाजम्ऽभरः । विऽहायाः । अभिष्टिऽकृत् । जायते । सत्यऽशुष्मः ।

त्वत् । रयिः । देवऽजूतः । मयःऽभुः । त्वत् । आशुः । जूजुऽवान् । अग्ने । अर्वा ॥४

हे "अग्ने “वाजी बलवान् "वाजंभरः हविर्लक्षणान्नस्य वाहकः । अग्नेर्वाजंभर इत्येषा वैदिकी संज्ञा ॥ ‘ संज्ञायां भृतॄवृजि ' इति वाजशब्दे कर्मण्युपपदे खच्प्रत्ययः । ‘ अरुर्विस षदजन्तस्य ' इति मुमागमः । ‘ चितः' इत्यन्तोदात्तत्वम् ॥ “विहायाः महान् "अभिष्टिकृत् यज्ञकृत् अभ्येषणकृत् वा । “सत्यशुष्मः सत्यबलः पुत्रः “त्वत् त्वत्तः "जायते उत्पद्यते । "देवजूतः देवैः प्रेरितः "मयोभुः सुखप्रदः । मय इति सुखनामैतत् । "रयिः धनं "त्वत् जायते । "आशुः शीघ्रगामी । अप्रतिहतगमन इत्यर्थः । 'जूजुवान् वेगेन गच्छन् "अर्वा अश्वः “त्वत् भवतो जायते ।।

त्वामं॑ग्ने प्रथ॒मं दे॑व॒यन्तो॑ दे॒वं मर्ता॑ अमृत म॒न्द्रजिं॑ह्वम् ।

द्वे॒षो॒युत॒मा विं॑वासन्ति धी॒भिर्दमूं॑नसं गृ॒हप॑तिं॒ममूं॑रम् ॥५

त्वाम् । अ॒ग्ने॒ । प्र॒थ॒मम् । दे॒व॒ऽयन्तः॑ । दे॒वम् । मर्ता॑ः ।
अ॒मृ॒त॒ । म॒न्द्रऽजि॑ह्वम् ।

द्वे॒षः॒ऽयुत॑म् । आ । वि॒वा॒स॒न्ति॒ । धी॒भिः । दमू॑नसम् ।
गृ॒हऽप॑तिम् । अमू॑रम् ॥५

त्वाम् । अग्ने । प्रथमम् । देवऽयन्तः । देवम् । मर्ता ।
अमृत । मन्द्रऽजिह्वम् ।

द्वेषःऽयुतम् । आ । विवासन्ति । धीभिः । दमूनसम् ।
गृहऽपतिम् । अमूरम् ॥५

हे "अमृत अमरणशील "अग्ने "देवयन्तः देवानिच्छन्तः "मर्ताः मर्त्याः मनुष्या यजमानाः “त्वां “धीभिः स्तुतिभिः कर्मभिर्वा “आ “विवासन्ति समन्तात् परिचरन्ति । कीदृशं त्वाम् । "प्रथम देवानाम् आद्यं "देवं द्योतमानं 'मन्द्रजिह्वम् । देवानां मादयित्री जिह्वा यस्य तम्। “द्वेषोयुतं द्वेषसां

पापानां पृथक्कर्तारं "दमूनसं रक्षसां दमनकरेण मनसोपेतम् । दमूनःशब्दस्य कथमयमर्थं इति दमूना दममना वा दानमना वा दान्तमना वापि वा दम इति गृहनाम तन्मनाः स्यात् ' ( निरु. ४. ४ ) इति यास्केनोक्तत्वात् इति ॥ ' दमु उपशमे । दमेरूनसिः' इत्यौणादिक ऊनसिप्रत्ययः ॥ "गृहपतिं गृहाणां पालयितारम् "अमूरम् अमूढम् । प्रगल्भमित्यर्थः ॥

स्वस्त्ययन्याम् 'आरे अस्मत्' इति स्वस्तिमतोऽग्नेर्याज्या । सूत्रितं च - आरे अस्मदमतिमारे अंहः ' ( आश्व. श्रौ. २. १०) इति ॥

आ॒रे अ॒स्मदमंतिमा॒रे अंहं आ॒रे विश्वां दु॒र्म॒तिं यन्नि॒पासिं ।

दो॒षा शि॒वः संहसः सूनो अग्ने॒ यं दे॒व आ चि॒त्सचंसे स्व॒स्ति ॥६

आ॒रे । अ॒स्मत् । अमं॑तिम् । आ॒रे । अंहः॑ । आ॒रे । विश्वा॑म् । दुः॒ऽम॒तिम् । यत् । नि॒ऽपासि॑ ।

दो॒षा । शि॒वः । स॒ह॒सः॒ । सू॒नो॒ इति॑ । अ॒ग्ने॒ । यम् । दे॒वः । आ । चि॒त् । सचं॑से । स्व॒स्ति ॥६

आरे । अस्मत् । अमतिम् । आरे । अंहः । आरे । विश्वाम् । दुःऽमतिम् । यत् । निऽपासि ।

दोषा । शिवः । सहसः । सूनो इति । अग्ने । यम् । देवः । आ । चित् । सचसे । स्वस्ति ॥६

हे "सहसः "सूनो बलस्य पुत्र। मथ्यमानोऽग्निर्मथनकारिणां हि बलेन जायते इत्यग्नेर्बलपुत्रत्वम् । हे "अग्ने "दोषा रात्रौ "शिवः शिवकरः “देवः द्योतमानस्त्वं "यं यानस्मान् "स्वस्ति अविनाशाय “आ “सचसे परितः सेवसे । “चित् इति

पूरणः । "यत् यस्मात् कारणात् "निपासि यजमानान् नितरां पालयसि । तेभ्यः "अस्मत् अस्मत्तः "अमतिं पापरूपामशनेच्छाम् "आरे दूरे कुरु ।' अशनाया वै पाप्मामतिः ' (ऐ. ब्रा. २. २ ) इति ब्राह्मणम् । "आरे दूरेऽस्मत्तः "अंहः पापं कुरु । आरे इति दूरनामैतत् । अस्मत्तः "आरे दूरे "विश्वां सर्वां "दुर्मतिं दुर्मनस्त्वं कुरु ॥ ॥ ११ ॥

# ऋग्वेदः सूक्तं ४.१२


← सूक्तं ४.११ | ऋग्वेदः - मण्डल ४ सूक्तं ४.१२ वामदेवो गौतमः | सूक्तं ४.१३ →


## दे. अग्निः। त्रिष्टुप्

यस्त्वामग्न इनधते यतस्रुक्त्रिस्ते अन्नं कृणवत्सस्मिन्नहन् ।

स सु द्युम्नैरभ्यस्तु प्रसक्षत्तव क्रत्वा जातवेदश्चिकित्वान् ॥१॥

इध्मं यस्ते जभरच्छश्रमाणो महो अग्ने अनीकमा सपर्यन् ।

स इधानः प्रति दोषामुषासं पुष्यन्रयिं सचते घ्नन्नमित्रान् ॥२॥

अग्निरीशे बृहतः क्षत्रियस्याग्निर्वाजस्य परमस्य रायः ।

दधाति रत्नं विधते यविष्ठो व्यानुषङ्गर्त्याय स्वधावान् ॥३॥

यच्चिद्धि ते पुरुषत्रा यविष्ठाचित्तिभिश्चकृमा कच्चिदागः ।

कृधी ष्वस्माँ अदितेरनागान्व्येनांसि शिश्रथो विष्वगग्ने ॥४॥

महश्चिदग्न एनसो अभीक ऊर्वाद्देवानामुत मर्त्यानाम् ।

मा ते सखायः सदमिद्रिषाम यच्छा तोकाय तनयाय शं योः ॥५॥

यथा ह त्यद्वसवो गौर्यं चित्पदि षितामममुञ्चता यजत्राः ।

एवो ष्वस्मन्मुञ्चता व्यंहः प्र तार्यग्ने प्रतरं न आयुः ॥६॥

## सायणभाष्यम्

“यस्त्वामग्ने ' इति षड्ऋचं द्वितीयं सूक्तम् । वामदेव ऋषिः । त्रैष्टुभं छन्दः । अग्निर्देवता । ‘ यस्त्वाम्' इत्यनुक्रान्तम् । प्रातरनुवाकाश्विनशस्त्रयोः पूर्वसूक्तेन सहोक्तो विनियोगः ॥

यस्त्वामंग्न इ॒नधंते य॒तस्त्रु॑क्त्रिस्ते॒ अन्नं कृ॒णव॒त्सस्मि॒न्नहंन् ।

स सु द्यु॒म्नैर॒भ्यंस्तु प्र॒सक्ष॒त्तव॒ क्रत्वां जातवेदश्चिकि॒त्वान् ॥
१

यः । त्वाम् । अ॒ग्ने॒ । इ॒नधंते । य॒तऽस्त्रुंक् । त्रिः । ते॒ ।
अन्नंम् । कृ॒णवंत् । सस्मिंन् । अहंन् ।

सः । सु । द्यु॒म्नैः । अ॒भि । अ॒स्तु॒ । प्र॒ऽसक्षंत् । तवं ।
क्रत्वां । जा॒त॒ऽवे॒दः॒ । चि॒कि॒त्वान् ॥१

यः । त्वाम् । अग्ने । इनधते । यतऽस्त्रुक् । त्रिः । ते ।
अन्नम् । कृणवत् । सस्मिन् । अहन् ।

सः । सु । द्युम्नैः । अभि । अस्तु । प्रऽसक्षत् । तव ।
क्रत्वा । जातऽवेदः । चिकित्वान् ॥१

हे "अग्ने “यतस्रुक् स्रुचा संबद्धः "यः यजमानः “त्वाम् "इनधते दीप्तियुक्तं कुर्यात् । यः “सस्मिन्नहन् सर्वस्मिन्नहनि "ते तुभ्यं "त्रिः त्रिवारं सवनत्रये "अन्नं हविर्लक्षणमन्नं "कृणवत् कुर्यात् । हे "जातवेदः जातानां वेदितरग्ने “तव तोषकेण “क्रत्वा इन्धनादिहेतुना कर्मणा “प्रसक्षत् प्रसहमानं त्वदीयं तेजः "चिकित्वान् जानन् "सः यजमानः “द्युम्नैः धनैर्यशोभिर्वा "सु अत्यन्तम् "अभ्यस्तु शत्रून् अभिभवतु ॥

इ॒ध्मं यस्ते॑ ज॒भर॑च्छश्रमा॒णो म॒हो अ॑ग्ने॒ अनी॑क॒मा सं॑प॒र्यन् ।

स इ॑धा॒नः प्रति॑ दो॒षामु॒षासं॑ पुष्यं॑न्र॒यिं सं॑चते॒ घ्नन्न॒मित्रा॑न् ॥ २

इ॒ध्मम् । यः । ते॒ । ज॒भर॑त् । शु॒श्रु॒मा॒णः । म॒हः । अ॒ग्ने॒ । अनी॑कम् । आ । स॒प॒र्यन् ।

सः । इ॒धा॒नः । प्रति॑ । दो॒षाम् । उ॒षस॑म् । पुष्य॑न् । र॒यिम् । स॒च॒ते॒ । घ्नन् । अ॒मित्रा॑न् ॥२

इध्मम् । यः । ते । जभरत् । शश्रमाणः । महः । अग्ने । अनीकम् । आ । सपर्यन् ।

सः । इधानः । प्रति । दोषाम् । उषसम् । पुष्यन् । रयिम् । सचते । घ्नन् । अमित्रान् ॥२

हे "अग्ने यः यजमानः “ते तुभ्यम् “इध्मं होमसाधनं समिज्जातं "जभरत् आहरेत् ॥ ' हृञ् हरणे '। लिङर्थे लेट् । तस्य तिपः ‘ इतश्च लोपः' इति इकारलोपः । ‘ बहुलं छन्दसि ' इति शपः श्लुः । द्विर्वचनादिकार्यम् । ‘लेटोऽडाटौ ' इत्यडागमः । ‘ हृग्रहोर्भः ' इति भत्वम् ॥

"शश्रमाणः इध्माद्याहरणे श्राम्यन् "महः महतः तव “आ “अनीकम् । आकारश्चार्थे। तेजश्च "सपर्यन् परिचरन् यो यजमानः "दोषां “प्रति रात्रिं लक्षीकृत्य “उषसं प्रति उषःकालं च लक्षीकृत्य । कालद्वयेऽपीत्यर्थः । “इधानः इन्धानस्त्वां दीप्तियुक्तं करोति “पुष्यन् प्रजाभिः पशुभिश्च पुष्टः सन् "सः यजमानः “अमित्रान् शत्रून् “घ्नन् हिंसन् “रयिं धनं "सचते सेवते । सर्वदा पश्वादिधनसमृद्धो भवतीत्यर्थः ॥

अ॒ग्निरी॑शे बृह॒तः क्ष॒त्रिय॑स्या॒ग्निर्वाज॑स्य प॒रमस्य॑ रा॒यः ।

दधा॑ति॒ रत्नं॑ विध॒ते यवि॑ष्ठो॒ व्या॑नु॒षङ्मर्त्या॑य स्व॒धावा॑न् ॥३

अ॒ग्निः । ई॒शे॒ । बृ॒ह॒तः । क्ष॒त्रिय॑स्य । अ॒ग्निः । वाज॑स्य । प॒र॒मस्य॑ । रा॒यः ।

दधाति । रत्नम् । वि॒ध॒ते । यविष्ठः । वि । आ॒नु॒षक् ।
मर्त्याय । स्व॒धाऽवान् ॥३

अग्निः । ईशे । बृहतः । क्षत्रियस्य । अग्निः । वाजस्य ।
परमस्य । रायः ।

दधाति । रत्नम् । विधते । यविष्ठः । वि । आनुषक् ।
मर्त्याय । स्वधाऽवान् ॥३

“अग्निः "बृहतः महतः "क्षत्रियस्य बलस्य "ईशे ईश्वरः भवति ॥ वर्तमानेऽर्थे लिट् ॥ किंच “अग्निः "परमस्य उत्कृष्टस्य “वाजस्य अन्नस्य "रायः पश्वादेर्धनस्य चेशे। "यविष्ठः युवतमः "स्वधावान् अन्नवान् तेजस्वी वाग्निः “विधते परिचरते । विधतिः परिचरणकर्मा' इति यास्कः । "मर्त्याय मनुष्याय यजमानाय "रत्नं रमणीयं धनम् "आनुषक् अनुषक्तं "वि "दधाति करोति ॥

यच्चि॒द्धि तें पुरुष॒त्रा यंवि॒ष्ठाचिंत्तिभिश्चकृ॒मा कच्चि॒दागंः
।

कृ॒धी ष्व१॒॑स्माँ अदिंते॒रनांगा॒न्व्येनांसि शिश्रथो॒ विष्वंगग्ने
॥४

यत् । चि॒त् । हि । ते॒ । पु॒रु॒ष॒ऽत्रा । य॒वि॒ष्ठ॒ । अचिंत्तिऽभिः
। च॒कृ॒म । कत् । चि॒त् । आगंः ।

कृ॒धि । सु । अ॒स्मान् । अदिंतेः । अनांगान् । वि । एनांसि
। शि॒श्र॒थ॒ः । विष्वंक् । अ॒ग्ने॒ ॥४

यत् । चित् । हि । ते । पुरुषऽत्रा । यविष्ठ । अचित्तिऽभिः
। चकृम । कत् । चित् । आगः ।

कृधि । सु । अस्मान् । अदितेः । अनागान् । वि । एनांसि
। शिश्रथः । विष्वक् । अग्ने ॥४

हे "यविष्ठ युवतम "अग्ने "यच्चिद्धि यद्यपि खलु "ते त्वदीयेषु "पुरुषत्रा परिचारकेषु पुरुषेषु “अचित्तिभिः अज्ञानैः "कच्चिदागः किंचिदपि पापं वयं 'चकृम तथापि हे अग्ने "अस्मान् "अदितेः भूमेः "अनागान् अनागसः पापरहितान् "सु अत्यन्तं "कृधि कुरु। हे अग्ने "विष्वक् सर्वतो विद्यमानानि “एनांसि अस्माभिः कृतानि पापानि “वि “शिश्रथः विश्लथय शिथिलीकुरु ॥

म॒हश्चि॑दग्न॒ एन॑सो अ॒भीक॑ ऊ॒र्वाद्दे॒वाना॑मु॒त मर्त्या॑नाम् ।

मा ते॒ सखा॑य॒ः सद॒मिद्रि॑षाम॒ यच्छा॑ तो॒काय॒ तन॑याय॒ शं योः ॥५

म॒हः । चि॒त् । अ॒ग्ने॒ । एन॑सः । अ॒भीके॑ । ऊ॒र्वात् । दे॒वाना॑म् । उ॒त । मर्त्या॑नाम् ।

मा । ते॒ । सखा॑यः । सद॑म् । इत् । रि॒षा॒म॒ । यच्छ॑ ।
तो॒काय॑ । तन॑याय । शम् । योः ॥५

महः । चित् । अग्ने । एनसः । अभीके । ऊर्वात् ।
देवानाम् । उत । मर्त्यानाम् ।

मा । ते । सखायः । सदम् । इत् । रिषाम । यच्छ ।
तोकाय । तनयाय । शम् । योः ॥५

हे "अग्ने "देवानाम् इन्द्रादीनाम् “उत अपि च "मर्त्यानां मनुष्याणाम् "अभीके अन्तिके । अभीक इत्यन्तिकनामैतत् । अस्माभिर्यत्पापं कृतं "महश्चित् महतोऽपि “ऊर्वात् विस्तृतादस्मात् “एनसः पापात् "ते त्वदीयाः "सखायः मित्रभूताः स्तोतारो वयं "सदमित् सर्वदैव “मा “रिषाम मा हिंसिता भूम । हे अग्ने त्वं “तोकाय पुत्राय “तनयाय पौत्राय “शं पापरूपोपद्रवाणां शान्तिं “योः सुकृतोत्पादितं सुखं च "यच्छ देहि ।।

यथा॑ ह॒ त्यद्व॑सवो गौ॒र्यं॑ चित्प॒दि षि॒ताममु॑ञ्चता यजत्राः ।

ए॒वो ष्व१॒॑स्मन्मु॑ञ्चता॒ व्यंह॒ः प्र ता॑र्यग्ने प्रत॒रं न॒ आयु॑ः ॥
६

यथा॑ । ह॒ । त्यत् । व॒स॒व॒ः । गौ॒र्य॑म् । चि॒त् । प॒दि । सि॒ताम्
। अमु॑ञ्चत । य॒ज॒त्रा॒ः ।

ए॒वो इति॑ । सु । अ॒स्मत् । मु॒ञ्च॒त॒ । वि । अंह॑ः । प्र । ता॒रि॒
। अ॒ग्ने॒ । प्र॒ऽत॒रम् । न॒ः । आयु॑ः ॥६

यथा । ह । त्यत् । वसवः । गौर्यम् । चित् । पदि । सिताम्
। अमुञ्चत । यजत्राः ।

एवो इति । सु । अस्मत् । मुञ्चत । वि । अंहः । प्र । तारि
। अग्ने । प्रऽतरम् । नः । आयुः ॥६

“यजत्राः यजनीयाः पूजार्हा हे "वसवः निवासयितारः अग्नयः यूयं "यथा “ह यथैव "त्यत् त्यां तां "पदि पादे “सितां बद्धां "गौर्यं "चित् गौरीं गामपि “अमुञ्चत त्यक्तवन्तो भूयास्त । "एवो एवमेव "अस्मत् अस्मत्तः "अंहः पापं "सु अत्यन्तं "वि “मुञ्चत विमुक्तं कुरुत । बहुवचनं पूजार्थम् । हे “अग्ने त्वया "प्रतरं प्रवृद्धं "नः अस्मदीयम् "आयुः “प्र “तारि प्रवृद्धं क्रियताम् ॥ ॥ १२ ॥

# ऋग्वेदः सूक्तं ४.१३



## दे. अग्निः(लिङ्गोक्तदेवता इति एके)। त्रिष्टुप्

प्रत्यग्निरुषसामग्रमख्यद्विभातीनां सुमना रत्नधेयम् ।

यातमश्विना सुकृतो दुरोणमुत्सूर्यो ज्योतिषा देव एति ॥१॥

ऊर्ध्वं भानुं सविता देवो अश्रेद्द्रप्सं दविध्वद्गविषो न सत्वा ।

अनु व्रतं वरुणो यन्ति मित्रो यत्सूर्यं दिव्यारोहयन्ति ॥२॥

यं सीमकृण्वन्तमसे विपृचे ध्रुवक्षेमा अनवस्यन्तो अर्थम् ।

तं सूर्यं हरितः सप्त यह्वी स्पशं विश्वस्य जगतो वहन्ति ॥३॥

वहिष्ठेभिर्विहरन्यासि तन्तुमवव्ययन्नसितं देव वस्म ।

दविध्वतो रश्मयः सूर्यस्य चर्मेवावाधुस्तमो अप्स्वन्तः ॥४॥

अनायतो अनिबद्धः कथायं न्यङ्ङुत्तानोऽव पद्यते न ।

कया याति स्वधया को ददर्श दिवः स्कम्भः समृतः पाति नाकम् ॥५॥

## सायणभाष्यम्

‘ प्रत्यग्निः' इति पञ्चर्चं तृतीयं सूक्तं वामदेवस्यार्षं त्रैष्टुभमाग्नेयं तत्तन्मन्त्रवर्णाभिधेयोषःप्रभृतिदैवतं वा । तथा चानुक्रान्त- प्रत्यग्निः पञ्च लिङ्गोक्तदैवतं त्वेके ' इति । लैङ्गिको विनियोगः ॥

प्रत्य॒ग्निरु॒षसा॒मग्रं॑मख्यद्विभाती॒नां सु॒मना॑ रत्न॒धेयं॑म् ।

या॒तमं॑श्विना सु॒कृतो॑ दुरो॒णमुत्सूर्यो॒ ज्योतिं॑षा दे॒व एं॑ति ॥१

प्रतिं । अ॒ग्निः । उ॒षसा॑म् । अग्रं॑म् । अ॒ख्य॒त् ।
वि॒ऽभा॒ती॒नाम् । सु॒ऽमनाः॑ । र॒त्न॒ऽधेयं॑म् ।

या॒तम् । अ॒श्वि॒ना॒ । सु॒ऽकृतः॑ । दु॒रो॒णम् । उत् । सूर्यः॑ ।
ज्योतिं॑षा । दे॒वः । ए॒ति॒ ॥१

प्रति । अग्निः । उषसाम् । अग्रम् । अख्यत् ।
विऽभातीनाम् । सुऽमनाः । रत्नऽधेयम् ।

यातम् । अश्विना । सुऽकृतः । दुरोणम् । उत् । सूर्यः ।
ज्योतिषा । देवः । एति ॥१

“सुमनाः शोभनमनस्कः "अग्निः "विभातीनां व्युच्छन्तीनाम् “उषसाम् उषोदेवतानां "रत्नधेयं रत्नधानम् । धनप्रकाशकमित्यर्थः । "अग्रं “प्रति पूर्वकालं लक्षीकृत्य “अख्यतः प्रवृद्धो भवति । हे "अश्विना अश्विनौ युवां "सुकृतः यजमानस्य "दुरोणं गृहम् । दुरोणे' इति गृहनाम ‘दुरोणे दुर्याः । (नि. ३. ४. ७ ) इति गृहनामसु पाठात् । "यातं गच्छतम् । "सूर्यः ऋत्विगादीनां प्रेरकः "देवः “ज्योतिषा स्वेन तेजसा “उत् "एति उषःकाले प्रादुर्भवतीत्यर्थः ॥

ऊ॒र्ध्वं भा॒नुं स॑वि॒ता दे॒वो अ॑श्रेद्द्र॒प्सं दवि॑ध्वद्गवि॒षो न सत्वा॑ ।

अनु॑ व्र॒तं वरु॑णो यन्ति मि॒त्रो यत्सूर्यं॑ दि॒व्यां॑रो॒हयं॑न्ति ॥२

ऊ॒र्ध्वम् । भा॒नुम् । स॒वि॒ता । दे॒वः । अ॒श्रे॒त् । द्र॒प्सम् ।
दवि॑ध्वत् । गो॒ऽइ॒षः । न । सत्वा॑ ।

अनु॑ । व्र॒तम् । वरु॑णः । य॒न्ति॒ । मि॒त्रः । यत् । सूर्य॑म् ।
दि॒वि । आ॒ऽरो॒हय॑न्ति ॥२

ऊर्ध्वम् । भानुम् । सविता । देवः । अश्रेत् । द्रप्सम् ।
दविध्वत् । गोऽइषः । न । सत्वा ।

अनु । व्रतम् । वरुणः । यन्ति । मित्रः । यत् । सूर्यम् ।
दिवि । आऽरोहयन्ति ॥२

“सविता प्रेरकः "देवः “ऊर्ध्वम् उन्मुखं "भानुम् "अश्रेत् आश्रयति । "यत् यदा रश्मयः “सूर्यं "दिवि द्युलोके "आरोहयन्ति आरोहणं कारयन्ति तदा "वरुणः रात्र्यभिमानी देवः "मित्रः अहरभिमानी, अन्ये देवाश्च “व्रतं तत्संबन्धि कर्म “अनु "यन्ति अनुगच्छन्ति । अनुगमने

दृष्टान्त उच्यते । "द्रप्सं पार्थिवं रजः "दविध्वत् धुन्वन् । विकिरन्नित्यर्थः। "गविषः गा इच्छन् "सत्वा "न वृषभ इव तद्वत् ॥

यं सी॒मकृं॑ण्व॒न्तमं॑से वि॒पृचं॑ ध्रु॒वक्षें॑मा॒ अनं॑वस्यन्तो॒ अर्थं॑म् ।

तं सूर्यं॑ ह॒रितः॑ स॒प्त य॒ह्वीः स्पशं॒ विश्वं॑स्य॒ जगं॑तो वहन्ति ॥३

यम् । सी॒म् । अकृं॑ण्वन् । तमं॑से । वि॒ऽपृचं॑ । ध्रु॒वऽक्षें॑माः । अनं॑वऽस्यन्तः । अर्थं॑म् ।

तम् । सूर्यं॑म् । ह॒रितः॑ । स॒प्त । य॒ह्वीः । स्पशं॑म् । विश्वं॑स्य । जगं॑तः । व॒ह॒न्ति॒ ॥३

यम् । सीम् । अकृण्वन् । तमसे । विऽपृचे । ध्रुवऽक्षेमाः । अनवऽस्यन्तः । अर्थम् ।

तम् । सूर्यम् । हरितः । सप्त । यह्वीः । स्पशम् । विश्वस्य । जगतः । वहन्ति ॥३

“ध्रुवक्षेमाः स्थिरनिवासाः सृष्टिकर्तारो देवाः "सीं सर्वतः "तमसे तमसः "विपृचे पृथक्करणाय “अर्थं जगल्लक्षणं कार्यम् "अनवस्यन्तः अविमुञ्चन्तः कुर्वन्त एव "यं सूर्यम् "अकृण्वन् असृजन्नित्यर्थः । “यह्वीः महत्यः "सप्त सप्तसंख्याकाः "हरितः अश्वाः "विश्वस्य समस्तस्य "जगतः प्राणिसमूहस्य “स्पशं प्रेरकत्वेन ज्ञातारं "तं "सूर्यं "वहन्ति धारयन्ति ।

वहिंष्ठेभिर्वि॒हरं॑न्यासि॒ तन्तुं॑मव॒व्यय॒न्नसिं॑तं देव॒ वस्मं॑ ।

दविं॑ध्वतो र॒श्मय॒ः सूर्यं॑स्य॒ चर्मे॒वावां॑धु॒स्तमो॑ अ॒प्स्व१॒॑न्तः ॥४

वहि॑ष्ठेभिः । वि॒ऽहर॑न् । या॒सि॒ । तन्तु॑म् । अ॒व॒ऽव्यय॑न् ।
असि॑तम् । दे॒व॒ । वस्म॑ ।

दवि॑ध्वतः । र॒श्मयः॑ । सूर्य॑स्य । चर्म॑ऽइव । अव॑ । अ॒धुः॒ ।
तमः॑ । अ॒प्ऽसु । अ॒न्तरिति॑ ॥४

वहिष्ठेभिः । विऽहरन् । यासि । तन्तुम् । अवऽव्ययन् ।
असितम् । देव । वस्म ।

दविध्वतः । रश्मयः । सूर्यस्य । चर्मऽइव । अव । अधुः ।
तमः । अप्ऽसु । अन्तरिति ॥४

हे “देव द्योतमान सूर्य त्वं जगन्निर्वाहात्मकस्य रसस्यादानार्थं “तन्तुं रश्मिसमूहं “विहरन विस्तारयन् “असितं कृष्णवर्णं “वस्म नक्तंचराणां निवासभूतां रात्रिम् “अब्रव्ययन् अवाचीनं यथा भवति तथा संवृण्वन् । तिरस्कुर्वन्नित्यर्थः । "वहिष्ठेभिः वोढुमत्यन्तं शक्तैः अश्वैः

“यासि गमनमार्गं गच्छसि । अस्यामृचि पूर्वार्धे सूर्यस्य प्रत्यक्षमर्थं प्रतिपाद्योत्तरार्धे परोक्षमर्थं प्रतिपादयितुमाह । “दविध्वतः धुन्वानाः "सूर्यस्य संबन्धिनः “रश्मयः किरणाः "अप्सु अन्तरिक्षे । आप इत्यन्तरिक्षनाम ‘ आकाशम् आपः पृथिवी' (नि. १. ३.८) इति तन्नामसु पाठात् । “अन्तः मध्ये "चर्मेव चर्मवत् स्थितं “तमः अन्धकारम् “अवाधुः अवाचीनमदधुः । तिरस्कुर्वन्तीत्यर्थः ॥

अना॑यतो॒ अनि॑बद्धः कु॒थायं न्यं॑ङ्ङु॒त्ता॒नोऽवं॑ पद्यते॒ न ।

कया॑ याति स्व॒धया॒ को द॑दर्श दि॒वः स्क॒म्भः समृ॑तः पाति॒ नाक॑म् ॥५

अना॑यतः । अनि॑ऽबद्धः । कु॒था । अ॒यम् । न्यं॑ङ् । उ॒त्ता॒नः । अव॑ । प॒द्य॒ते॒ । न ।

कयां । या॒ति॒ । स्व॒धयां । कः । द॒द॒र्श॒ । दि॒वः । स्क॒म्भः । सम्ऽऋंतः । पा॒ति॒ । नाकंम् ॥५

अनायतः । अनिऽबद्धः । कथा । अयम् । न्यङ् । उत्तानः । अव । पद्यते । न ।

कया । याति । स्वधया । कः । ददर्श । दिवः । स्कम्भः । सम्ऽऋतः । पाति । नाकम् ॥५

आयतशब्दो दूरवाची । तद्विपरीतः "अनायतः आसीनः सन् “अयं प्रत्यक्षेणोपलभ्यमानो मण्डलाभिमानी सूर्यः "अनिबद्धः केनापि बद्धो न क्रियते । अपि चायं सूर्यः “न्यङ् अवाङ्मुखः सन् केनचित् “कथा कथं “न “अव "पद्यते न हिंस्यते । किंचायम् “उत्तानः ऊर्ध्वमुखत्वेन तिष्ठन् “कया “स्वधया केन बलेन “याति गच्छति । स्वधाशब्दोऽन्नवाची अत्र तत्कार्यं बलं लक्षयति । अपि च “दिवः द्युलोकस्य “स्कम्भः स्तम्भः “समृतः नाकेन

समवेतः सूर्यः “नाकं स्वर्गं “पाति पालयति । “को “ददर्श तत्त्वतः कः पश्यति । न कोऽपि जानातीत्यर्थः ॥ ॥ १३ ॥

# ऋग्वेदः सूक्तं ४.१४



## दे. अग्निः (लिङ्गोक्तदेवता इति एके)। त्रिष्टुप्

प्रत्यग्निरुषसो जातवेदा अख्यद्देवो रोचमाना महोभिः ।

आ नासत्योरुगाया रथेनेमं यज्ञमुप नो यातमच्छ ॥१॥

ऊर्ध्वं केतुं सविता देवो अश्रेज्ज्योतिर्विश्वस्मै भुवनाय कृण्वन् ।

आप्रा द्यावापृथिवी अन्तरिक्षं वि सूर्यो रश्मिभिश्चेकितानः ॥२॥

आवहन्त्यरुणीर्ज्योतिषागान्मही चित्रा रश्मिभिश्चेकिताना ।

प्रबोधयन्ती सुविताय देव्युषा ईयते सुयुजा रथेन ॥३॥

आ वां वहिष्ठा इह ते वहन्तु रथा अश्वास उषसो व्युष्टौ ।

इमे हि वां मधुपेयाय सोमा अस्मिन्यज्ञे वृषणा मादयेथाम् ॥४॥

अनायतो अनिबद्धः कथायं न्यङ्ङुत्तानोऽव पद्यते न ।

कया याति स्वधया को ददर्श दिव स्कम्भः समृतः पाति नाकम् ॥५॥

## सायणभाष्यम्

‘ प्रत्यग्निरुषसः' इति पञ्चर्चं चतुर्थं सूक्तं वामदेवस्यार्षं त्रैष्टुभमाग्नेयं मान्त्रवर्णिकदैवतं वा । तथा चानुक्रान्तं - ' प्रत्यग्निः' इति । लिङ्गोकदैवतं तु ' इति तुशब्दादस्यापि सूक्तस्य लिङ्गोक्तदैवतत्वम् । विनियोगो लैङ्गिकः ॥

प्रत्य॒ग्निरु॒षसों जा॒तवेंदा॒ अख्यंद्दे॒वो रोचंमाना॒ महोंभिः ।

आ नांसत्योरुगा॒याया रथेंने॒मं य॒ज्ञमुपं नो यात॒मच्छं ॥१

प्रतिं । अ॒ग्निः । उ॒षसंः । जा॒तऽवेंदाः । अख्यंत् । दे॒वः । रोचंमानाः । महःऽभिः ।

आ । ना॒स॒त्या॒ । उ॒रु॒ऽगा॒याया । रथेंन । इ॒मम् । य॒ज्ञम् । उपं । न॒ः । या॒त॒म् । अच्छं ॥१

प्रति । अग्निः । उषसः । जातऽवेदाः । अख्यत् । देवः । रोचमानाः । महःऽभिः ।

आ । नासत्या । उरुऽगाया । रथेन । इमम् । यज्ञम् । उप । नः । यातम् । अच्छ ॥१

“देवः द्योतमानः "जातवेदाः जातधनः “अग्निः “महोभिः तेजोभिः “रोचमानाः दीप्यमानाः “उषसः “प्रति उषसो लक्षीकृत्य "अख्यत् प्रवृद्धो भवति । “उरुगाया प्रभूतगमनौ हे नासत्या अश्विनौ “रथेन “नः अस्मदीयम् “इमं “यज्ञम् “अच्छ अभिमुखम् “उप "यातम् उपगच्छतम् ॥

ऊ॒र्ध्वं के॒तुं स॑वि॒ता दे॒वो अ॑श्रे॒ज्ज्योति॒र्विश्वं॑स्मै॒ भुवं॑नाय कृ॒ण्वन् ।

आप्रा॒ द्यावा॑पृथि॒वी अ॒न्तरि॑क्ष॒ं वि सूर्यो॑ र॒श्मिभि॒श्चेकि॑तानः ॥२

ऊ॒र्ध्वम् । के॒तुम् । स॒वि॒ता । दे॒वः । अ॒श्रे॒त् । ज्योति॑ः । विश्वं॑स्मै । भुवं॑नाय । कृ॒ण्वन् ।

आ । अ॒प्रा॒ः । द्यावा॑पृथि॒वी इति॑ । अ॒न्तरि॑क्षम् । वि । सूर्यः॑
। र॒श्मिऽभिः॑ । चेकि॑तानः ॥२

ऊर्ध्वम् । केतुम् । सविता । देवः । अश्रेत् । ज्योतिः ।
विश्वस्मै । भुवनाय । कृण्वन् ।

आ । अप्राः । द्यावापृथिवी इति । अन्तरिक्षम् । वि । सूर्यः
। रश्मिऽभिः । चेकितानः ॥२

“विश्वस्मै सर्वस्मै “भुवनाय लोकाय “ज्योतिः तेजः
“कृण्वन् कुर्वन् “सविता प्रेरकः “देवः “ऊर्ध्वम् उन्मुखं
“केतुं प्रकाशकं भानुम् “अश्रेत् आश्रयति । “वि
“चेकितानः सर्वं विशेषेण पश्यन् “सूर्यः “रश्मिभिः
स्वकीयैः किरणैः “द्यावापृथिवी द्युलोकभूलोकौ
“अन्तरिक्षं च “आप्राः समन्तादपूरयत् ॥

आ॒वहं॑न्त्यरु॒णीर्ज्योति॒॑षागा॑न्म॒ही चि॒त्रा र॒श्मिभि॒श्चेकि॑ताना ।

प्र॒बो॒धयं॑न्ती सुवि॒तायं॑ दे॒व्यु१॒॑षा ईं॑यते सु॒युजा॒ रथें॑न ॥३

आ॒ऽवहं॑न्ती । अ॒रु॒णीः । ज्योतिं॑षा । आ । अ॒गा॒त् । म॒ही । चि॒त्रा । र॒श्मिऽभिः॑ । चेकिं॑ताना ।

प्र॒ऽबो॒धयं॑न्ती । सु॒वि॒तायं॑ । दे॒वी । उ॒षाः । ई॒य॒ते॒ । सु॒ऽयुजां॑ । रथें॑न ॥३

आऽवहन्ती । अरुणीः । ज्योतिषा । आ । अगात् । मही । चित्रा । रश्मिऽभिः । चेकिताना ।

प्रऽबोधयन्ती । सुविताय । देवी । उषाः । ईयते । सुऽयुजा । रथेन ॥३

“आवहन्ती धनानि धारयन्ती “अरुणीः अरुणवर्णाः ॥ प्रथमैकवचने द्वितीयाबहुवचनं छान्दसम् ॥ “ज्योतिषा तेजसा युक्ता “मही महती “रश्मिभिः किरणैः “चित्रा दर्शनीया “चेकिताना जानती उषाः “आगात् आगच्छत् । किंच "प्रबोधयन्ती सुप्तान् प्रबुद्धान् कुर्वती “देवी द्योतमाना “उषाः “सुयुजा शोभनयुक्तेन “रथेन “सुविताय सुखप्राप्तये “ईयते गच्छति ॥

आ वा॒ं वहिं॑ष्ठा इ॒ह ते व॑हन्तु॒ रथा॒ अश्वा॑स उ॒षसो॒ व्यु॑ष्टौ ।

इ॒मे हि वां॑ मधु॒पेया॑य॒ सोमा॑ अ॒स्मिन्य॒ज्ञे वृ॑षणा मादयेथाम् ॥४

आ । वा॒म् । वहिं॑ष्ठाः । इ॒ह । ते । व॒ह॒न्तु॒ । रथाः॑ । अश्वा॑सः । उ॒षसः॑ । विऽउ॑ष्टौ ।

इ॒मे । हि । वा॒म् । म॒धु॒ऽपेया॑य । सोमाः॑ । अ॒स्मिन् । य॒ज्ञे । वृ॒ष॒णा॒ । मा॒द॒ये॒था॒म् ॥४

आ । वाम् । वहिष्ठाः । इह । ते । वहन्तु । रथाः । अश्वासः । उषसः । विऽउष्टौ ।

इमे । हि । वाम् । मधुऽपेयाय । सोमाः । अस्मिन् । यज्ञे । वृषणा । मादयेथाम् ॥४

हे अश्विनौ “इह यज्ञे "वहिष्ठाः वोढृतमाः “ते प्रसिद्धाः “रथाः रंहणा गन्तारः “अश्वासः "वां युवाम् “उषसः उषोदेवतायाः “व्युष्टौ व्युच्छनकाले “आ “वहन्तु समन्तात् नयन्तु । “हि यस्मात् कारणात् हे “वृषणा वृषणौ कामानां वर्षितारौ हे अश्विनौ “इमे “सोमाः “वां युवां “मधुपेयाय मधोः सोमस्य पानाय “अस्मिन्यज्ञे “मादयेथां हर्षयेथाम् ॥

अना॑यतो॒ अनि॑बद्धः क॒थायं न्य॑ङ्ङुत्ता॒नोऽव॑ पद्यते॒ न ।

कया॑ याति स्व॒धया॒ को द॑दर्श दि॒वः स्क॒म्भः समृ॑तः पाति॒ नाक॑म् ॥५

अना॑यतः । अनि॑ऽबद्धः । क॒था । अ॒यम् । न्य॑ङ् । उ॒त्ता॒नः । अव॑ । प॒द्य॒ते॒ । न ।

कया॑ । या॒ति॒ । स्व॒धया॑ । कः । द॒द॒र्श॒ । दि॒वः । स्क॒म्भः । सम्ऽऋ॑तः । पा॒ति॒ । नाक॑म् ॥५

अनायतः । अनिऽबद्धः । कथा । अयम् । न्यङ् । उत्तानः । अव । पद्यते । न ।

कया । याति । स्वधया । कः । ददर्श । दिवः । स्कम्भः । सम्ऽऋतः । पाति । नाकम् ॥५

इयमृक् पूर्वं व्याख्याता ॥ ॥ १४ ॥

## टिप्पणी

अस्मिन् ऋचि जातवेदाः(बहुवचनम्) उषसः प्रत्यग्निः अस्ति। प्रत्यग्निः अर्थात् उषसि या सममितिः अनुपलब्धा अस्ति, तस्याः पूर्तिः जातवेदाः करोति। वैदिकवाङ्मये प्रातःकाले सूर्योदयात्पूर्वं उषसः आविर्भावः भवति। सूर्यस्य रथः उषसः अनुगमनं करोति। अस्मात् ऋचात् संकेतं मिलति यत् नासत्योः रथः जातवेदायाः अनुगमनं करोति। उषसि ये दोषाः संभाव्याः सन्ति, तेषां शोधनाय कर्मकाण्डे आरुणकेतुक अग्निचयनं भवति यत्र आपःरूपेण पुण्यानां

संग्रहणं कुर्वन्ति(उखासंभरणम्)। जातवेदसि ये दोषाः संभाव्याः सन्ति, तेषां अपनयनं केन प्रकारेण संभवमस्ति, न ज्ञायते। केवलं अयमेव ज्ञायते यत् जातवेदसः प्रथमा अवस्था अर्हतः संज्ञका अस्ति, अपरा महःसंज्ञका – इमं स्तोमं अर्हते जातवेदसे रथमिव संमहेम मनीषया।

द्र. जातवेदा उपरि टिप्पणी

# ऋग्वेदः सूक्तं ४.१५

ऋग्वेदः - मण्डल ४
← सूक्तं ४.१४
सूक्तं ४.१५
वामदेवो गौतमः
सूक्तं ४.१६ →

दे. अग्निः, ७-८ सोमकः साहदेव्यः,९-१० अश्विनौ। गायत्री

---

अग्निर्होता नो अध्वरे वाजी सन्परि णीयते ।

देवो देवेषु यज्ञियः ॥१॥

परि त्रिविष्ट्यध्वरं यात्यग्नी रथीरिव ।

आ देवेषु प्रयो दधत् ॥२॥

परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत् ।

दधद्रत्नानि दाशुषे ॥३॥

अयं यः सृञ्जये पुरो दैववाते समिध्यते ।

द्युमाँ अमित्रदम्भनः ॥४॥

अस्य घा वीर ईवतोऽग्नेरीशीत मर्त्यः ।

तिग्मजम्भस्य मीळ्हुषः ॥५॥

तमर्वन्तं न सानसिमरुषं न दिवः शिशुम् ।

मर्मृज्यन्ते दिवेदिवे ॥६॥

बोधद्यन्मा हरिभ्यां कुमारः साहदेव्यः ।

अच्छा न हूत उदरम् ॥७॥

उत त्या यजता हरी कुमारात्साहदेव्यात् ।

प्रयता सद्य आ ददे ॥८॥

एष वां देवावश्विना कुमारः साहदेव्यः ।

दीर्घायुरस्तु सोमकः ॥९॥

तं युवं देवावश्विना कुमारं साहदेव्यम् ।

दीर्घायुषं कृणोतन ॥१०॥

## सायणभाष्यम्

‘अग्निर्होता ' इति दशर्चं पञ्चमं सूक्तं वामदेवस्यार्षं गायत्रम् । अत्रेयमनुक्रमणिका -- अग्निर्होता दश गायत्रमृषिर्बोधत् इत्याभ्यां सोमकं साहदेव्यमभ्यवदत्पराभ्यामस्याश्विनावायुरयाचत' इति । ‘बोधद्यत्' इति द्वृचेन सोमकराजा स्तूयते ‘एष वाम्' इति द्वृचेनाश्विनौ शिष्टाभिः षड्भिरग्निः स्तूयते। अतस्ता एव क्रमेण देवताः । सूक्तविनियोगो लैङ्गिकः । पशोः पर्यग्निकरणे • अग्निर्होता नः' इत्याद्यस्तृचोऽनुवचनीयः । तथा च सूत्रितम् - ’अग्निर्होता न इति तृचं पर्यग्नयेऽन्वाह' (आश्व. श्रौ. ३.२) इति । प्रातरनुवाकेऽप्याग्नेये क्रतौ गायत्रे छन्दस्याश्विनशस्त्रे चायं तृचो विनियुक्तः । तथा च

सूत्रितम् -- ’अग्निर्होता नो अध्वर इति तिस्रः ' ( आश्व. श्रौ. ४. १३) इति ॥

अ॒ग्निर्होता॑ नो अध्व॒रे वा॒जी सन्परि॑ णीयते ।

दे॒वो दे॒वेषु॑ य॒ज्ञियः॑ ॥१

अ॒ग्निः । होता॑ । न॒ः । अ॒ध्व॒रे । वा॒जी । सन् । परि॑ ।
नी॒य॒ते॒ ।

दे॒वः । दे॒वेषु॑ । य॒ज्ञियः॑ ॥१

अग्निः । होता । नः । अध्वरे । वाजी । सन् । परि ।
नीयते ।

देवः । देवेषु । यज्ञियः ॥१

“होता देवानामाह्वाता होमनिष्पादको वा “अग्निः “नः अस्मदीये “अध्वरे यागे । वाजीत्येतत् लुप्तोपमाकम् । “वाजी शीघ्रगामी वोढाश्व इव तथा देवेभ्यो हविर्वाहकः “सन् “परि “णीयते परितः समन्तात् प्राप्यते । तथा ब्राह्मणं च भवति - ’वाजी सन्परि णीयत इति वाजिनमिव ह्येनं सन्तं परिणयन्ति ' ( ऐ. ब्रा. २.५ ) इति । कीदृशोऽग्निः । “देवेषु द्योतमानेष्विन्द्रादिषु मध्ये “देवः द्योतमानः “यज्ञियः यज्ञार्हः ॥

परिं त्रिवि॒ष्ट्यंध्व॒रं यात्य॒ग्नी र॒थीरिंव ।

आ दे॒वेषु॒ प्रयो॒ दधंत् ॥२

परिं । त्रि॒ऽवि॒ष्टि । अ॒ध्व॒रम् । यातिं । अ॒ग्निः । र॒थीःऽइंव ।

आ । दे॒वेषुं । प्रयः॑ । दधंत् ॥२

परि । त्रिऽविष्टि । अध्वरम् । याति । अग्निः । रथीःऽइव ।

आ । देवेषु । प्रयः । दधत् ॥२

“देवेषु द्योतमानेष्विन्द्रादिषु । प्रयः इत्यन्ननामेदम् । "प्रयः यजमानैर्दत्तं हवीरूपमन्नम् आ “दधत् आ समन्ताद्धारयन् “अग्निः अङ्गनादिगुणविशिष्टोऽग्निः “त्रिविष्टि त्रिवारम् । सवनत्रयेऽपीत्यर्थः । “परि परितः समन्तात् “अध्वरं यजमानैः कृतं यागं “याति गच्छति । परिगमने दृष्टान्तः । “रथीरिव । रथवान् पुरुषो यथा शीघ्रं याति तद्वत् । तथा च ब्राह्मणं - ’परि त्रिविष्ट्यध्वरं यास्यग्नी रथीरिवेत्येष हि रथीरिवाध्वरं पर्येति' ( ऐ. बा. २. ५) इति ॥

परि॒ वाजं॑पतिः क॒विर॒ग्निर्ह॒व्यान्यं॑क्रमीत् ।

दध॒द्रत्ना॑नि दा॒शुषे॑ ॥३

परिं । वाजंऽपतिः । क॒विः । अ॒ग्निः । ह॒व्यानिं । अ॒क्र॒मी॒त्
।

दधंत् । रत्नांनि । दा॒शुषें ॥३

परि । वाजऽपतिः । कविः । अग्निः । हव्यानि । अक्रमीत्
।

दधत् । रत्नानि । दाशुषे ॥३

“वाजपतिः वाजानामन्नानां पतिः पालकः । ‘परि वाजपतिः कविरित्येष हि वाजानां पतिः (ऐ. ब्रा, २. ५) इति ब्राह्मणम् । “कविः क्रान्तदर्शी मेधावी वा “दाशुषे हविर्दत्तवते यजमानाय “रत्नानि रमणीयानि धनानि “दधत् प्रयच्छन् “अग्निः “हव्यानि हवींषि “परि “अक्रमीत् परितः क्रामति । व्याप्नोति ॥

अ॒यं यः सृंजंये पु॒रो दैंववा॒ते संमि॒ध्यतें ।

द्यु॒माँ अंमित्र॒दंभंनः ॥४

अ॒यम् । यः । सृञ्जंये । पु॒रः । दै॒व॒ऽवा॒ते । स॒म्ऽइ॒ध्यतें ।

द्यु॒ऽमान् । अ॒मि॒त्र॒ऽदम्भंनः ॥४

अयम् । यः । सृञ्जये । पुरः । दैवऽवाते । सम्ऽइध्यते ।

द्युऽमान् । अमित्रऽदम्भनः ॥४

“यः प्रसिद्धः "अयं प्रत्यक्षेणोपलभ्यमानोऽग्निः “दैववाते देववातस्य पुत्रे "सृञ्जये । सृञ्जयो नाम कश्चित्सोमयाजी । तस्मिन्निमित्तभूते सति । तद्यागार्थमित्यर्थः । सृञ्जयस्य यष्टृत्वं तैत्तिरीया आमनन्ति-- ’वासिष्ठो ह सात्यहव्यो देवभागं पप्रच्छ यत्सृञ्जयान्बहुयाजिनोऽयीयजः' (तै. सं.

६. ६.२.२ ) इति । “पुरः पूर्वस्यां दिशि स्थितायामुत्तरवेद्यां “समिध्यते सम्यग्दीप्यते । "अमित्रदम्भनः शत्रूणां हिंसकः सोऽग्निः “द्युमान् दीप्तिमान् भवतीति शेषः ॥

अस्यं घा वी॒र ईवंतो॒ऽग्नेरींशीत॒ मर्त्यः॑ ।

ति॒ग्मजंभस्य मी॒ळ्हुषः॑ ॥५

अस्यं । घ॒ । वी॒रः । ईवंतः । अ॒ग्नेः । ई॒शी॒त॒ । मर्त्यः॑ ।

ति॒ग्मऽजंम्भस्य । मी॒ळ्हुषः॑ ॥५

अस्य । घ । वीरः । ईवतः । अग्नेः । ईशीत । मर्त्यः ।

तिग्मऽजम्भस्य । मीळ्हुषः ॥५

“वीरः स्तुतौ विक्रान्तः “मर्त्यः मरणधर्मा यजमानः
“तिग्मजम्भस्य तीक्ष्णतेजसः “मीळ्हुषः
अभिलषितफलानां सेक्तुः “ईवतः गमनवतः “अस्य अग्नेः
"ईशीत ईश्वरो भवेत् । “घ इति पादपूरणः । एतेन
यजमानः आत्माभीष्टफलं कारयितुं समर्थो भवतीत्यर्थः ॥
॥ १५ ॥

तमर्वं॑तं॒ न सा॑न॒सिम॑रु॒षं न दि॒वः शिशुं॑ ।

म॒र्मृ॒ज्यंते॑ दि॒वेदिं॑वे ॥६

तम् । अर्वं॑न्तम् । न । सा॒न॒सिम् । अ॒रु॒षम् । न । दि॒वः ।
शिशुं॑म् ।

म॒र्मृ॒ज्यन्ते॑ । दि॒वेऽदिं॑वे ॥६

तम् । अर्वन्तम् । न । सानसिम् । अरुषम् । न । दिवः । शिशुम् ।

मर्मृज्यन्ते । दिवेऽदिवे ॥६

यजमानाः "अर्वन्तं न शीघ्रगामिनमश्वमिव "सानसिं संभजनीयं “दिवः “शिशु “न द्युलोकस्य पुत्रभूतं सूर्यमिव “अरुषम् आरोचमानं “तम् अग्निं “दिवेदिवे प्रतिदिनं “मर्मृज्यन्ते भृशं परिचरणं कुर्वन्ति ॥

बोध॒द्यन्मा॒ हरि॑भ्यां कुमा॒रः सा॑हदे॒व्यः ।

अच्छा॒ न हू॒त उद॑रं ॥७

बोध॑त् । यत् । मा॒ । हरि॑ऽभ्याम् । कु॒मा॒रः । सा॒ह॒ऽदे॒व्यः ।

अच्छ॑ । न । हू॒तः । उत् । अ॒र॒म् ॥७

बोधत् । यत् । मा । हरिऽभ्याम् । कुमारः । साहऽदेव्यः ।

अच्छ । न । हूतः । उत् । अरम् ॥७

“साहदेव्यः सहदेवनाम्नो राज्ञः पुत्रः “कुमारः सोमकाभिधो राजा “हरिभ्याम् अश्वाभ्याम् अश्वौ दातुं "मा मां “यत् यदा “बोधत् बोधयामास इमौ तवाश्वाविति । तदा अहम् "अच्छ आभिमुख्येन कुमारेण “हूतः सन् "न “उदरं तावश्वावलब्ध्वा न निर्गतवानस्मि ।

उ॒त त्या यंज॒ता हरीं कुमा॒रात्सांहदे॒व्यात् ।

प्रयंता स॒द्य आ दंदे ॥८

उ॒त । त्या । य॒ज॒ता । हरी॒ इतिं । कु॒मा॒रात् । सा॒ह॒ऽदे॒व्यात् ।

प्रऽयंता । स॒द्यः । आ । द॒दे॒ ॥८

उत । त्या । यजता । हरी इति । कुमारात् । साहऽदेव्यात् ।

प्रऽयता । सद्यः । आ । ददे ॥८

"उत अपि च "साहदेव्यात् सहदेवस्य पुत्रात् “कुमारात् सोमकाख्यात् राज्ञः “यजता पूजनीयौ “प्रयता प्रयतौ “त्या त्यौ तौ प्रसिद्धौ “हरी अश्वौ “सद्यः यस्मिन् दिने तेनाहूतस्तस्मिन्नेव दिने “आ “ददे अदत्तवानस्मि । मन्त्रद्रष्टा ऋषिः ‘बोधत्' इत्यृग्द्वयेन कुमारमश्वेप्सयाभ्युपगम्य अश्वौ एतस्मात् लब्ध्वा प्रीतोऽभवदित्यर्थः ॥

ए॒ष वां॑ देवावश्विना कुमा॒रः सां॑हदे॒व्यः ।

दी॒र्घायुं॑रस्तु॒ सोमं॑कः ॥९

ए॒षः । वा॒म् । दे॒वौ॒ । अ॒श्वि॒ना॒ । कु॒मा॒रः । सा॒ह॒ऽदे॒व्यः ।

दी॒र्घऽआं॑युः । अ॒स्तु॒ । सोमं॑कः ॥९

एषः । वाम् । देवौ । अश्विना । कुमारः । साहऽदेव्यः ।

दीर्घऽआयुः । अस्तु । सोमकः ॥९

“देवौ द्योतमानौ हे “अश्विना अश्विनौ "वां युवां तर्पकः "साहदेव्यः सहदेवस्य पुत्रः "कुमारः सोमकः सोमकाभिधानः “एषः राजा “दीर्घायुरस्तु शतायुष्को भवतु । ' एतमु हैव प्रोचतुः पर्वतनारदौ सोमकाय' इत्यादिना ‘सर्वे हैव महाराजा आसुः' (ऐ. ब्रा. ७.३४ ) इत्यनेन ब्राह्मणेन सोमकस्य राजत्वं स्पष्टीकृतम् ॥

तं यु॒वं दे॑वावश्विना कुमा॒रं सा॑हदे॒व्यं ।

दी॒र्घायु॑षं कृणोतन ॥१०

तम् । यु॒वम् । दे॒वौ॒ । अ॒श्वि॒ना॒ । कु॒मा॒रम् । सा॒ह॒ऽदे॒व्यम् ।

दी॒र्घऽआ॑युषम् । कृ॒ण॒ो॒त॒न॒ ॥१०

तम् । युवम् । देवौ । अश्विना । कुमारम् । साहऽदेव्यम् ।

दीर्घऽआयुषम् । कृणोतन ॥१०

हे “देवावश्विना द्योतमानावश्विनौ "युवं युवां “तं “साहदेव्यं सहदेवस्य पुत्रं “कुमारं सोमकाख्यं राजानं “दीर्घायुषं शतायुष्कं “कृणोतन कुरुतम् । अनेन द्वृचेनास्य कुमारस्य दीर्घमायुः अश्विनावृषिरयाचतेत्यर्थः ॥ ॥ १६ ॥

# ऋग्वेदः सूक्तं ४.१६

← सूक्तं ४.१५

ऋग्वेदः - मण्डल ४

सूक्तं ४.१६

वामदेवो गौतमः

सूक्तं ४.१७ →

## दे. इन्द्रः। त्रिष्टुप्

आ सत्यो यातु मघवाँ ऋजीषी द्रवन्त्वस्य हरय उप नः ।

तस्मा इदन्धः सुषुमा सुदक्षमिहाभिपित्वं करते गृणानः ॥१॥

अव स्य शूराध्वनो नान्तेऽस्मिन्नो अद्य सवने मन्दध्यै ।

शंसात्युक्थमुशनेव वेधाश्चिकितुषे असुर्याय मन्म ॥२॥

कविर्न निण्यं विदथानि साधन्वृषा यत्सेकं विपिपानो अर्चात् ।

दिव इत्था जीजनत्सप्त कारूनह्ना चिच्चक्रुर्वयुना गृणन्तः ॥३॥

स्वर्यद्वेदि सुदृशीकमर्कैर्महि ज्योती रुरुचुर्यद्ध वस्तोः ।

अन्धा तमांसि दुधिता विचक्षे नृभ्यश्चकार नृतमो अभिष्टौ ॥४॥

ववक्ष इन्द्रो अमितमृजीष्युभे आ पप्रौ रोदसी महित्वा ।

अतश्चिदस्य महिमा वि रेच्यभि यो विश्वा भुवना बभूव ॥५॥

विश्वानि शक्रो नर्याणि विद्वानपो रिरेच सखिभिर्निकामैः ।

अश्मानं चिद्ये बिभिदुर्वचोभिर्व्रजं गोमन्तमुशिजो वि वव्रुः ॥६॥

अपो वृत्रं वव्रिवांसं पराहन्प्रावत्ते वज्रं पृथिवी सचेताः ।

प्रार्णांसि समुद्रियाण्यैनोः पतिर्भवञ्छवसा शूर धृष्णो ॥७॥

अपो यदद्रिं पुरुहूत दर्दराविर्भुवत्सरमा पूर्व्यं ते ।

स नो नेता वाजमा दर्षि भूरिं गोत्रा रुजन्नङ्गिरोभिर्गृणानः ॥८॥

अच्छा कविं नृमणो गा अभिष्टौ स्वर्षाता मघवन्नाधमानम् ।

ऊतिभिस्तमिषणो द्युम्नहूतौ नि मायावानब्रह्मा दस्युरर्त ॥९॥

आ दस्युघ्ना मनसा याह्यस्तं भुवत्ते कुत्सः सख्ये निकामः ।

स्वे योनौ नि षदतं सरूपा वि वां चिकित्सदृतचिद्ध नारी ॥१०॥

यासि कुत्सेन सरथमवस्युस्तोदो वातस्य हर्योरीशानः ।

ऋज्रा वाजं न गध्यं युयूषन्कविर्यदहन्पार्याय भूषात् ॥११॥

कुत्साय शुष्णमशुषं नि बर्हीः प्रपित्वे अह्नः कुयवं सहस्रा ।

सद्यो दस्यून्प्र मृण कुत्स्येन प्र सूरश्चक्रं वृहतादभीके ॥१२॥

त्वं पिप्रुं मृगयं शूशुवांसमृजिश्वने वैदथिनाय रन्धीः ।

पञ्चाशत्कृष्णा नि वपः सहस्रात्कं न पुरो जरिमा वि दर्दः ॥१३॥

सूर उपाके तन्वं दधानो वि यत्ते चेत्यमृतस्य वर्पः ।

मृगो न हस्ती तविषीमुषाणः सिंहो न भीम आयुधानि बिभ्रत् ॥१४॥

इन्द्रं कामा वसूयन्तो अग्मन्स्वर्मीळ्हे न सवने चकानाः ।

श्रवस्यवः शशमानास उक्थैरोको न रण्वा सुदृशीव पुष्टिः ॥१५॥

तमिद्व इन्द्रं सुहवं हुवेम यस्ता चकार नर्या पुरूणि ।

यो मावते जरित्रे गध्यं चिन्मक्षू वाजं भरति स्पार्हराधाः ॥१६॥

तिग्मा यदन्तरशनिः पताति कस्मिञ्चिच्छूर मुहुके जनानाम् ।

घोरा यदर्य समृतिर्भवात्यध स्मा नस्तन्वो बोधि गोपाः ॥१७॥

भुवोऽविता वामदेवस्य धीनां भुवः सखावृको वाजसातौ ।

त्वामनु प्रमतिमा जगन्मोरुशंसो जरित्रे विश्वध स्याः ॥१८॥

एभिर्नृभिरिन्द्र त्वायुभिष्ट्वा मघवद्भिर्मघवन्विश्व आजौ ।

द्यावो न द्युम्नैरभि सन्तो अर्यः क्षपो मदेम शरदश्च पूर्वीः ॥१९॥

एवेदिन्द्राय वृषभाय वृष्णे ब्रह्माकर्म भृगवो न रथम् ।

नू चिद्यथा नः सख्या वियोषदसन्न उग्रोऽविता तनूपाः ॥२०॥

नू ष्टुत इन्द्र नू गृणान इषं जरित्रे नद्यो न पीपेः ।

अकारि ते हरिवो ब्रह्म नव्यं धिया स्याम रथ्यः सदासाः ॥२१॥

## सायणभाष्यम्

‘ आ सत्यो यातु ' इत्येकविंशत्यृचं षष्ठं सूक्तं वामदेवस्यार्षं त्रैष्टुभमैन्द्रम् । अत्रेयमनुक्रमणिका -- ’आ सत्यः सैकैन्द्रम्' इति । तत्र ‘ऐन्द्रम्' इत्युक्तत्वादग्न्यधिकारो निवृत्त इत्यवगम्यते । चतुर्विंशेऽहनि माध्यंदिनसवने मैत्रवरुणशस्त्रे इदं द्वितीयमहीनसूक्तम् । तथा च सूत्रितम्-

आ सत्यो यात्वित्यहीनसूक्तं द्वितीयं मैत्रावरुणः ' ( आश्व. श्रौ. ७. ४) इति । समूळ्हे दशरात्रे नवमेऽहनि निष्केवल्यशस्त्रे इदं सूक्तम् । तथा च सूत्रितम्-‘आ सत्यो यात्वहं भुवं तत्त इन्द्रियमिति निष्केवल्यम्' ( आश्व. श्रौ. ८. ७) इति ॥

आ स॒त्यो यां॑तु म॒घवाँ॑ ऋजी॒षी द्रवं॑त्वस्य॒ हरं॑य॒ उपं॑ नः ।

तस्मा॒ इदंधः॑ सुषुमा सु॒दक्षं॑मि॒हाभिं॑पि॒त्वं कं॑रते गृणा॒नः ॥१

आ । स॒त्यः । या॒तु॒ । म॒घऽवा॑न् । ऋ॒जी॒षी । द्रव॑न्तु । अ॒स्य॒ । हरं॑यः । उपं॑ । नः॒ ।

तस्मै॑ । इत् । अन्धः॑ । सु॒सु॒म॒ । सु॒ऽदक्षं॑म् । इ॒ह । अ॒भि॒ऽपि॒त्वम् । क॒र॒ते॒ । गृ॒णा॒नः ॥१

आ । सत्यः । यातु । मघऽवान् । ऋजीषी । द्रवन्तु । अस्य । हरयः । उप । नः ।

तस्मै । इत् । अन्धः । सुसुम । सुऽदक्षम् । इह । अभिऽपित्वम् । करते । गृणानः ॥१

“ऋजीषी। ऋजीषशब्देन निष्पिष्टो विगतसारः सोमोऽभिधीयते । तद्वान् "सत्यः सत्यवान् “मघवान् धनवानिन्द्रः “नः अस्माकम् “उप समीपे “आ “यातु आगच्छतु। किंच “अस्य इन्द्रस्य “हरयः अश्वाः नोऽस्माकम् उप समीपे “द्रवन्तु आगच्छन्तु । वयं यजमानाः “इह अस्मिन् यज्ञे “तस्मै इन्द्राय “सुदक्षं शोभनबलम्। सारोपेतमित्यर्थः। “इत् इदं प्रत्यक्षेणोपलभ्यमानम् “अन्धः अन्नरूपं सोमं "सुषुम अभिषुतं कुर्याम। “गृणानः अस्माभिः स्तूयमान इन्द्रः "अभिपित्वम् अस्मदभिमतप्राप्तिं “करते करोतु ॥

अवं स्य शूराध्वंनो नांतेऽस्मिन्नों अद्य सवंने मंदध्यैं ।

शंसांत्युक्थमुशनेंव वेधाश्चिंकितुषें असुर्यांय मन्मं ॥२

अवं । स्य । शूर । अध्वंनः । न । अन्तें । अस्मिन् । नः ।
अद्य । सवंने । मन्दध्यैं ।

शंसांति । उक्थम् । उशनांऽइव । वेधाः । चिकितुषें ।
असुर्यांय । मन्मं ॥२

अव । स्य । शूर । अध्वनः । न । अन्ते । अस्मिन् । नः ।
अद्य । सवने । मन्दध्यै ।

शंसाति । उक्थम् । उशनाऽइव । वेधाः । चिकितुषे ।
असुर्याय । मन्म ॥२

हे "शूर शत्रूणाम् अभिभवसमर्थेन्द्र “अद्य इदानीम् “अस्मिन् “सवने माध्यंदिनाख्ये “मन्दध्यै त्वां मादयितुं “नः अस्मान् “अव "स्य विमुञ्च । तत्र दृष्टान्तः । “अध्वनः गन्तव्यस्य मार्गस्य “अन्ते समीपे “न अश्वान्मनुष्या यथा मुञ्चन्ति तद्वत् । "उशनेव काव्य इव “वेधाः शंसिता यजमानो हे इन्द्र "चिकितुषे सर्वं जानते “असुर्याय असुराणां हिंसकाय तुभ्यं “मन्म मननीयम् “उक्थं शस्त्ररूपं स्तोत्रं “शंसाति शंसनं करोति ॥

क॒विर्न नि॒ण्यं वि॒दथा॑नि॒ साध॒न्वृषा॒ यत्सेकं॑ विपिपा॒नो अर्चा॑त् ।

दि॒व इ॒त्था जी॑जनत्स॒प्त का॒रूनह्ना॑ चिच्चक्रुर्व॒युना॑ गृ॒णंतः॑ ॥३

क॒विः । न । नि॒ण्यम् । वि॒दथा॑नि । साध॑न् । वृषा॑ । यत् । सेक॑म् । वि॒ऽपि॒पा॒नः । अर्चा॑त् ।

दि॒वः । इ॒त्था । जी॒ज॒न॒त् । स॒प्त । का॒रून् । अह्ना॑ । चि॒त् । च॒क्रुः॒ । व॒युना॑ । गृ॒णन्तः॑ ॥३

कविः । न । निण्यम् । विदथानि । साधन् । वृषा । यत् । सेकम् । विऽपिपानः । अर्चात् ।

दिवः । इत्था । जीजनत् । सप्त । कारून् । अह्ना । चित् । चक्रुः । वयुना । गृणन्तः ॥३

"कविः मेधावी “निण्यं न । निण्यमित्यन्तर्हितनामैतत् । अन्तर्हितं गूढमर्थमिव “विदथानि वेदनीयानि कार्यजातानि “साधन साधयन् “वृषा कामानां वर्षितेन्द्रः “यत् यदा “सेकं सेचनीयं सोमं “विपिपानः अत्यर्थं पिबन् “अर्चात् विशेषेणार्चति । सोमपाने श्रद्धां करोतीत्यर्थः । तदानीं

“दिवः अमुष्मात् द्युलोकात् “इत्था सत्यमेव “सप्त सप्तसंख्याकान् "कारून रश्मीन् "जीजनत् अजीजनत् । जनयति । “गृणन्तः स्तूयमाना रश्मयः “वयुना वयुनानि मनुष्याणां ज्ञानानि "अह्ना “चित् “दिवसेनापि “चक्रुः कृतवन्तः ॥

स्वर्१॒र्यद्वेदिं सु॒दृशींकम॒र्कैर्महि॒ ज्योतीं रुरुचु॒र्यद्ध॒ वस्तोः॑ ।

अ॒ंधा तमांसि॒ दुधिंता वि॒चक्षे॒ नृभ्यंश्चकार॒ नृतंमो अ॒भिष्टौं ॥ ४

स्वः॑ । यत् । वेदिं । सु॒ऽदृशींकम् । अ॒र्कैः । महिं । ज्योतिः॑ । रु॒रु॒चुः॒ । यत् । ह॒ । वस्तोः॑ ।

अ॒न्धा । तमांसि । दुधिंता । वि॒ऽचक्षें । नृऽभ्यः॑ । च॒का॒र॒ । नृऽतंमः । अ॒भिष्टौं ॥४

स्वः । यत् । वेदि । सुऽदृशीकम् । अर्कैः । महि । ज्योतिः । रुरुचुः । यत् । ह । वस्तोः ।

अन्धा । तमांसि । दुधिता । विऽचक्षे । नृऽभ्यः । चकार । नृऽतमः । अभिष्टौ ॥४

"यद्ध यदा खलु "महि महत् प्रभूतं "ज्योतिः तेजोरूपं "यत् "स्वः यो द्युलोकः "अर्कैः रश्मिभिः "सुदृशीकं सुष्ठु दर्शनीयं "वेदि अवेदि ज्ञायते तदानीं देवास्तस्मिन् स्वर्गे "वस्तोः निवासार्थं "रुरुचुः दीप्तियुक्ता बभूवुः । "नृतमः नेतृतमः सूर्यः "अभिष्टौ अभ्यागमने "नृभ्यः नृणां "विचक्षे विशेषेण दर्शनाय "अन्धा अन्धकाररूपाणि निबिडानि "तमांसि "दुधिता दुधितानि नाशितानि "चकार कृतवान् ॥

व॒व॒क्ष इंद्रो॒ अमि॑तमृजी॒ष्यु१॒॑भे आ पं॑प्रौ॒ रोदं॑सी महि॒त्वा ।

अतं॑श्चिदस्य महि॒मा वि रें॑च्य॒भि यो विश्वा॒ भुवं॑ना ब॒भूवं॑ ॥५

व॒व॒क्षे । इन्द्रः॑ । अमिं॑तम् । ऋ॒जी॒षी । उ॒भे इतिं॑ । आ ।
प॒प्रौ॒ । रोदं॑सी॒ इतिं॑ । म॒हि॒ऽत्वा ।

अतः॑ । चि॒त् । अ॒स्य॒ । म॒हि॒मा । वि । रे॒चि॒ । अ॒भि । यः ।
विश्वां॑ । भुवं॑ना । ब॒भूवं॑ ॥५

ववक्षे । इन्द्रः । अमितम् । ऋजीषी । उभे इति । आ ।
पप्रौ । रोदसी इति । महिऽत्वा ।

अतः । चित् । अस्य । महिमा । वि । रेचि । अभि । यः ।
विश्वा । भुवना । बभूव ॥५

“ऋजीषी । ऋजीषशब्देन निष्पिष्टो विगतसारः
सोमोऽभिधीयते । तद्वान् "इन्द्रः परमैश्वर्ययुक्तः “अमितम्
इयत्तारहितं महिमानं "ववक्षे उवाह । किंच "महित्वा
महत्त्वेन स्वेन महिम्ना "उभे “रोदसी उभे द्यावापृथिव्यौ

“आ “पप्रौ समन्तादपूरयत् । "यः इन्द्रः "विश्वा "भुवना सर्वाणि भुवनानि “अभि "बभूव तिरश्चकार । अतश्चित् एभ्योऽपि विश्वेभ्यो भुवनेभ्यः "अस्य इन्द्रस्य "महिमा “वि “रेचि अतिरिरिचे । अधिको बभूवेत्यर्थः ॥ ॥ १७ ॥

विश्वा॑नि श॒क्रो नर्या॑णि वि॒द्वान॒पो रि॑रेच॒ सखि॑भि॒र्निका॑मैः ।

अश्मा॑नं चि॒द्ये बि॑भि॒दुर्वचो॑भिर्व्र॒जं गोम॑न्तमु॒शिजो॒ वि व॑व्रुः ॥ ६

विश्वा॑नि । श॒क्रः । नर्या॑णि । वि॒द्वान् । अ॒पः । रि॒रे॒च॒ । सखि॑ऽभिः । निऽका॑मैः ।

अश्मा॑नम् । चि॒त् । ये । बि॒भि॒दुः । वच॑ःऽभिः । व्र॒जम् । गोऽम॑न्तम् । उ॒शिज॑ः । वि । व॒व्रु॒रिति॑ वव्रुः ॥६

विश्वानि । शक्रः । नर्याणि । विद्वान् । अपः । रिरेच । सखिऽभिः । निऽकामैः ।

अश्मानम् । चित् । ये । बिभिदुः । वचःऽभिः । व्रजम् । गोऽमन्तम् । उशिजः । वि । वव्रुरिति वव्रुः ॥६

“विश्वानि समस्तानि “नर्याणि मनुष्याणां हितानि वृष्ट्यादीनि कार्याणि "विद्वान् जानम् “शक्रः समर्थ इन्द्रः “निकामैः निकामयमानेभ्यः "सखिभिः मित्रभूतेभ्यो मरुद्यः् ॥ व्यत्ययेन चतुर्थ्यर्थे तृतीया ॥ “अपः वृष्टिलक्षणान्युदकानि “रिरेच रिक्तीचकार । इन्द्रः सस्यादिफलसिद्ध्यर्थं मेघस्थान्युदकानि मरुद्योल दत्तवानित्यर्थः । यद्वा । निकामैर्निकामयमानैः सखिभिर्मरुद्भिः सहितः सन् अपो नभसः सकाशात् । आप इत्यन्तरिक्षनामैतत् । अत्र विभक्तिव्यत्ययः । रिरेच व्यतिरिक्तः बभूव । "ये मरुतः "वचोभिः वाग्रूपैर्ध्वनिभिः

"अश्मानं "चित् पर्वतमपि मेघं वा । अश्मेति मेघनामैतत् ।
"बिभिदुः अभैत्सुः । "उशिजः कामयमानास्ते मरुतः
"गोमन्तं गोभिरुपेतं ”व्रजम्, अङ्गिरसां संबन्धि गोस्थानं
"वि "वव्रुः आच्छादयामासुः ॥

अ॒पो वृ॒त्रं व॑व्रि॒वांसं॒ परा॑ह॒न्प्राव॑त्ते॒ वज्रं॑ पृथि॒वी सचे॑ताः ।

प्रार्णां॑सि समु॒द्रिया॑ण्यैनोः॒ पति॒र्भव॒ञ्छव॑सा शूर धृष्णो ॥७

अ॒पः । वृ॒त्रम् । व॒व्रि॒ऽवांसं॑म् । परा॑ । अ॒ह॒न् । प्र । आ॒व॒त् ।
ते॒ । वज्रं॑म् । पृ॒थि॒वी । सऽचे॑ताः ।

प्र । अर्णां॑सि । स॒मु॒द्रिया॑णि । ऐ॒नोः॒ । पतिः॑ । भव॑न् ।
शव॑सा । शू॒र॒ । धृ॒ष्णो॒ इति॑ ॥७

अपः । वृत्रम् । वव्रिऽवांसम् । परा । अहन् । प्र । आवत् ।
ते । वज्रम् । पृथिवी । सऽचेताः ।

प्र । अर्णांसि । समुद्रियाणि । ऐनोः । पतिः । भवन् ।
शवसा । शूर । धृष्णो इति ॥७

हे इन्द्र "प्रावत् राक्षसादिभ्यः प्रकर्ष्ण लोकान् पालयितृ “ते त्वदीयं "वज्रम् "अपः वृष्टिलक्षणान्युदकानि “वव्रिवांसम् आवरकं "वृत्रं मेघं "पराहन् प्रकर्षेण प्रेरयति स्म । “पृथिवी भूमिः “सचेताः चेतनावती । त्वया संगता बभूव । “धृष्णो धर्षणशील हे "शूर विक्रान्तेन्द्र त्वं “शवसा बलेन "पतिर्भवन् लोकानां पालकः सन् "समुद्रियाणि समुद्रसंबन्धीनि “अर्णांसि नभसि स्थितानि उदकानि “प्र “ऐनोः प्रेरकः अभूः ॥

अ॒पो यदद्रिं॑ पुरुहूत॒ दर्द॑रा॒विर्भु॑वत्स॒रमा॑ पू॒र्व्यं॑ ते॑ ।

स नो॑ ने॒ता वाज॒मा द॑र्षि॒ भूरिं॑ गो॒त्रा रु॒जन्नंगिं॑रोभिर्गृणा॒नः ॥
८

अ॒पः । यत् । अद्रि॑म् । पु॒रु॒ऽहू॒त॒ । दर्दः॑ । आ॒विः । भु॒व॒त् ।
स॒रमा॑ । पू॒र्व्यम् । ते॒ ।

सः । न॒ः । ने॒ता । वाज॑म् । आ । द॒र्षि॒ । भूरि॑म् । गो॒त्रा ।
रु॒जन् । अङ्गि॑रःऽभिः । गृ॒णा॒नः ॥८

अपः । यत् । अद्रिम् । पुरुऽहूत । दर्दः । आविः । भुवत् ।
सरमा । पूर्व्यम् । ते ।

सः । नः । नेता । वाजम् । आ । दर्षि । भूरिम् । गोत्रा ।
रुजन् । अङ्गिरःऽभिः । गृणानः ॥८

हे "पुरुहूत बहुभिराहूतेन्द्र "यत् यदा “अपः प्रति वृष्टिलक्षणान्युदकानि लक्षीकृत्य “अद्रिं मेघं “दर्दः विदारितवानसि। "सरमा देवशुनी "पूर्व्यं पुरा "ते तुभ्यं पणिभिः अपहृतं गोधनम् "आविर्भुवत् प्रकाशयामास । “अङ्गिरोभिः ऋषिभिः "गृणानः स्तूयमानः सन् “गोत्रा

गोत्राण्यभ्राणि "रुजन् "नः अस्मान "भूरि प्रभूतं "वाजम् अन्नं "नेता प्रापयिता "सः त्वम् "आ "दर्षि आदरं कृतवानसि ॥

अच्छा॑ क॒विं नृ॑मणो गा अ॒भिष्टौ॒ स्व॑र्षाता मघव॒न्नाध॑मानं ।

ऊ॒तिभि॒स्तमि॑षणो द्यु॒म्नहू॑तौ॒ नि मा॒यावा॒नब्र॑ह्मा॒ दस्यु॑रर्त ॥ ९

अच्छ॑ । क॒विम् । नृ॒ऽम॒नः॒ । गाः॒ । अ॒भिष्टौ॑ । स्वः॑ऽसाता । म॒घ॒ऽव॒न् । नाध॑मानम् ।

ऊ॒तिऽभिः॑ । तम् । इ॒ष॒णः॒ । द्यु॒म्नऽहू॑तौ । नि । मा॒याऽवा॑न् । अब्र॑ह्मा । दस्युः॑ । अ॒र्त॒ ॥९

अच्छ । कविम् । नृऽमनः । गाः । अभिष्टौ । स्वःऽसाता । मघऽवन् । नाधमानम् ।

ऊतिऽभिः । तम् । इषणः । द्युम्नऽहूतौ । नि । मायाऽवान् । अब्रह्मा । दस्युः । अर्त ॥९

हे "मघवन् धनवन्निन्द्र "नृमणः नृभिर्मनुष्यैर्मन्यते इति नृमणः । त्वं "कविं मेधाविनं कुत्सम् “अच्छ’ “गाः अभ्यगाः । किंच "स्वर्षाता । स्वर्धनम् । तस्य सातौ दाने निमित्ते "अभिष्टौ कवेरभिगमे सति "नाधमानं युद्धार्थं त्वां याचमानं कुत्सम् “ऊतिभिः शत्रुकृतोपद्रवपरिहाररूपै रक्षणैः "इषणः प्रेरितवानसि । "मायावान् कपटवान् "अब्रह्मा । ऋत्विग्भिः क्रियमाणं सर्वं कर्मजातमनुज्ञारूपेण जानन् ऋत्विग्विशेषो ब्रह्मशब्देनोच्यते । स न विद्यते यस्य असौ अब्रह्मा । वेदोक्तकर्मस्वास्तिक्यरहितः इत्यर्थः । "दस्युः कुत्सस्य शत्रुः "द्युम्नहूतौ द्युम्नं धनं हूतिराह्वानं यस्यां युधि तस्यां "नि "अर्त विनष्टो बभूव । इन्द्रः कुत्सेनाहूतः सन् तस्य शत्रुं हतवानित्यर्थः ॥

आ दंस्युघ्ना मनंसा याह्यस्तं भुवंत्ते कुत्सः॑ सख्ये निकांमः ।

स्वे योनौ नि षंदतं सरूंपा वि वां चिकित्सदृतचिद्ध नारीं ॥ १०

आ । दस्युऽघ्ना । मनंसा । याहि । अस्तंम् । भुवंत् । ते । कुत्सः॑ । सख्ये । निऽकांमः ।

स्वे । योनौं । नि । सदतम् । सऽरूंपा । वि । वाम् । चिकित्सत् । ऋतऽचित् । ह । नारीं ॥१०

आ । दस्युऽघ्ना । मनसा । याहि । अस्तम् । भुवत् । ते । कुत्सः । सख्ये । निऽकामः ।

स्वे । योनौ । नि । सदतम् । सऽरूपा । वि । वाम् । चिकित्सत् । ऋतऽचित् । ह । नारी ॥१०

अत्र काचिदाख्यायिका श्रूयते । कथम् । रुरुनामकः कश्चिद्राजर्षिः । तस्य पुत्रः कुत्साख्यो राजर्षिरासीत् । स च कदाचित् शत्रुभिः सह युयुत्सुः संग्रामे स्वयमशक्तः सन् शत्रूणां हननार्थमिन्द्रस्य आह्वानं चकार । स चेन्द्रः कुत्सस्य गृहमागत्य तस्य शत्रून् जघान । तदनन्तरमतिप्रीत्या तयोः सख्यमभवत् । सख्यानन्तरमिन्द्र एनमपि स्वकीयं गृहं प्रापयामास । तत्र शची इन्द्रं प्राप्तुमागता सती तौ समानरूपौ दृष्ट्वा अयमिन्द्रोऽयं कुत्स इति विवेकाभावेन संशयं चकार इति । अनयाख्यायिकया प्रतीयमानोऽर्थोऽत्र प्रतिपाद्यते । हे इन्द्र "दस्युघ्ना दस्यूनां शत्रूणां हन्त्रा "मनसा युक्तस्त्वम् "अस्तं कुत्सस्य गृहम् । अस्तमिति गृहनामैतत् । “आ "याहि आगाः ॥ लुङर्थे लोट् ॥ "कुत्सः च "ते तव संबन्धिनि "सख्ये "निकामः नितरां कामयमानः "भुवत् अभवत्। ततः तौ युवां "स्वे योनौ स्वकीये स्थाने "नि “षदतं न्यसीदतम् । उपविष्टावभूतम् । “ऋतचित्

सत्यदर्शनी "नारी इन्द्रस्य भार्या शची "सरूपा सरूपौ समानरूपौ "वां युवां "वि "चिकित्सत् संशयं चकार ॥ ॥ १८ ॥

यासि॒ कुत्से॑न स॒रथ॑मव॒स्युस्तो॒दो वात॑स्य॒ हर्यो॒रीशा॑नः ।

ऋ॒ज्रा वाजं॒ न गध्यं॒ युयू॑षन्क॒विर्यद॑ह॒न्पार्या॑य॒ भूषा॑त् ॥११

यासि॑ । कुत्से॑न । स॒ऽरथ॑म् । अ॒व॒स्युः । तो॒दः । वात॑स्य । हर्योः॑ । ईशा॑नः ।

ऋ॒ज्रा । वाज॑म् । न । गध्य॑म् । युयू॑षन् । क॒विः । यत् । अह॑न् । पार्या॑य । भूषा॑त् ॥११

यासि । कुत्सेन । सऽरथम् । अवस्युः । तोदः । वातस्य । हर्योः । ईशानः ।

ऋज्रा । वाजम् । न । गध्यम् । युयूषन् । कविः । यत् । अहन् । पार्याय । भूषात् ॥११

हे इन्द्र "अवस्युः कुत्सस्य रक्षणमिच्छन् ॥ छन्दसि क्यच् परेच्छायामपि दृश्यते ॥ "तोदः तोदकः शत्रूणां हिंसकः "वातस्य वायुसदृशयोर्वेगवतोः "हर्योः अश्वयोः "ईशानः ईश्वरस्त्वं "कुत्सेन कुत्साख्येन राजर्षिणा "सरथं समानरथं "यासि गच्छसि। "गध्यं ग्राह्यम् । गध्यं गृह्णातेः। ऋज्रा वाजं न गध्यं युयूषन्नित्यपि निगमो भवति ' (निरु. ५. १५) इति निरुक्तम् । "वाजं "न अन्नमिव "ऋज्रा ऋजुगामिनौ अश्वौ "युयूषन् स्वकीये रथे योजयन् "कविः प्राज्ञः कुत्सः "यत् यस्मिन् "अहन् अहनि दिवसे "पार्याय पारणाय आपन्निस्तरणाय "भूषात् प्रभवते । तस्मिन्नेव दिने कुत्सेन सरथं यासीति पूर्वेण संबन्धः ।।

कुत्सा॑य॒ शुष्ण॑म॒शुषं॒ नि ब॑र्हीः प्रपि॒त्वे अह्न॒ः कुय॑वं स॒हस्रा॑ ।

स॒द्यो दस्यू॒न्प्र मृ॑ण कु॒त्स्येन॒ प्र सूर॑श्च॒क्रं वृ॑हताद॒भीके॑ ॥१२

कुत्सा॑य । शुष्ण॑म् । अ॒शुष॑म् । नि । ब॒र्हीः॒ । प्र॒ऽपि॒त्वे । अह्न॑ः । कुय॑वम् । स॒हस्रा॑ ।

स॒द्यः । दस्यू॑न् । प्र । मृ॒ण॒ । कु॒त्स्येन॑ । प्र । सूर॑ः । च॒क्रम् । वृ॒ह॒ता॒त् । अ॒भीके॑ ॥१२

कुत्साय । शुष्णम् । अशुषम् । नि । बर्हीः । प्रऽपित्वे । अह्नः । कुयवम् । सहस्रा ।

सद्यः । दस्यून् । प्र । मृण । कुत्स्येन । प्र । सूरः । चक्रम् । वृहतात् । अभीके ॥१२

‘ शुष्णं पिप्रुम्' (ऋ. सं. १. १०३. ८) इत्यस्यामृचि प्रतिपादितः अर्थः ‘ कुत्साय' इत्यनेन ऋग्द्वयेन स्पष्टीक्रियते । हे इन्द्र त्वं “कुत्साय कुत्सार्थम् "अशुषम् । शूषमिति सुखनामैतत् । तद्रहितम् । अत्र दीर्घाभावः । “शुष्णं शुष्णनामानमसुरं "नि “बर्हीः न्यबर्हीः अवधीः । तथा “अह्नः दिवसस्य “प्रपित्वे प्रक्रमे पूर्वाह्ने "कुयवं कुयवनामानमसुरं च हतवानसि । तथा स त्वं "सहस्रा सहस्रेण बहुभिः परिजनैः सह "सद्यः यस्मिन् काले कुयवमवधीस्तस्मिन् काल एव “कुत्स्येन । कुत्स इति वज्रनामैतत् । कुत्स एव कुत्स्यं वज्रम् । तेन "दस्यून् शत्रून् “प्र “मृण जहि ॥ भूतार्थे लोट् ॥ हतवानसि । तथा "सूरः प्रेरकस्य सूर्यस्य "चक्रम् आयुधम् "अभीके समीपे संग्रामे वा “प्र “वृहतात् प्रकर्षेण छिन्नवानसि॥

त्वं पिप्रुं॒ मृग॑यं शूशु॒वांस॑मृ॒जिश्व॑ने वैदथि॒नाय॑ रंधीः ।

पं॒चा॒शत्कृ॒ष्णा नि वं॑पः स॒हस्रा॒त्कं॒ न पुरों जरि॒मा वि दं॑र्दः ॥ १३

त्वम् । पिप्रुं॑म् । मृगं॑यम् । शू॒शु॒ऽवांसं॑म् । ऋ॒जिश्वं॑ने । वै॒द॒थि॒नायं॑ । र॒न्धी॒ः ।

प॒ञ्चा॒शत् । कृ॒ष्णा । नि । व॒प॒ः । स॒हस्रां॑ । अत्कं॑म् । न । पुरः॑ । ज॒रि॒मा । वि । द॒र्द॒रितिं॑ दर्दः ॥१३

त्वम् । पिप्रुम् । मृगयम् । शूशुऽवांसम् । ऋजिश्वने । वैदथिनाय । रन्धीः ।

पञ्चाशत् । कृष्णा । नि । वपः । सहस्रा । अत्कम् । न । पुरः । जरिमा । वि । दर्दरिति दर्दः ॥१३

हे इन्द्र "त्वं “पिप्रुं पिप्रुनामानमसुरं “शूशुवांसं प्रवृद्धं “मृगयं मृगयनामानमसुरं च हतवानसि किंच स त्वं "वैदथिनाय विदथिनः पुत्राय “ऋजिश्वने ऋजिश्वनाम्ने राज्ञे

"रन्धीः वशमनयः । "पञ्चाशत् पञ्चाशत्संख्याकानि "सहस्रा सहस्राणि "कृष्णा कृष्णवर्णानि रक्षांसि "नि "वपः न्यवपः अवधीः । तथा स त्वं "जरिमा जरा "अत्कं "न वयोविशेषं रूपमिव "पुरः शम्बरस्य नगराणि "वि "दर्दः विदारितवानसि ॥

सूरं उपाके तन्वंं दधांनो वि यत्ते चेत्यमृतंस्य वर्पः ।

मृगो न हस्ती तविंषीमुषाणः सिंहो न भीम आयुंधानि बिभ्रंत् ॥१४

सूरः । उपाके । तन्वंम् । दधांनः । वि । यत् । ते । चेतिं । अमृतंस्य । वर्पः ।

मृगः । न । हस्ती । तविंषीम् । उषाणः । सिंहः । न । भीमः । आयुंधानि । बिभ्रंत् ॥१४

सूरः । उपाके । तन्वम् । दधानः । वि । यत् । ते । चेति । अमृतस्य । वर्पः ।

मृगः । न । हस्ती । तविषीम् । उषाणः । सिंहः । न । भीमः । आयुधानि । बिभ्रत् ॥१४

हे इन्द्र "सूरः प्रेरकस्य सूर्यस्य "उपाके समीपे "तन्वं त्वदीयं शरीरं "यत् यदा "दधानः धारकोऽभवः तदा “अमृतस्य मरणरहितस्य “ते त्वदीयं "वर्पः रूपं "वि “चेति व्यचेति । हे इन्द्र ज्ञातृभिर्विशेषेण अज्ञायत । सूर्यस्य समीपे सर्वाणि रूपाणि मलिनीभवन्ति न तथेन्द्रस्य रूपं किंतु सूर्यस्य समीपे इन्द्रस्य रूपं विशेषेण भासमानं बभूवेत्यर्थः । अपि च हे इन्द्र “हस्ती "मृगः “न गजविशेषो मृग इव "तविषीं परेषां बलम् "उषाणः दहन “आयुधानि वज्रादीनि शस्त्राणि "बिभ्रत् बिभ्राणस्त्वं “सिंहो "न सिंह इव "भीमः भयंकरोऽभूः ॥

इंद्रं॒ कामा॑ वसू॒यंतो॑ अग्म॒न्त्स्व॑र्मीळ्हे॒ न सव॑ने चका॒नाः ।

श्र॒व॒स्यवः॑ शशमा॒नास॑ उ॒क्थैरोको॒ न र॒ण्वा सु॒दृशी॑व पु॒ष्टिः ॥१५

इन्द्र॑म् । कामाः॑ । व॒सु॒ऽयन्तः॑ । अ॒ग्म॒न् । स्वः॑ऽमीळ्हे । न । सव॑ने । च॒का॒नाः ।

श्र॒व॒स्यवः॑ । श॒श॒मा॒नासः॑ । उ॒क्थैः । ओकः॑ । न । र॒ण्वा । सु॒दृशी॑ऽइव । पु॒ष्टिः ॥१५

इन्द्रम् । कामाः । वसुऽयन्तः । अग्मन् । स्वःऽमीळ्हे । न । सवने । चकानाः ।

श्रवस्यवः । शशमानासः । उक्थैः । ओकः । न । रण्वा । सुदृशीऽइव । पुष्टिः ॥१५

“कामाः राक्षसादिभयनिवारणार्थमिन्द्रं कामयमानाः "वसूयन्तः पश्वादिधनमिच्छन्तः स्तोतारः “इन्द्रं परमैश्वर्ययुक्तम् "अग्मन् अगमन् गच्छन्ति ॥ वर्तमानेऽर्थे छान्दसो लुङ् ॥ कीदृशाः स्तोतारः । “स्वर्मीळ्हे “न युद्धे इव "सवने यज्ञे “चकानाः याचमानाः “श्रवस्यवः अन्नकामाः "उक्थैः स्तोत्रैः “शशमानासः शंसमानाः स्तुवन्तः । तदा सोऽयमिन्द्रः “ओको "न स्तोतॄणामावास इव भवति । “रण्वा रमणीया “सुदृशीव “पुष्टिः शोभनदर्शना लक्ष्मीरिव भवति ॥ ॥ १९ ॥

तमिद्ध॒ इंद्रं॑ सु॒हवं॑ हुवेम॒ यस्ता च॒कार॒ नर्या॑ पु॒रूणि॑ ।

यो माव॑ते जरि॒त्रे गध्यं॑ चिन्म॒क्षू वाजं॒ भरं॑ति स्पा॒र्हरा॑धाः ॥ १६

तम् । इत् । व॒: । इन्द्रं॑म् । सु॒ऽहवं॑म् । हु॒वे॒म॒ । यः । ता ।
च॒कारं॑ । नर्या॑ । पु॒रूणिं॑ ।

यः । माऽवं॑ते । ज॒रि॒त्रे । गध्यं॑म् । चि॒त् । म॒क्षु । वाजं॑म् ।
भरं॑ति । स्पा॒र्हऽरां॑धाः ॥१६

तम् । इत् । वः । इन्द्रम् । सुऽहवम् । हुवेम । यः । ता ।
चकार । नर्या । पुरूणि ।

यः । माऽवते । जरित्रे । गध्यम् । चित् । मक्षु । वाजम् ।
भरति । स्पार्हऽराधाः ॥१६

“यः इन्द्रः “नर्या नर्याणि मनुष्यहितानि “पुरूणि बहूनि “ता तानि प्रसिद्धानि कर्माणि “चकार अकरोत् । किंच "स्पार्हराधाः स्पृहणीयधनः "यः इन्द्रः "मावते मत्सदृशाय “जरित्रे स्तोत्रे “गध्यं चित् ग्राह्यं संयोजनीयमपि “वाजम् अन्नं "मक्षु शीघ्रं "भरति आहरति । वयं स्तोतारो हे

यजमानाः "वः युष्मभ्यं "तमित् तमेव “इन्द्रं "सुहवं शोभनमाह्वानं यथा भवति तथा “हुवेम आह्वयामः ।।

ति॒ग्मा यदं॒तर॒शनि॒ः पता॑ति॒ कस्मिं॑चिच्छूर मुहु॒के जना॑नां ।

घो॒रा यद॑र्य॒ सम॑ृति॒र्भवा॒त्यध॑ स्मा नस्त॒न्वो॑ बोधि गो॒पाः ॥
१७

ति॒ग्मा । यत् । अ॒न्तः । अ॒शनि॑ः । पता॑ति । कस्मि॑न् ।
चि॒त् । शू॒र॒ । मु॒हु॒के । जना॑नाम् ।

घो॒रा । यत् । अ॒र्य॒ । सम्ऽऋ॑तिः । भवा॑ति । अध॑ । स्म॒ ।
न॒ः । त॒न्व॑ः । बो॒धि॒ । गो॒पाः ॥१७

तिग्मा । यत् । अन्तः । अशनिः । पताति । कस्मिन् ।
चित् । शूर । मुहुके । जनानाम् ।

घोरा । यत् । अर्य । सम्ऽऋतिः । भवाति । अध । स्म ।
नः । तन्वः । बोधि । गोपाः ॥१७

हे "शूर विक्रान्तेन्द्र "यत् यदा "कस्मिंश्चित् सर्वस्मिन्नपि "जनानां मनुष्याणां "मुहुके मोहके युद्धे "अन्तः अस्माकं मध्ये "तिग्मा तीक्ष्णा "अशनिः "पताति पतेत् । हे "अर्य स्वामिन्निन्द्र "यत् यदास्माकं शत्रुभिः सह "घोरा भीमरूपा "समृतिः युद्धं "भवाति भवेत् । "अध तदानीं "नः अस्मदीयस्य "तन्वः शरीरस्य "गोपाः रक्षकः "बोधि "स्म अबोधि । शत्रुभ्यः सकाशात् अस्मान् रक्षकत्वेन बुद्धवानसि खलु ।।

भुवोंऽवि॒ता वा॒मदेंवस्य धी॒नां भुव॒ः सखांवृ॒को वाजंसातौ ।

त्वामनु॒ प्रमंति॒मा जंगन्मोरु॒शंसों जरि॒त्रे वि॒श्वधं स्याः ॥१८

भुवः॑ । अ॒वि॒ता । वा॒मऽदे॑वस्य । धी॒नाम् । भुवः॑ । सखा॑ । अ॒वृ॒कः । वाज॑ऽसातौ ।

त्वाम् । अनु॑ । प्रऽम॑तिम् । आ । ज॒ग॒न्म॒ । उ॒रु॒ऽशंसः॑ । ज॒रि॒त्रे । वि॒श्वध॑ । स्या॒ः ॥१८

भुवः । अविता । वामऽदेवस्य । धीनाम् । भुवः । सखा । अवृकः । वाजऽसातौ ।

त्वाम् । अनु । प्रऽमतिम् । आ । जगन्म । उरुऽशंसः । जरित्रे । विश्वध । स्याः ॥१८

हे इन्द्र त्वं "वामदेवस्य वामदेवाख्यस्य मन्त्रद्रष्टुर्मम संबन्धिनीनां “धीनां कर्मणाम् "अविता रक्षिता "भुवः भव । "अवृकः हिंसारहितस्त्वं "वाजसातौ युद्धे "सखा मम सुहृत् "भुवः भव । हे इन्द्र वयं "प्रमतिं प्रकृष्टज्ञानं “त्वामनु लक्षीकृत्य “आ “जगन्म आगच्छाम । स त्वं "विश्वध

सर्वदा “जरित्रे स्तोत्रे "उरुर्वांसः महता शंसनेन युक्तः "स्याः भवेः ।।

ए॒भिर्नृभिंरिंद्र त्वा॒युभिंष्ट्वा म॒घवंद्धिर्मघव॒न्विश्वं आ॒जौ ।

द्यावो॒ न द्यु॒म्नैर॒भि संतों अ॒र्यः क्ष॒पो मंदेम श॒रदंश्च पू॒र्वीः ॥ १९

ए॒भिः । नृऽभिः॑ । इ॒न्द्र॒ । त्वा॒युऽभिः॑ । त्वा॒ । म॒घवंत्ऽभिः । म॒घ॒ऽव॒न् । विश्वें । आ॒जौ ।

द्यावः॑ । न । द्यु॒म्नैः । अ॒भि । सन्तः॑ । अ॒र्यः । क्ष॒पः । म॒दे॒म॒ । श॒रदः॑ । च॒ । पू॒र्वीः ॥१९

एभिः । नृऽभिः । इन्द्र । त्वायुऽभिः । त्वा । मघवत्ऽभिः । मघऽवन् । विश्वे । आजौ ।

द्यावः । न । द्युम्नैः । अभि । सन्तः । अर्यः । क्षपः । मदेम । शरदः । च । पूर्वीः ॥१९

हे मघवन् धनवन् "इन्द्र “विश्वे विश्वस्मिन् “आजौ संग्रामे “त्वायुभिः शत्रुजयार्थं त्वां कामयमानैः "मघवद्भिः त्वदर्थं दीयमानहविर्लक्षणैर्धनैरुपेतैः “एभिः प्रत्यक्षेणोपलभ्यमानैः "नृभिः पुत्रपौत्राद्यैः परिजनैः सहिता वयं यजमानाः "द्युम्नैः धनैः "द्यावो "न द्योतमानाः प्रकाशमाना धनिनो यथा तथा "अर्यः अरीन् शत्रून् "अभि "सन्तः अभिभवन्तः "क्षपः सर्वा रात्रीः "पूर्वीः बह्वीः “शरदश्च संवत्सरांश्च "मदेम स्तवाम । यजमानाः सर्वेषु कालेषु स्तोत्रैरिन्द्रं हर्षयन्तीत्यर्थः ॥

ए॒वेदिं॒द्रा॑य वृ॒ष॒भाय॒ वृष्णे॒ ब्रह्मा॑कर्म॒ भृग॑वो॒ न रथं॑ ।

नू चि॒द्यथां नः स॒ख्या वि॒योष॒दसंन्न उ॒ग्रोंऽवि॒ता तंनू॒पाः ॥ २०

ए॒व । इत् । इन्द्रांय । वृ॒ष॒भायं । वृष्णें । ब्रह्मं । अ॒कु॒र्म॒ । भृगंवः । न । रथंम् ।

नु । चि॒त् । यथां । नः॒ । स॒ख्या । वि॒ऽयोषंत् । असंत् । नः॒ । उ॒ग्रः । अ॒वि॒ता । त॒नू॒ऽपाः ॥२०

एव । इत् । इन्द्राय । वृषभाय । वृष्णे । ब्रह्म । अकर्म । भृगवः । न । रथम् ।

नु । चित् । यथा । नः । सख्या । विऽयोषत् । असत् । नः । उग्रः । अविता । तनूऽपाः ॥२०

“यथा इन्द्रः "नः अस्मदीयानि "सख्या सख्यानि कर्माणि "नू “चित् क्षिप्रमेव “वियोषत् न पृथक्कुर्यात् । "उग्रः तेजस्वी “तनूपाः शरीराणां पालक इन्द्रो यथा "नः अस्मान्

"अविता रक्षिता “असत् स्यात् । तथा वयं यजमानाः "एवेत् एवमेवोक्तप्रकारेण “इन्द्राय "वृषभाय कामानां वर्षित्रे “वृष्णे नित्यतरुणाय “ब्रह्म स्तोत्रम् "अकर्म अकुर्म । तत्र दृष्टान्तः । “भृगवः दीप्तास्तक्षाणः "रथं “न रथमिव तद्वत् । यजमानेभ्यो यथेन्द्रोऽभीप्सितफलप्रदो भवति तथेन्द्रं यजमानाः स्तुवन्तीत्यर्थः ॥ १८ ॥

नू ष्टु॒त इं॑द्र॒ नू गृं॑णा॒न इषं॑ जरि॒त्रे न॒द्यो॒३॒ न पीं॑पेः ।

अकां॑रि ते हरिवो॒ ब्रह्म॒ नव्यं॑ धि॒या स्यां॑म र॒थ्यः॑ सदा॒साः ॥ २१

नु । स्तु॒तः । इ॒न्द्र॒ । नु । गृ॒णा॒नः । इषं॑म् । ज॒रि॒त्रे । न॒द्यः॑ । न । पी॒पे॒रिति॑ पीपेः ।

अकांरि । ते॒ । ह॒रि॒ऽव॒ः । ब्रह्मं । नव्यंम् । धि॒या । स्या॒म॒ । र॒थ्यः॑ । स॒दा॒ऽसाः ॥२१

नु । स्तुतः । इन्द्र । नु । गृणानः । इषम् । जरित्रे । नद्यः । न । पीपेरिति पीपेः ।

अकारि । ते । हरिऽवः । ब्रह्म । नव्यम् । धिया । स्याम । रथ्यः । सदाऽसाः ॥२१

हे "इन्द्र "नु क्षिप्रं "स्तुतः पूर्वैर्ऋषिभिः संस्तुतः "नु क्षिप्रं "गृणानः अस्माभिः स्तूयमानश्च त्वम् "इषम् अन्नं "जरित्रे स्तोत्रे मह्यं "नद्यो "न अद्भिर्नदीरिव “पीपेः प्यायय प्रवृद्धं कुरु । हे “हरिवः हरिवन् हरिसंज्ञकाश्वोपेतेन्द्र "ते तुभ्यं "नव्यं नवतरं "ब्रह्म स्तोत्रम् "अकारि अस्माभिः क्रियते । "रथ्यः रथवन्तो वयं "धिया प्रज्ञारूपया स्तुत्या "सदासाः त्वां सर्वदा भजमानास्त्वदर्थं हवीरूपस्य अन्नस्य दातारो वा "स्याम भूयास्म ॥ ॥ २० ॥

**टिप्पणी**

४.१६.८ आविर्भुवत् सरमा पूर्व्यं ते। - सरमा उपरि टिप्पणी

४.१६.२० --भृगवो न रथम् -- ऋभवो न रथम् - सायणभा. तुलनीय - ऋ. १०.३९.१४

४.१६.२१ इषं जरित्रे

द्र. इषोपरि टिप्पणी

# ऋग्वेदः सूक्तं ४.१७



दे. इन्द्रः। त्रिष्टुप्,१५ एकपदा विराट्।

समूळ्हे दशरात्रेष्टमेहनि निष्केवल्ये इदं सूक्तं विनियुक्तम् (आश्व.श्रौ. ८.७)। पशुपुरोडाशस्य अनुवाक्या (आश्व.श्रौ. ३.८

---

त्वं महाँ इन्द्र तुभ्यं ह क्षा अनु क्षत्रं मंहना मन्यत द्यौः ।

त्वं वृत्रं शवसा जघन्वान्सृजः सिन्धूँरहिना जग्रसानान् ॥१॥

तव त्विषो जनिमन्रेजत द्यौ रेजद्भूमिर्भियसा स्वस्य मन्योः ।

ऋघायन्त सुभ्वः पर्वतास आर्दन्धन्वानि सरयन्त आपः ॥२॥

भिनद्गिरिं शवसा वज्रमिष्णन्नाविष्कृण्वानः सहसान ओजः ।

वधीद्वृत्रं वज्रेण मन्दसानः सरन्नापो जवसा हतवृष्णीः ॥३॥

सुवीरस्ते जनिता मन्यत द्यौरिन्द्रस्य कर्ता स्वपस्तमो भूत् ।

य ईं जजान स्वर्यं सुवज्रमनपच्युतं सदसो न भूम ॥४॥

य एक इच्च्यावयति प्र भूमा राजा कृष्टीनां पुरुहूत इन्द्रः ।

सत्यमेनमनु विश्वे मदन्ति रातिं देवस्य गृणतो मघोनः ॥५॥

सत्रा सोमा अभवन्नस्य विश्वे सत्रा मदासो बृहतो मदिष्ठाः ।

सत्राभवो वसुपतिर्वसूनां दत्रे विश्वा अधिथा इन्द्र कृष्टीः ॥६॥

त्वमध प्रथमं जायमानोऽमे विश्वा अधिथा इन्द्र कृष्टीः ।

त्वं प्रति प्रवत आशयानमहिं वज्रेण मघवन्वि वृश्चः ॥७॥

सत्राहणं दाधृषिं तुम्रमिन्द्रं महामपारं वृषभं सुवज्रम् ।

हन्ता यो वृत्रं सनितोत वाजं दाता मघानि मघवा सुराधाः ॥८॥

अयं वृतश्चातयते समीचीर्य आजिषु मघवा शृण्व एकः ।

अयं वाजं भरति यं सनोत्यस्य प्रियासः सख्ये स्याम ॥९॥

अयं शृण्वे अध जयन्नुत घ्नन्नयमुत प्र कृणुते युधा गाः ।

यदा सत्यं कृणुते मन्युमिन्द्रो विश्वं दृळ्हं भयत एजदस्मात् ॥१०॥

समिन्द्रो गा अजयत्सं हिरण्या समश्विया मघवा यो ह पूर्वीः ।

एभिर्नृभिर्नृतमो अस्य शाकै रायो विभक्ता सम्भरश्च वस्वः ॥११॥

कियत्स्विदिन्द्रो अध्येति मातुः कियत्पितुर्जनितुर्यो जजान ।

यो अस्य शुष्मं मुहुकैरियर्ति वातो न जूत स्तनयद्भिरभ्रैः ॥१२॥

क्षियन्तं त्वमक्षियन्तं कृणोतीयर्ति रेणुं मघवा समोहम् ।

विभञ्जनुरशनिमाँ इव द्यौरुत स्तोतारं मघवा वसौ धात् ॥१३॥

अयं चक्रमिषणत्सूर्यस्य न्येतशं रीरमत्ससृमाणम् ।

आ कृष्ण ईं जुहुराणो जिघर्ति त्वचो बुध्ने रजसो अस्य योनौ ॥१४॥

असिक्न्यां यजमानो न होता ॥१५॥

गव्यन्त इन्द्रं सख्याय विप्रा अश्वायन्तो वृषणं वाजयन्तः ।

जनीयन्तो जनिदामक्षितोतिमा च्यावयामोऽवते न कोशम् ॥१६॥

त्राता नो बोधि ददृशान आपिरभिख्याता मर्डिता सोम्यानाम् ।

सखा पिता पितृतमः पितॄणां कर्तेमु लोकमुशते वयोधाः ॥१७॥

सखीयतामविता बोधि सखा गृणान इन्द्र स्तुवते वयो धाः ।

वयं ह्या ते चकृमा सबाध आभिः शमीभिर्महयन्त इन्द्र ॥१८॥

स्तुत इन्द्रो मघवा यद्ध वृत्रा भूरीण्येको अप्रतीनि हन्ति ।

अस्य प्रियो जरिता यस्य शर्मन्नकिर्देवा वारयन्ते न मर्ताः ॥१९॥

एवा न इन्द्रो मघवा विरप्शी करत्सत्या चर्षणीधृदनर्वा ।

त्वं राजा जनुषां धेह्यस्मे अधि श्रवो माहिनं यज्जरित्रे ॥२०॥

नू ष्टुत इन्द्र नू गृणान इषं जरित्रे नद्यो न पीपेः ।

अकारि ते हरिवो ब्रह्म नव्यं धिया स्याम रथ्यः सदासाः ॥२१॥

## सायणभाष्यम्

‘ त्वं महाँ इन्द्र तुभ्यम्' इत्येकविंशत्यृचं सप्तमं सूक्तं वामदेवस्यार्षम् । अत्रेयमनुक्रमणिका- त्वं महाँ असिक्न्यामेकपदा ' इति । ‘असिक्न्यां यजमानो न होता' इत्येकपदा विराट् शिष्टा विंशतिः त्रिष्टुभः । इन्द्रो देवता । समूळ्हे दशरात्रेऽष्टमेऽहनि निष्केवल्ये इदं सूक्तं

विनियुक्तम् । तथा च सूत्रितं -- त्वं महाँ इन्द्र तुभ्यमिति निष्केवल्यम्' ( आश्व. श्रौ. ८.७ ) इति । इन्द्रस्य वृत्रघ्नः ' त्वं महाँ' इति पशुपुरोडाशस्यानुवाक्या । सूत्रितं च-' त्वं महाँ इन्द्र तुभ्यं ह क्षाः सत्राहणम् ' ( आश्व. श्रौ. ३. ८) इति ।।

त्वं म॒हाँ इं॑द्र॒ तुभ्यं॑ ह॒ क्षा अनु॑ क्ष॒त्रं मं॒हना॑ मन्यत॒ द्यौः ।

त्वं वृ॒त्रं शव॑सा जघ॒न्वान्त्सृ॒जः सिंधूँ॒रहि॑ना जग्रसा॒नान् ॥१

त्वम् । म॒हान् । इ॒न्द्र॒ । तुभ्य॑म् । ह॒ । क्षाः । अनु॑ । क्ष॒त्रम् । मं॒हना॑ । म॒न्य॒त॒ । द्यौः ।

त्वम् । वृ॒त्रम् । शव॑सा । ज॒घ॒न्वान् । सृ॒जः । सिन्धू॑न् । अहि॑ना । ज॒ग्र॒सा॒नान् ॥१

त्वम् । महान् । इन्द्र । तुभ्यम् । ह । क्षाः । अनु । क्षत्रम् । मंहना । मन्यत । द्यौः ।

त्वम् । वृत्रम् । शवसा । जघन्वान् । सृजः । सिन्धून् । अहिना । जग्रसानान् ॥१

हे “इन्द्र “त्वं "महान् प्रभूतो भवसि । "क्षाः पृथिवी । क्षा इति पृथिवीनामैतत् । "मंहना महत्त्वेन युक्ता सती "तुभ्यं “ह त्वदर्थमेव "क्षत्रं त्वदीयं बलम् "अनु मन्यत अन्वमन्यत । अनुमतीचकार । "द्यौः च त्वदर्थं बलमन्वमन्यत । हे इन्द्र “त्वं "शवसा त्वदीयेन बलेन "वृत्रं लोकानाम् आवरकं वृत्रनामकम्" असुरं "जघन्वान् हतवान् । किंच "अहिना वृत्रेण "जग्रसानान् जग्रहाणान् ग्रस्तान् ॥ ग्रसतेर्लिटः कानजादेशः ॥ "सिन्धून् अपः "सृजः असृजः सृष्टवानसि ||

तवं त्वि॒षो जनिं॑मन्रेजत॒ द्यौ रेज॒द्भूमिं॑र्भि॒यसा॒ स्वस्यं म॒न्योः ।

ऋ॒घा॒यंतं सु॒भ्वः१॒ पर्वं॑तास॒ आर्द॒न्धन्वां॑नि स॒रयंत॒ आपः॑ ॥२

तवं । त्वि॒षः । जनिं॑मन् । रे॒ज॒त॒ । द्यौः । रेजंत् । भूमिः॑ । भि॒यसां । स्वस्यं । म॒न्योः ।

ऋ॒घा॒यन्तं । सु॒ऽभ्वः॑ । पर्वं॑तासः । आर्दं॑न् । धन्वां॑नि । स॒रयंन्ते । आपः॑ ॥२

तव । त्विषः । जनिमन् । रेजत । द्यौः । रेजत् । भूमिः । भियसा । स्वस्य । मन्योः ।

ऋघायन्त । सुऽभ्वः । पर्वतासः । आर्दन् । धन्वानि । सरयन्ते । आपः ॥२

हे इन्द्र “त्विषः दीप्यमानस्य “तव त्वदीये “जनिमन् जन्मनि सति “द्यौः अन्तरिक्षं “स्वस्य त्वदीयात् "मन्योः कोपात् । पञ्चम्यर्थे षष्ठी । “भियसा जातभयेन “रेजत अरेजत् । अकम्पत । “भूमिः च "रेजत् कम्पमाना बभूव । “सुभ्वः महान्तः “पर्वतासः । पर्वता मेघाः । “ऋघायन्त सस्यादीनां वृष्टिप्रदानार्थं नियामकेन त्वया अबाध्यन्त । तथा मेघाः “आर्दन् प्राणिनां पिपासारूपां पीडामहिंसन् । तथा मेघाः “धन्वानि उदकरहितान् देशान् “आपः अपः “सरयन्ते गमयन्ति ॥

भि॒नद्गि॒रिं शवं॑सा॒ वज्रं॑मि॒ष्णन्ना॑विष्कृ॒ण्वा॒नः सं॑हसा॒न ओजः॑ ।

वधीं॑द्वृ॒त्रं वज्रे॑ण मंदसा॒नः सर॒न्नापो॒ जवं॑सा ह॒तवृं॑ष्णीः ॥३

भि॒नत् । गि॒रिम् । शव॑सा । वज्र॑म् । इ॒ष्णन् ।
आ॒वि॒ःऽकृ॒ण्वा॒नः । स॒ह॒सा॒नः । ओजः॑ ।

वधी॑त् । वृ॒त्रम् । वज्रे॑ण । म॒न्द॒सा॒नः । सर॑न् । आपः॑ ।
जव॑सा । ह॒तऽवृ॑ष्णीः ॥३

भिनत् । गिरिम् । शवसा । वज्रम् । इष्णन् ।
आविःऽकृण्वानः । सहसानः । ओजः ।

वधीत् । वृत्रम् । वज्रेण । मन्दसानः । सरन् । आपः ।
जवसा । हतऽवृष्णीः ॥३

"सहसानः शत्रूणामभिभवन् “ओजः तेजः आविष्कृण्वानः आविष्कुर्वन् इन्द्रः “वज्रमिष्णान् वज्रं प्रेरयन् “शवसा बलेन “गिरिं पर्वतं जातं “भिनत् अभिनत् बिभेद । किंच “मन्दसानः सोमेन मोदमान इन्द्रः “वज्रेण "वृत्रं वृत्रनामानमसुरं “वधीत् अवधीत् जघान । ततः “आपः

वृत्रेणावृतान्युदकानि “हतवृष्णीः । हतो वृषा वृत्रो यासां ता हतवृष्ण्यः । ता वृत्रवधानन्तरं निवारणरहिताः सत्यः "जवसा वेगेन “सरन् असरन् अगच्छन् ॥

सुवीरंस्ते जनिता मंन्यत द्यौरिंद्रंस्य कर्ता स्वपंस्तमो भूत् ।

य ईं जजानं स्वर्यं सुवज्रमनंपच्युतं सदंसो न भूमं ॥४

सुऽवीरः । ते । जनिता । मन्यत । द्यौः । इन्द्रंस्य । कर्ता । स्वपःऽतमः । भूत् ।

यः । ईम् । जजानं । स्वर्यंम् । सुऽवज्रंम् । अनंपऽच्युतम् । सदंसः । न । भूमं ॥४

सुऽवीरः । ते । जनिता । मन्यत । द्यौः । इन्द्रस्य । कर्ता । स्वपःऽतमः । भूत् ।

यः । ईम् । जजान । स्वर्यम् । सुऽवज्रम् । अनपऽच्युतम् । सदसः । न । भूम ॥४

हे इन्द्र “यः प्रजापतिः “स्वर्यम् ऋत्विगादिभिः स्तुत्यं "सुवज्रं शोभनवज्रोपेतं "सदसः स्वकीयात् स्वर्गाख्यात् स्थानात् "अनपच्युतं विच्युतिरहितं च । “न इति समुच्चयार्थे । 'भूम भूम्ना महत्त्वेन युक्तम् “ईम् एनं त्वां “जजान अजीजनत् ॥ ‘ जन जनने ' इति धातुः ॥ “द्यौः द्योतमानः “ते तव “जनिता जनयिता स प्रजापतिः “सुवीरः शोभनपुत्रवानहमस्मीति “मन्यत अमन्यत । किंच “इन्द्रस्य “कर्ता इन्द्रस्य जनयिता प्रजापतिः “स्वपस्तमः अत्यन्तं शोभनकर्मा अभूत् ॥

य एकं इच्च्या॒वयंति॒ प्र भूमा॒ राजां कृष्टी॒नां पुंरुहू॒त इंद्रः॑ ।

स॒त्यमेंन॒मनु॒ विश्वें मदंति रा॒तिं दे॒वस्यं गृण॒तो म॒घोनः॑ ॥५

यः । एकः॑ । इत् । च्य॒वयं॑ति । प्र । भूमं॑ । राजा॑ ।
कृ॒ष्टी॒नाम् । पु॒रु॒ऽहू॒तः । इन्द्रः॑ ।

स॒त्यम् । ए॒न॒म् । अनु॑ । विश्वे॑ । म॒द॒न्ति॒ । रा॒तिम् । दे॒वस्यं॑ ।
गृ॒ण॒तः । म॒घोनः॑ ॥५

यः । एकः । इत् । च्यवयति । प्र । भूम । राजा ।
कृष्टीनाम् । पुरुऽहूतः । इन्द्रः ।

सत्यम् । एनम् । अनु । विश्वे । मदन्ति । रातिम् । देवस्य ।
गृणतः । मघोनः ॥५

"कृष्टीनां सर्वासां प्रजानां "राजा प्रभुः “पुरुहूतः बहुभिराहूतः “एक “इत् देवानां मध्ये मुख्य एवं “यः “इन्द्रः “भूम भूतं निष्पन्नं शत्रुभ्यो भयं “प्र “च्यावयति प्रकर्षेण नाशयति । “विश्वे सर्वे यजमानाः “मघोनः मघवतः । हविर्लक्षणधनवत इत्यर्थः । "देवस्य इन्द्रसमाश्रयात्

द्योतमानस्य “गृणतः स्तुवतः “रातिं बन्धुम् “एनम् इन्द्रम् “अनु लक्षीकृस्य "सत्यम् एव “मदन्ति स्तुवन्ति ॥ ॥ २१ ॥

स॒त्रा सोमा॑ अभवन्नस्य॒ विश्वे॑ स॒त्रा मदा॑सो बृह॒तो मदि॑ष्ठाः ।

स॒त्राभ॑वो॒ वसु॑पति॒र्वसू॑ना॒ं दत्रे॒ विश्वा॑ अधिथा इं॒द्र कृ॒ष्टीः ॥६

स॒त्रा । सोमाः॑ । अ॒भ॒व॒न् । अ॒स्य॒ । विश्वे॑ । स॒त्रा । मदा॑सः । बृ॒ह॒तः । मदि॑ष्ठाः ।

स॒त्रा । अ॒भ॒वः॒ । वसु॑ऽपतिः । वसू॑नाम् । दत्रे॑ । विश्वाः॑ । अ॒धि॒थाः॒ । इ॒न्द्र॒ । कृ॒ष्टीः ॥६

सत्रा । सोमाः । अभवन् । अस्य । विश्वे । सत्रा । मदासः । बृहतः । मदिष्ठाः ।

सत्रा । अभवः । वसुऽपतिः । वसूनाम् । दत्रे । विश्वाः ।
अधिथाः । इन्द्र । कृष्टीः ॥६

“विश्वे सर्वे “सोमाः “अस्य इन्द्रस्य “सत्रा। सत्रेति सत्यनामैतत् । सत्यमेव प्रभूताः “अभवन् । किंच "मदासः मदा मदकराः सोमाः "बृहतः महतोऽस्येन्द्रस्य “मदिष्ठाः मादयितृतमाः “सत्रा सत्यमेवाभवन् । हे “इन्द्र त्वं “वसुपतिः धनपतिः । न केवलं धनपतिः किंतु “वसूनां सर्वेषां पश्वादीनां धनानां पतिः “सत्रा सत्यमेव “अभवः भवसि । हे इन्द्र त्वं "दत्रे धने निमित्तभूते सति “विश्वाः सर्वाः “कृष्टीः स्तोत्रीः प्रजाः "अधिथाः धारयसि ॥

त्वमधं प्रथ॒मं जायं॑मा॒नोऽमे॒ विश्वां॑ अधिथा इंद्र कृ॒ष्टीः ।

त्वं प्रतिं प्र॒वतं आ॒शयां॑न॒महिं॒ वज्रें॑ण मघव॒न्वि वृं॑श्चः ॥७

त्वम् । अर्ध । प्र॒थ॒मम् । जाय॑मानः । अमे॑ । विश्वाः॑ । अ॒धि॒था॒ः । इ॒न्द्र॒ । कृ॒ष्टीः ।

त्वम् । प्रति॑ । प्र॒ऽवतः॑ । आ॒ऽशया॑नम् । अहि॑म् । वज्रे॑ण । म॒घ॒ऽव॒न् । वि । वृ॒श्चः॒ ॥७

त्वम् । अध । प्रथमम् । जायमानः । अमे । विश्वाः । अधिथाः । इन्द्र । कृष्टीः ।

त्वम् । प्रति । प्रऽवतः । आऽशयानम् । अहिम् । वज्रेण । मघऽवन् । वि । वृश्चः ॥७

“अध अपि च "प्रथमम् एव “जायमानः “त्वम् “अमे वृत्रनिमित्ते भये सति “विश्वाः सर्वाः “कृष्टीः प्रजाः “अधिथाः रक्षकत्वेन धारयसि । हे “मघवन् धनवन् “इन्द्र “त्वं “प्रति “प्रवतः प्रति प्रवणानुदकवतो देशान् लक्षीकृत्य

“आशयानम् अपां निरोधकम् "अहिं वृत्रनामानमसुरं “वज्रेण “वि “वृश्चः व्यवृश्चः छिन्नवानसि ।।

इन्द्रस्य वृत्रघ्नः पशौ ' सत्राहणम्' इति हविषोऽनुवाक्या । सूत्रितं च-’ सत्राहणं दाधृषिं तुम्रमिन्द्रं सहदानुं पुरुहूत क्षियन्तम् ' ( आश्व. श्रौ. ३. ८) इति ॥

स॒त्रा॒हणं॒ दाधृ॑षिं॒ तुम्र॒मिंद्रं॑ म॒हाम॑पा॒रं वृ॑ष॒भं सु॒वज्रं॑ ।

हंता॒ यो वृ॒त्रं सनि॑तो॒त वाजं॒ दाता॑ म॒घानि॑ म॒घवा॑ सु॒राधाः॑ ॥ ८

स॒त्रा॒ऽहनं॑ । दधृ॑षिम् । तुम्र॑म् । इन्द्र॑म् । म॒हाम् । अ॒पा॒रम् । वृ॒ष॒भम् । सु॒ऽवज्र॑म् ।

हन्ता॑ । यः । वृ॒त्रम् । सनि॑ता । उ॒त । वाज॑म् । दाता॑ । म॒घानि॑ । म॒घऽवा॑ । सु॒ऽराधाः॑ ॥८

सत्राऽहनन् । दधृषिम् । तुम्रम् । इन्द्रम् । महाम् । अपारम् । वृषभम् । सुऽवज्रम् ।

हन्ता । यः । वृत्रम् । सनिता । उत । वाजम् । दाता । मघानि । मघऽवा । सुऽराधाः ॥८

“सत्राहणं बहूनां शत्रूणां हन्तारं “दाधृषिम् अत्यन्तं धर्षकं “तुम्रम् । तुमिः प्रेरणकर्मा'। शत्रूणां प्रेरकं “महां महान्तम् “अपारम् अपरिमाणम् । विनाशरहितमित्यर्थः। "वृषभं कामानां वर्षितारं “सुवज्रं शोभनेन वज्रेणोपेतम् “इन्द्रम् । वयं स्तोतारः स्तुमेति शेषः । “यः इन्द्रः "वृत्रं वृत्रनामानम् असुरं "हन्ता हिंसिता भवति । “उत अपि च य इन्द्रः “वाजम् अन्नं “सनिता दाता भवति । “सुराधाः शोभनधनयुक्तो यः “मघवा इन्द्रः “मघानि धनानि “दाता भवति । तमिन्द्रं स्तुमेति पूर्वेण अन्वयः ॥ अत्र सर्वत्र

तृनन्तत्वात् ' न लोकाव्यय°' इति षष्ठीप्रतिषेधे सति द्वितीयैव भवति ॥

अ॒यं वृतं॑श्चातयते समी॒चीर्य आ॒जिषु॑ म॒घवां॑ शृ॒ण्व एकः॑ ।

अ॒यं वाजं॑ भरति॒ यं स॒नोत्य॒स्य प्रि॒यासः॑ स॒ख्ये स्यां॑म ॥९

अ॒यम् । वृतः॑ । चा॒त॒य॒ते॒ । स॒म्ऽई॒चीः । यः । आ॒जिषु॑ । म॒घऽवां॑ । शृ॒ण्वे । एकः॑ ।

अ॒यम् । वाजं॑म् । भ॒र॒ति॒ । यम् । स॒नोतिं॑ । अ॒स्य । प्रि॒यासः॑ । स॒ख्ये । स्या॒म॒ ॥९

अयम् । वृतः । चातयते । सम्ऽईचीः । यः । आजिषु । मघऽवा । शृण्वे । एकः ।

अयम् । वाजम् । भरति । यम् । सनोति । अस्य ।
प्रियासः । सख्ये । स्याम ॥९

“मघवा धनवान् “यः इन्द्रः “आजिषु संग्रामेषु “एकः मुख्य एव “शृण्वे श्रूयते । “अयम् इन्द्रः “समीचीः संगताः "वृतः । वृण्वन्त्याच्छादयन्ति लोकानिति वृतः शत्रुसेनाः । ताः “चातयते नाशयति । “अयम् इन्द्रः “यं “वाजं यदन्नं “सनोति यजमानाय ददाति तं वाजं “भरति यजमानस्य तदन्नं दातुं बिभर्ति । स्तोतारो वयम् “अस्य एवंभूतस्येन्द्रस्य “सख्ये सखित्वे प्रियासः प्रियाः “स्याम भवेम ।।

अ॒यं शृं॑ण्वे॒ अध॒ जयं॑न्नु॒त घ्नन्न॒यमु॒त प्र कृ॑णुते यु॒धा गाः ।

य॒दा स॒त्यं कृ॑णु॒ते म॒न्युमिंद्रो॒ विश्वं॑ दृ॒ळ्हं भं॑यत॒ एजं॑दस्मात्
॥१०

अ॒यम् । शृ॒ण्वे॒ । अध॑ । जय॑न् । उ॒त । घ्नन् । अ॒यम् । उ॒त । प्र । कृ॒णु॒ते॒ । यु॒धा । गाः ।

य॒दा । स॒त्यम् । कृ॒णु॒ते । म॒न्युम् । इन्द्रः॑ । विश्वं॑म् । दृ॒ळ्हम् । भ॒य॒ते॒ । एजं॑त् । अ॒स्मा॒त् ॥१०

अयम् । शृण्वे । अध । जयन् । उत । घ्नन् । अयम् । उत । प्र । कृणुते । युधा । गाः ।

यदा । सत्यम् । कृणुते । मन्युम् । इन्द्रः । विश्वम् । दृळ्हम् । भयते । एजत् । अस्मात् ॥१०

"अध अपि च "अयम् इन्द्रः “जयन् शत्रून् विजयन् “शृण्वे श्रूयते । सर्वत्र प्रख्यातो भवति । “उत अपि च “घ्नन् शत्रून् हिंसन् सर्वत्र श्रूयते । "उत अपि च "अयम्' इन्द्रः "युधा युद्धेन “गाः पशून् “प्र “कृणुते शत्रुसकाशात् आहरति । किंच “इन्द्रः "यदा “मन्युं कोपं "सत्यम् एव

“कृणुते द्विषदर्थं करोति तदानीं "दृळ्हं दृढं स्थिर स्थावररूपम् “एजत् कम्पमानं जङ्गमरूपं च “विश्वं समस्तं जगत् "अस्मात् इन्द्रात् "भयते बिभेति ॥ ॥ २२ ॥

समिंद्रो॒ गा अंजय॒त्सं हिरं॑ण्या॒ सम॑श्वि॒या म॒घवा॒ यो ह॑ पू॒र्वीः ।

ए॒भिर्नृभि॒र्नृतं॑मो अस्य शा॒कै रा॒यो विं॑भ॒क्ता सं॑भ॒रश्च॒ वस्वः॑ ॥११

सम् । इन्द्रः॑ । गाः । अ॒ज॒य॒त् । सम् । हिरं॑ण्या । सम् । अ॒श्वि॒या । म॒घऽवां । यः । ह॒ । पू॒र्वीः ।

ए॒भिः । नृऽभिः॑ । नृऽतं॑मः । अ॒स्य॒ । शा॒कैः । रा॒यः । वि॒ऽभ॒क्ता । स॒म्ऽभ॒रः । च॒ । वस्वः॑ ॥११

सम् । इन्द्रः । गाः । अजयत् । सम् । हिरण्या । सम् । अश्विया । मघऽवा । यः । ह । पूर्वीः ।

एभिः । नृऽभिः । नृऽतमः । अस्य । शाकैः । रायः । विऽभक्ता । सम्ऽभरः । च । वस्वः ॥११

“यो "ह यः खलु “मघवा धनवान् “इन्द्रः “गाः असुराणां “सम् "अजयत् सम्यक् जितवान् भवति । किंच “हिरण्या हिरण्यानि हितरमणीयानि शत्रुसंबन्धीनि धनानि “सम् अजयत् । तथा “अश्विया अश्वियानि शत्रुसंबन्धिनोऽश्वसमूहान् सम्यक् जयति स्म । तथा “पूर्वीः बह्वीः शत्रुसेनाः समजयत् । इन्द्रः सर्वान् शत्रून् जित्वा सकलमपि पश्वादिधनमपहृतवानित्यर्थः। “शाकैः सामर्थ्यैः "नृतमः नेतृतमः पश्वादीनामतिशयेन निर्वाहकः स इन्द्रः “एभिर्नृभिः नेतृभिः स्तोतृभिः स्तुतः सन् “अस्य “रायः पश्वादिरूपस्य धनस्य “विभक्ता स्तोतृभ्यो

विभागस्य कर्ता । दाता भवतीत्यर्थः । किंच “वस्वः वसुनो धनस्य “संभरश्च संभर्ता धारकश्च भवति ॥

कियं॑त्स्वि॒दिंद्रो॒ अध्यें॑ति मा॒तुः कियं॑त्पि॒तुर्ज॑नि॒तुर्यो ज॒जानं॑ ।

यो अ॑स्य॒ शुष्मं॑ मुहु॒कैरियं॑र्ति॒ वातो॒ न जू॒तः स्त॒नयं॑द्भिर॒भ्रैः ॥१२

कियं॑त् । स्वि॒त् । इन्द्रः॑ । अधिं॑ । ए॒ति॒ । मा॒तुः । कियं॑त् । पि॒तुः । ज॒नि॒तुः । यः । ज॒जानं॑ ।

यः । अ॒स्य॒ । शुष्मं॑म् । मु॒हु॒कैः । इयं॑र्ति । वातः॑ । न । जू॒तः । स्त॒नयं॑त्ऽभिः । अ॒भ्रैः ॥१२

कियत् । स्वित् । इन्द्रः । अधि । एति । मातुः । कियत् । पितुः । जनितुः । यः । जजान ।

यः । अस्य । शुष्मम् । मुहुकैः । इयर्ति । वातः । न । जूतः । स्तनयत्ऽभिः । अभ्रैः ॥१२

यः “इन्द्रः “मातुः जनन्याः सकाशात् “कियत्स्वित् यावद्बलम् “अध्येति अधिगच्छति । “पितुः सकाशात् “कियत् यावद्बलमधिगच्छति । “यः इन्द्रः “जनितुः जनयितुर्यस्मात् प्रजापतेः सकाशादिदं दृश्यमानं जगत् “जजान अजनयत् । “यः इन्द्रः तस्मात् प्रजापतेः सकाशात् “अस्य जगतः “शुष्मं यावद्बलं “मुहुकैः मुहुर्मुहुः “इयर्ति प्रेरयति । “स्तनयद्भिः गर्जद्भिः अभ्रैः मेघेः “जूतः प्रेरितः “वातो “न वायुरिव तथा स इन्द्रः स्तोतृभिर्जूतः प्रेरितः हविष्यदानार्थमाहूतो भवति ॥॥१०॥

क्षियंतं त्वमक्षियंतं कृणोतीयर्ति रेणुं मघवां समोहं ।

वि॒भ॒ंज॒नुर॒शनि॑माँ इव॒ द्यौरु॒त स्तो॒तार॑ं म॒घवा॒ वसौ॑ धात् ॥ १३

क्षि॒यन्त॑म् । त्व॒म् । अक्षि॑यन्तम् । कृ॒णो॒ति॒ । इय॑र्ति । रे॒णुम् । म॒घऽवा॑ । स॒म्ऽओह॑म् ।

वि॒ऽभ॒ञ्ज॒नुः । अ॒शनि॑मान्ऽइव । द्यौः । उ॒त । स्तो॒तार॑म् । म॒घऽवा॑ । वसौ॑ । धा॒त् ॥१३

क्षियन्तम् । त्वम् । अक्षियन्तम् । कृणोति । इयर्ति । रेणुम् । मघऽवा । सम्ऽओहम् ।

विऽभञ्जनुः । अशनिमान्ऽइव । द्यौः । उत । स्तोतारम् । मघऽवा । वसौ । धात् ॥१३

“मघवा धनवानिन्द्रः “क्षियन्तं धनराहित्येन क्षीयमाणं “त्वम् एकं जनम् “अक्षियन्तं धनेन अक्षीयमाणं “कृणोति करोति । अकिंचनः कश्चित्पुरुषः इन्द्रं स्तुत्वा

धनसमृद्धोऽभवदित्यर्थः । “अशनिमान् अशनिना युक्तः द्यौः “इव अन्तरिक्षमिव “विभञ्जनुः शत्रूणां विशेषेण भञ्जकः "मघवा इन्द्रः “समोहं समूढं “रेणुं पापम् “इयर्ति स्तोतुः सकाशात् प्रेरयति । "उत अपि च “मघवा धनवानिन्द्रः “स्तोतारं “वसौ धने “धात् अधात् निदधाति ।। । पूर्वीः । : ॥११॥

अ॒यं च॒क्रमि॑षण॒त्सूर्य॑स्य॒ न्येत॑शं रीरमत्ससृमा॒णं ।

आ कृ॒ष्ण ईं॑ जुहुरा॒णो जि॑घर्ति त्व॒चो बु॒ध्ने रज॑सो अ॒स्य योनौ॑ ॥१४

अ॒यम् । च॒क्रम् । इ॒ष॒ण॒त् । सूर्य॑स्य । नि । एत॑शम् । री॒र॒म॒त् । स॒सृ॒मा॒णम् ।

आ । कृ॒ष्णः । ई॒म् । जु॒हु॒रा॒णः । जि॒घ॒र्ति॒ । त्व॒चः । बु॒ध्ने । रजं॑सः । अ॒स्य । योनौं ॥१४

अयम् । चक्रम् । इषणत् । सूर्यस्य । नि । एतशम् । रीरमत् । ससृमाणम् ।

आ । कृष्णः । ईम् । जुहुराणः । जिघर्ति । त्वचः । बुध्ने । रजसः । अस्य । योनौ ॥१४

प्रैतशं सूर्ये पस्पृधानम्' (ऋ. सं. १. ६१.१५ ) इत्यर्धर्चे पूर्वं काचिदाख्यायिका सूचिता । अत्रापि • अयं चक्रम्' इति पूर्वार्धे सा सूच्यते । स्वश्वनामा कश्चिद्राजा । स च पुत्रार्थं सूर्यमुपास्ते । स च सूर्यः पुत्ररूपेण स्वयमेव तत्रोत्पन्नः सन् एतशाख्येन महर्षिणा सार्धं युद्धं चकार । तदानीं स ऋषिः युद्धे जयार्थमिन्द्रं तुष्टाव। स इन्द्रः तेन स्तूयमानः सन् स्वश्वपुत्रस्य सूर्यस्य संबन्धिनः संग्रामात् एनमपालयदिति । “अयम् इन्द्रः “सूर्यस्य “चक्रम् आयुधम्

“इषणत् प्रैरयत्। “ससृमाणं युद्धार्थं सरन्तं गच्छन्तम् “एतशम् एतशनामानमृषिं “नि “रीरमत् न्यरीमत् निवारितवान्। “जुहुराणः कुटिलं यथा भवति तथा संचरन् “कृष्णः कृष्णवर्णो मेघः “त्वचः तेजसः “बुध्ने मूलभूते “रजसो “अस्य उदकस्य “योनौ स्थानेऽन्तरिक्षे स्थितम् “ईम् एनमिन्द्रम् “आ “जिघर्ति आसिञ्चति । शत्रूणां प्रेरिताञ्चक्रादेस्त्रस्तं ररक्षेत्यर्थः ॥

असिंक्न्या॒ं यजंमानो॒ न होतां ॥१५

असिंक्न्याम् । यजंमानः । न । होतां ॥१५

असिक्न्याम् । यजमानः । न । होता ॥१५

एकपदेयमृक् पूर्वर्चा सह दृष्टान्तत्वेन संबध्यते । “असिक्न्यां रात्रौ “यजमानो “न यजमान इव “होता

होतारमाह्वातारमग्निम् । द्वितीयार्थे प्रथमा ।
सोमेनासिञ्चति तद्वन्मेघ इन्द्रम् आसिञ्चतीत्यर्थः ॥ ॥
२३ ॥

ग॒व्यंत॒ इंद्रं॑ स॒ख्याय॒ विप्रा॑ अश्वा॒यंतो॒ वृषं॑णं वा॒जयं॑तः ।

ज॒नी॒यंतो॑ ज॒नि॒दामक्षि॑तोति॒मा च्या॑वयामोऽव॒ते न कोशं॑ ॥
१६

ग॒व्यन्तः॑ । इन्द्र॑म् । स॒ख्याय॑ । विप्राः॑ । अ॒श्व॒ऽयन्तः॑ ।
वृष॑णम् । वा॒जय॑न्तः ।

ज॒नि॒ऽयन्तः॑ । ज॒नि॒ऽदाम् । अक्षि॑तऽऊतिम् । आ ।
च्य॒व॒या॒मः॒ । अ॒व॒ते । न । कोश॑म् ॥१६

गव्यन्तः । इन्द्रम् । सख्याय । विप्राः । अश्वऽयन्तः ।
वृषणम् । वाजयन्तः ।

जनिऽयन्तः । जनिऽदाम् । अक्षितऽऊतिम् । आ ।
च्यवयामः । अवते । न । कोशम् ॥१६

“गव्यन्तः गा इच्छन्तः “अश्वायन्तः अश्वानिच्छन्तः “वाजयन्तः वाजमन्नमिच्छन्तः “जनीयन्तः जायाश्च इच्छन्तः “विप्राः मेधाविनः स्तोतारो वयं “सख्याय इन्द्रसंबन्धिने सखित्वाय “वृषणं कामानां वर्षितारं "जनिदां जयाप्रदम् “अक्षितोतिम् अक्षीणरक्षम् । सर्वदा रक्षाकरमित्यर्थः। एवंभूतम् “इन्द्रम् “आ “च्यावयामः आगमयामः । तत्र दृष्टान्तः । “अवते कूपे । अवत इति कूपनाम ' अवतः अवटः क्रिविः ' (नि. ३. २३. ७ ) इति कूपनामसु पाठात् । “कोशं “न जलोद्धरणपात्रमिव । पुरुषा जलोद्धरणपात्रं जलेन पूरयितुं कूपे यथा आच्यावयन्ति तथा वयमाच्यावयाम इत्यर्थः ।।

त्रा॒ता नो॑ बोधि॒ ददृ॑शान आ॒पिर॑भिख्या॒ता म॑र्डि॒ता सो॒म्याना॑ं
।

सखा॑ पि॒ता पि॒तृत॑मः पितॄ॒णां कर्ते॑मु लो॒कमु॑श॒ते व॑यो॒धाः ॥
१७

त्रा॒ता । न॒ः । बो॒धि॒ । ददृ॑शानः । आ॒पिः । अ॒भि॒ऽख्या॒ता ।
म॒र्डि॒ता । सो॒म्याना॑म् ।

सखा॑ । पि॒ता । पि॒तृऽत॑मः । पि॒तॄ॒णाम् । कर्ता॑ । ई॒म् । ऊ॒ँ
इति॑ । लो॒कम् । उ॒श॒ते । व॒य॒ःऽधाः ॥१७

त्राता । नः । बोधि । ददृशानः । आपिः । अभिऽख्याता ।
मर्डिता । सोम्यानाम् ।

सखा । पिता । पितृऽतमः । पितॄणाम् । कर्ता । ईम् । ऊँ
इति । लोकम् । उशते । वयःऽधाः ॥१७

हे इन्द्र “आपिः आप्तः “ददृशानः सर्वं पालकत्वेन पश्यंस्त्वं “नः अस्माकं “त्राता रक्षकः “बोधि भव । किंच । “अभिख्याता अभिद्रष्टा “मर्डिता सुखयिता "सोम्यानां सोमार्हाणां यजमानादीनां “सखा प्रजापतिना समानख्यातिः “पिता पालकः। केवलं पालको न किंतु “पितॄणां पालकानां मध्ये "पितृतमः अतिशयेन पालकः "कर्तेमु पितॄणां स्रष्टा च त्वं "लोकं स्वर्गादिलोकम्' “उशते कामयमानाय स्तोत्रे "वयोधाः । वय इत्यन्ननामैतत् । अन्नप्रदो भव ॥

स॒खी॒य॒ताम॑वि॒ता बो॑धि॒ सखा॑ गृणा॒न इं॑द्र स्तु॒व॒ते वयो॑ धाः ।

व॒यं ह्या ते॑ चकृ॒मा स॒बाधं॑ आ॒भिः शमी॑भिर्म॒हयं॑त इंद्र ॥१८

स॒खि॒ऽय॒ताम् । अ॒वि॒ता । बो॒धि॒ । सखा॑ । गृ॒णा॒नः । इ॒न्द्र॒ । स्तु॒व॒ते । वयः॑ । धाः॒ ।

व॒यम् । हि । आ । ते॒ । च॒कृ॒म । स॒ऽबाधः॑ । आ॒भिः ।
शमी॑भिः । म॒हय॑न्तः । इ॒न्द्र॒ ॥१८

सखिऽयताम् । अविता । बोधि । सखा । गृणानः । इन्द्र ।
स्तुवते । वयः । धाः ।

वयम् । हि । आ । ते । चकृम । सऽबाधः । आभिः ।
शमीभिः । महयन्तः । इन्द्र ॥१८

हे इन्द्र त्वं “सखीयतां सखित्वमिच्छतामस्माकम् “अविता रक्षिता "बोधि भव। तथा “गृणानः स्तूयमानस्त्वं “सखा भव । हे “इन्द्र “स्तुवते स्तुतिं कुर्वते मह्यं “वयः अन्नं “धाः अधाः धेहि। हे “इन्द्र “सबाधः बाधासहिताः “वयं “हि वयं खलु “ते त्वाम् “आ “चकृम आह्वयामः । किं कुर्वन्तः । “आभिः प्रत्यक्षेणोपलभ्यमानैः “शमीभिः स्तुतिरूपैः कर्मभिः "महयन्तः त्वां पूजयन्तः ॥ ६॥

इन्द्रस्य वृत्रघ्नः पुरोडाशस्य 'स्तुत इन्द्रः' इति याज्या ।
सूत्रितं च -' स्तुत इन्द्रो मघवा यद्ध वृत्रैवा वस्य इन्द्रः सत्यः सम्राट्' (आश्व. श्रौ. ३.८) इति ॥

स्तु॒त इंद्रों म॒घवा॒ यद्धं वृ॒त्रा भूरी॒ण्येकों अप्र॒तीनिं हंति ।

अ॒स्य प्रि॒यो जंरि॒ता यस्य॒ शर्म॒न्नकिंर्दे॒वा वा॒रयंते॒ न मर्ताः ॥
१९

स्तु॒तः । इन्द्रः । म॒घऽवां । यत् । ह॒ । वृ॒त्रा । भूरींणि । एकः । अ॒प्र॒तीनिं । ह॒न्ति॒ ।

अ॒स्य । प्रि॒यः । ज॒रि॒ता । यस्यं । शर्मंन् । नकिः । दे॒वाः । वा॒रयंन्ते । न । मर्ताः ॥१९

स्तुतः । इन्द्रः । मघऽवा । यत् । ह । वृत्रा । भूरीणि । एकः । अप्रतीनि । हन्ति ।

अस्य । प्रियः । जरिता । यस्य । शर्मन् । नकिः । देवाः । वारयन्ते । न । मर्ताः ॥१९

"यद्ध यदा खलु “मघवा धनवान् “इन्द्रः "स्तुतः अस्माभिः स्तुतो भवति तदेन्द्रः “एकः असहाय एव “भूरीणि बहूनि "अप्रतीनि अप्रतिगमनानि । अभिगमनयुक्तानीत्यर्थः । "वृत्रा वृत्राणि शत्रून् “हन्ति हिनस्ति । "यस्य इन्द्रस्य “शर्मन् शर्मणि आश्रये वर्तमानं स्तोतारं "देवाः “नकि “वारयन्ते निवारणं न कुर्वन्ति । “मर्ताः च “न निवारयन्ते"। "अस्य इन्द्रस्य “जरिता स्तोता “प्रियः भवति ॥

आग्निमारुतशस्त्रे 'एवा न इन्द्रः' इति परिधानीया। सूत्रितं च-' एवा न इन्द्रो मघवा विरप्शीति परिदध्यात्' ( आश्व. श्रौ. ५. २०) इति ।।

ए॒वा न॒ इंद्रों म॒घवां विर॒प्शी करंत्स॒त्या चंर्षणी॒धृदंन॒र्वा ।

त्वं राजा॑ ज॒नुषां॑ धेह्य॒स्मे अधि॒ श्रवो॒ माहि॑नं॒ यज्ज॑रि॒त्रे ॥ २०

ए॒व । न॒ः । इन्द्र॑ः । म॒घऽवा॑ । वि॒ऽर॒प्शी । कर॑त् । स॒त्या । च॒र्ष॒णि॒ऽधृत् । अ॒न॒र्वा ।

त्वम् । राजा॑ । ज॒नुषा॑म् । धे॒हि॒ । अ॒स्मे इति॑ । अधि॑ । श्रव॑ः । माहि॑नम् । यत् । ज॒रि॒त्रे ॥२०

एव । नः । इन्द्रः । मघऽवा । विऽरप्शी । करत् । सत्या । चर्षणिऽधृत् । अनर्वा ।

त्वम् । राजा । जनुषाम् । धेहि । अस्मे इति । अधि । श्रवः । माहिनम् । यत् । जरित्रे ॥२०

“विरप्शी बहुविधशब्दवान् “चर्षणीधृत् सर्वासां प्रजानां धारयिता "अनर्वा अप्रत्यृतः । केनापि प्रतिकूलेन न प्राप्त इत्यर्थः । “मघवा धनवान् “इन्द्रः “एवा एवमस्माभिः स्तुतः

सन् "नः अस्माकं “सत्या सत्यरूपाण्यभिमतानि फलानि “करत् करोतु । हे इन्द्र “जनुषां जन्मवतां सर्वेषां “राजा प्रभुः “त्वं “माहिनं महिम्नोपेतं “यत् “श्रवः यद्यशः "जरित्रे स्तोत्रे देयं तद्यशः “अस्मे अस्मासु “अधि अधिकत्वेन “धेहि । “एवा न इन्द्रो मघवा विरप्शीत्युत्तमया परिदधातीयं वा इन्द्रो मघवा विरप्शी' (ऐ. ब्रा. ३. ३८) इत्यादि ब्राह्मणम् ॥

नू ष्टु॒त इं॑द्र॒ नू गृं॑णा॒न इषं॑ जरि॒त्रे न॒द्यो॒३॒ न पीं॑पेः ।

अकां॑रि ते हरिवो॒ ब्रह्म॒ नव्यं॑ धि॒या स्यां॑म र॒थ्यः॑ सदा॒साः ॥ २१

नु । स्तु॒तः । इ॒न्द्र॒ । नु । गृ॒णा॒नः । इषं॑म् । ज॒रि॒त्रे । न॒द्यः॑ । न । पी॒पे॒रिति॑ पीपेः ।

अका॑रि । ते॒ । ह॒रि॒ऽव॒ः । ब्रह्म॑ । नव्य॑म् । धि॒या । स्या॒म॒ । र॒थ्य॑ः । स॒दा॒ऽसाः ॥२१

नु । स्तुतः । इन्द्र । नु । गृणानः । इषम् । जरित्रे । नद्यः । न । पीपेरिति पीपेः ।

अकारि । ते । हरिऽवः । ब्रह्म । नव्यम् । धिया । स्याम । रथ्यः । सदाऽसाः ॥२१

नू ष्टुत इन्द्रेति व्याख्याता ॥ ॥ २४ ॥

# ऋग्वेदः सूक्तं ४.१८



दे. १ वामदेवः, २-४(पूर्वार्धर्चस्य), ८-१३ इन्द्रः, ४(उत्तरार्धर्चस्य), ७ वामदेवः।। त्रिष्टुप्

---

अयं पन्था अनुवित्तः पुराणो यतो देवा उदजायन्त विश्वे ।

अतश्चिदा जनिषीष्ट प्रवृद्धो मा मातरममुया पत्तवे कः ॥१॥

नाहमतो निरया दुर्गहैतत्तिरश्चता पार्श्वान्निर्गमाणि ।

बहूनि मे अकृता कर्त्वानि युध्यै त्वेन सं त्वेन पृच्छै ॥२॥

परायतीं मातरमन्वचष्ट न नानु गान्यनु नू गमानि ।

त्वष्टुर्गृहे अपिबत्सोममिन्द्रः शतधन्यं चम्वोः सुतस्य ॥३॥

किं स ऋधक्कृणवद्यं सहस्रं मासो जभार शरदश्च पूर्वीः ।

नही न्वस्य प्रतिमानमस्त्यन्तर्जातेषूत ये जनित्वाः ॥४॥

अवद्यमिव मन्यमाना गुहाकरिन्द्रं माता वीर्येणा न्यृष्टम् ।

अथोदस्थात्स्वयमत्कं वसान आ रोदसी अपृणाज्जायमानः ॥५॥

एता अर्षन्त्यललाभवन्तीरृतावरीरिव संक्रोशमानाः ।

एता वि पृच्छ किमिदं भनन्ति कमापो अद्रिं परिधिं रुजन्ति ॥६॥

किमु ष्विदस्मै निविदो भनन्तेन्द्रस्यावद्यं दिधिषन्त आपः ।

ममैतान्पुत्रो महता वधेन वृत्रं जघन्वाँ असृजद्वि सिन्धून् ॥७॥

ममच्चन त्वा युवतिः परास ममच्चन त्वा कुषवा जगार ।

ममच्चिदापः शिशवे ममृड्युर्ममच्चिदिन्द्रः सहसोदतिष्ठत् ॥८॥

ममच्चन ते मघवन्व्यंसो निविविध्वाँ अप हनू जघान ।

अधा निविद्ध उत्तरो बभूवाञ्छिरो दासस्य सं पिणग्वधेन ॥९॥

गृष्टिः ससूव स्थविरं तवागामनाधृष्यं वृषभं तुम्रमिन्द्रम् ।

अरीळ्हं वत्सं चरथाय माता स्वयं गातुं तन्व इच्छमानम् ॥१०॥

उत माता महिषमन्ववेनदमी त्वा जहति पुत्र देवाः ।

अथाब्रवीद्वृत्रमिन्द्रो हनिष्यन्सखे विष्णो वितरं वि क्रमस्व ॥११॥

कस्ते मातरं विधवामचक्रच्छयुं कस्त्वामजिघांसच्चरन्तम् ।

कस्ते देवो अधि मार्डीक आसीद्यत्प्राक्षिणाः पितरं पादगृह्य ॥१२॥

अवर्त्या शुन आन्त्राणि पेचे न देवेषु विविदे मर्डितारम् ।

अपश्यं जायाममहीयमानामधा मे श्येनो मध्वा जभार ॥१३॥

## सायणभाष्यम्

‘अयं पन्थाः' इति त्रयोदशर्चमष्टमं सूक्तं त्रैष्टुभम् । अत्रानुक्रमणिका- अयं पन्थाः सप्तोना संवाद इन्द्रादितिवामदेवानाम् ' इति । ' यस्य वाक्यं स ऋषिः या तेनोच्यते सा देवता ' इति परिभाषितत्वात् ऋषिदेवते तत्र

तत्र ज्ञातव्ये । अस्मिन् सूक्ते इन्द्रादितिवामदेवसंवादरूपिणी काचित् आख्यायिका श्लोकरूपेण सूच्यते--’ गर्भस्थो ज्ञानसंपन्नो वामदेवो महामुनिः । मतिं चक्रे न जायेय योनिदेशात्तु मातृतः ॥ १ ॥ किंतु पार्श्वादितश्चेति ज्ञात्वा नु जननी त्विदम् । दध्यौ शान्त्यै शचीं देवीमदितिं त्विन्द्रमातरम् ॥ २ ॥ अदितिस्त्विन्द्रसहिता गर्भिणीमभ्यगाद्वने । अदितीन्द्रवामदेवाः संवादमथ चक्रिरे ॥३॥संवाद इति सूत्रेण कथा सैषात्र सूच्यते। नोक्तो वक्तृविशेषोऽत्र ह्युपदेशेष्वनुक्तितः ॥ ४ ॥ अर्थतस्त्ववगन्तव्यो वक्तृभेद इति स्थितिः । इन्द्रोऽदितिर्ऋषिश्चास्मिन्मिथः सूक्ते समूचिरे ॥५॥ गर्भे शयानं सुचिरं मातुर्गर्भादनिर्गतम् । वामदेवं प्रतिब्रूत आद्ययर्चा शतक्रतुः ॥ ६ ॥ द्वितीयादिभिःरर्धर्चैर्ऋषिरत्राह पञ्चभिः । न ही न्वस्येति सप्त स्युरर्धर्चा अदितेर्वचः ॥ ७॥ ममच्चन त्वा युवतिरित्यृचः पञ्च वै मुनेः । दौर्गत्यशान्तिमत्राह

वामदेवस्तथान्त्यया ॥ ८ ॥ एवमर्थाद्वक्तृभेद इति बह्वृचशासनम् । अर्थो विवेकस्पष्टत्वादुपदेशेषु नेरितः ॥ ९॥ ऋषिदेवतसिद्ध्यर्थं विवेकादर्थ ईरितः' (अनु. भा. ४. १८) इति ॥

अ॒यं पंथा॒ अनुं॑वित्तः पुरा॒णो यतो॑ दे॒वा उ॒दजां॑यंत॒ विश्वे॑ ।

अतं॑श्चि॒दा जंनिषीष्ट॒ प्रवृं॑द्धो॒ मा मा॒तरं॑ममु॒या पत्तं॑वे कः ॥१

अ॒यम् । पन्थाः॑ । अनुं॑ऽवित्तः । पु॒रा॒णः । यतः॑ । दे॒वाः । उ॒त्ऽअजां॑यन्त । विश्वे॑ ।

अतः॑ । चि॒त् । आ । ज॒नि॒षी॒ष्ट॒ । प्रऽवृं॑द्धः । मा । मा॒तरं॑म् । अ॒मु॒या । पत्तं॑वे । कु॒रि॒तिं॑ कः ॥१

अयम् । पन्थाः । अनुऽवित्तः । पुराणः । यतः । देवाः । उत्ऽअजायन्त । विश्वे ।

अतः । चित् । आ । जनिषीष्ट । प्रऽवृद्धः । मा । मातरम् । अमुया । पत्तवे । करिति कः ॥१

इन्द्रवाक्यम्। “पुराणः अनादिः “अयं प्रत्यक्षेणोपलभ्यमानः “पन्थाः योनिनिर्गमनरूपो मार्गः “अनु अनुपूर्व्येण “वित्तः सर्वैर्जायमानैर्लब्धः । “यतः यस्माद्योनिमार्गात् “विश्वे सर्वे “देवाः "उदजायन्त उत्कर्षेणोत्पन्ना भवन्ति । तस्माद्योनिमार्गान्मनुष्या उत्पन्ना भवन्तीति किमु वक्तव्यम् । “अतश्चित् अस्माद्योनिमार्गादेव “प्रवृद्धः गर्भे प्रकर्षेण वृद्धिं गतो वामदेवः “आ “जनिषीष्ट अ समन्तात् जायताम् । “अमुया अमूं “मातरं "पत्तवे पतनाय । मरणायेत्यर्थः। “मा “कः मा करोतु ॥

नाहमतो निरंया दुर्गहैतत्तिरश्चता पार्श्वान्निर्गमाणि ।

ब॒हूनिं मे॒ अकृं॑ता॒ कर्त्वा॑नि॒ युध्यैं त्वेन॒ सं त्वेंन पृच्छै ॥२

न । अ॒हम् । अतः॑ । निः । अ॒य॒ । दु॒ःऽगहा॑ । ए॒तत् ।
ति॒र॒श्चता॑ । पा॒र्श्वात् । निः । ग॒मा॒नि॒ ।

ब॒हूनिं । मे॒ । अकृं॑ता । कर्त्वा॑नि । युध्यैं । त्वे॒न॒ । सम् ।
त्वे॒न॒ । पृ॒च्छै॒ ॥२

न । अहम् । अतः । निः । अय । दुःऽगहा । एतत् ।
तिरश्चता । पार्श्वात् । निः । गमानि ।

बहूनि । मे । अकृता । कर्त्वानि । युध्यै । त्वेन । सम् ।
त्वेन । पृच्छै ॥२

वामदेव एवमुक्तवन्तमिन्द्रं प्रत्याह । “अहम् “अतः
योनिमार्गात् "न “निरया न निरयाणि । न निर्गच्छानि।
“एतत् योनिनिर्गमरूपं वर्त्म "दुर्गहा दुर्ग्रहम् । दुःखेन
ग्राह्यम्। न प्राप्यं भवतीत्यर्थः। किंतु “तिरश्चता तिरश्चीनात्

"पार्श्वात् “निर्गमानि निर्गच्छानि । योनिदेशादनिर्गतोऽहं पार्श्वं भित्त्वा निर्गच्छानीत्यर्थः । अन्यैरकृतमिदमेव न केवलं मया क्रियते किंत्वन्यैः अकृतानि “बहूनि कर्माणि “मे “कर्त्वानि कर्तव्यानि सन्ति। “त्वेन एकेन सपत्नेन विवदमानेन सह “युध्यै युद्धं करवाणि । “त्वेन एकेन बुभुत्सुना “सं पृच्छै सम्यक् पृच्छानि ।।

परा॒य॒तीं मा॒तर॒मन्वं॑चष्ट॒ न नानुं गा॒न्यनु॒ नू गंमानि ।

त्वष्टुं॑र्गृ॒हे अं॑पिब॒त्सोम॒मिंद्रः॑ शतध॒न्यं॑ च॒म्वोः॑ सु॒तस्यं ॥३

प॒रा॒ऽय॒तीम् । मा॒तरं॑म् । अनुं । अ॒च॒ष्ट॒ । न । न । अनुं । गा॒नि॒ । अनुं । नु । ग॒मा॒नि॒ ।

त्वष्टुः॑ । गृ॒हे । अ॒पि॒ब॒त् । सोमं॑म् । इन्द्रः॑ । श॒त॒ऽध॒न्यं॑म् । च॒म्वोः॑ । सु॒तस्यं ॥३

पराऽयतीम् । मातरम् । अनु । अचष्ट । न । न । अनु । गानि । अनु । नु । गमानि ।

त्वष्टुः । गृहे । अपिबत् । सोमम् । इन्द्रः । शतऽधन्यम् । चम्वोः । सुतस्य ॥३

मयि गर्भस्थिते सतीन्द्रो मदीयां “मातरं “परायतीं परेतां म्रियमाणाम् “अन्वचष्ट अन्वब्रवीत् । एवमपि इदानीं गर्भे स्थितोऽहं पुराणं पन्थानं “न “नानु “गानि नानुगच्छानीति न । किंतु “नु क्षिप्रम् “अनु “गमानि अनुगच्छान्येव । वामदेवः स्वकीयमकृत्यकारित्वं परिहृत्येन्द्रस्याकृत्यकारित्वम् उत्तरार्धर्चेन प्रतिपादयति । “इन्द्रः "चम्वोः सोमाभिषवफलकयोः “सुतस्य सोमं सुतवतोऽभिषुतवतः “त्वष्टुः संबंधिनि "गृहे अनुपहूतः सन् "शतधन्यं बहुधनेन क्रीतं "सोमम् “अपिबत् बलात्कारेण सोमस्य पानं कृतवान् । अयमर्थस्तैत्तिरीयैः ‘त्वष्टा हतपुत्रो

वीन्द्रं सोममाहरत्' (तै. सं. २, ४. १२. १) इत्यनुवाके महता प्रबन्धेन प्रपञ्चितः ॥

किं स ऋधंक्कृणव॒द्यं स॒हस्रं मा॒सो ज॒भारं श॒रदंश्च पू॒र्वीः ।

न॒ही न्वंस्य प्रति॒मान॒मस्त्य॒ंतर्जा॒तेषू॒त ये जनिंत्वाः ॥४

किम् । सः । ऋधंक् । कृ॒ण॒व॒त् । यम् । स॒हस्रंम् । मा॒सः । ज॒भारं । श॒रदः । च॒ । पू॒र्वीः ।

न॒हि । नु । अ॒स्य॒ । प्र॒ति॒ऽमानंम् । अस्तिं । अ॒न्तः । जा॒तेषुं । उ॒त । ये । जनिंऽत्वाः ॥४

किम् । सः । ऋधक् । कृणवत् । यम् । सहस्रम् । मासः । जभार । शरदः । च । पूर्वीः ।

नहि । नु । अस्य । प्रतिऽमानम् । अस्ति । अन्तः । जातेषु । उत । ये । जनिऽत्वाः ॥४

अदितिः “यम् इन्द्रं “सहस्रं बहून् 'मासः मासान् “पूर्वीः बह्वीः "शरदश्च संवत्सरांश्च "जभार बभार ॥ बिभर्तेरिदं रूपम् ॥ गर्भे स्थित इन्द्रो बहुषु संवत्सरेष्वदितिं क्लेशितवानित्यर्थः । एवंभूतः “सः इन्द्रः “किं यत् किमपि । सर्वमपीत्यर्थः। “ऋधक् विरुद्धं कर्म "कृणवत् अकरोत् । इन्द्रस्य आक्षेपम् असहमानादितिरिन्द्रमातापि एनं प्रति ब्रूते। हे वामदेव "जातेषु उत्पन्नेषु देवादिषु “अन्तः मध्ये "अस्य इन्द्रस्य प्रतिमानम् उपमानं “नहि “अस्ति न विद्यते खलु। “नु इति पादपूरणार्थः। “उत अपि च "ये देवादयः "जनित्वाः जनयितव्या जनयिष्यमाणास्तेषु मध्येऽस्येन्द्रस्य प्रतिमानं नास्ति ।

अ॒व॒द्यमि॑व॒ मन्य॑माना॒ गुहा॑क॒रिन्द्रं॑ मा॒ता वी॒र्ये॑णा॒ न्यृ॑ष्टं ।

अथोद॑स्थात्स्व॒यमत्कं॒ वसा॑न॒ आ रोद॑सी
अपृणा॒ज्जाय॑मानः ॥५

अ॒व॒द्यम्ऽइ॑व । मन्य॑माना । गुहा॑ । अ॒क॒ः । इन्द्र॑म् । मा॒ता ।
वी॒र्ये॑ण । निऽऋ॑ष्टम् ।

अथ॑ । उत् । अ॒स्था॒त् । स्व॒यम् । अत्क॑म् । वसा॑नः । आ ।
रोद॑सी॒ इति॑ । अ॒पृ॒णा॒त् । जाय॑मानः ॥५

अवद्यम्ऽइव । मन्यमाना । गुहा । अकः । इन्द्रम् । माता ।
वीर्येण । निऽऋष्टम् ।

अथ । उत् । अस्थात् । स्वयम् । अत्कम् । वसानः । आ ।
रोदसी इति । अपृणात् । जायमानः ॥५

“गुहा गुहायां गह्वररूपे सूतिकागृहे जातम् “इन्द्रम् “अवद्यमिव गर्हमिव “मन्यमाना जानती "माता इन्द्रजनन्यदितिः "वीर्येण सामर्थ्येन “न्यृष्टं नितरां प्राप्तम् "अकः अकरोत् । “अथ अनन्तरं “जायमानः उत्पद्यमान इन्द्रः “स्वयम् एव “अत्कं तेजः “वसानः आच्छादकः सन् । दधान इत्यर्थः । “उदस्थात् उत्कर्षेण अतिष्ठत् । किंच "रोदसी द्यावापृथिव्यौ “आ “अपृणात् समन्तात् पूरयामास ॥ ॥ २५ ॥

ए॒ता अं॑र्षंत्यलला॒भवंतीर्ऋ॒तावंरीरिव सं॒क्रोशं॑मानाः ।

ए॒ता वि पृं॑च्छ॒ किमि॒दं भंनंति॒ कमापो॒ अद्रिं॑ परि॒धिं रुं॑जंति ॥६

ए॒ताः । अ॒र्ष॒न्ति॒ । अ॒ल॒ला॒ऽभवं॑न्तीः । ऋ॒तवं॑रीःऽइव । स॒म्ऽक्रोशं॑मानाः ।

ए॒ताः । वि । पृ॒च्छ॒ । किम् । इ॒दम् । भ॒न॒न्ति॒ । कम् ।
आपः॑ । अद्रि॑म् । प॒रि॒ऽधिम् । रु॒ज॒न्ति॒ ॥६

एताः । अर्षन्ति । अललाऽभवन्तीः । ऋतवरीःऽइव ।
सम्ऽक्रोशमानाः ।

एताः । वि । पृच्छ । किम् । इदम् । भनन्ति । कम् ।
आपः । अद्रिम् । परिऽधिम् । रुजन्ति ॥६

“अललाभवन्तीः अललेत्येवंरूपं शब्दं कुर्वत्यः "ऋतावरीरिव उदकवत्य एव “एताः नद्यः “संक्रोशमानाः इन्द्रमहत्त्वप्रतिपादकोद्भूतेन हर्षेण बहुविधं शब्दायमानाः सत्यः “अर्षन्ति गच्छन्ति । एवंभूता नद्यः “इदं “किं “भनन्ति श्रोत्रग्राह्यं शब्दायमानं किं वदन्तीममर्थं हे ऋषे त्वम् “एताः नदीः “वि “पृच्छ विशेषेण पृष्टवान् भव । एवं संपृच्छ । विचारिते सति एतच्छब्दायमानमिन्द्रमाहात्म्यस्यैव वचनं भवतीत्यर्थः ।

किंच “आपः उदकानि “परिधिम् आवरकं "कम् “अद्रिं कं मेघं "रुजन्ति भञ्जन्ति । 'अपः कमपि मेघं न भञ्जन्ति किंतु इन्द्रो मम पुत्र एव उदकावरकं मेघं भङ्क्त्वा आपः प्रवर्तयतीत्यर्थः ।।

किमु॑ ष्विदस्मै नि॒विदो॑ भन॒ंतेंद्र॑स्याव॒द्यं दि॑धिषंत॒ आपः॑ ।

ममै॒तान्पु॒त्रो म॑ह॒ता व॒धेन॑ वृ॒त्रं ज॑घ॒न्वाँ अ॑सृज॒द्वि सिंधू॑न् ॥७

किम् । ऊ॒ इति॑ । स्वि॒त् । अ॒स्मै॒ । नि॒ऽविदः॑ । भ॒न॒न्त॒ । इन्द्र॑स्य । अ॒व॒द्यम् । दि॒धि॒ष॒न्ते॒ । आपः॑ ।

मम॑ । ए॒तान् । पु॒त्रः । म॒ह॒ता । व॒धेन॑ । वृ॒त्रम् । ज॒घ॒न्वान् । अ॒सृ॒ज॒त् । वि । सिन्धू॑न् ॥७

किम् । ऊं इति । स्वित् । अस्मै । निऽविदः । भनन्त । इन्द्रस्य । अवद्यम् । दिधिषन्ते । आपः ।

मम । एतान् । पुत्रः । महता । वधेन । वृत्रम् । जघन्वान् । असृजत् । वि । सिन्धून् ॥७

यदेन्द्रो वृत्रासुरं हतवान् तदा शाश्वतीं ब्रह्महत्यां प्राप्तवानिति वामदेवस्याभिप्रायमुन्नीय अदितिः आह । “निविदः । मरुत्वतीयशस्त्रे प्रयुज्यमानानि ‘ मरुत्स्तोत्रो मरुद्गणः' इत्यादीनीन्द्रस्तुतिप्रतिपादकानि कानिचित् पदानि निविच्छब्देनोच्यन्ते । ता निविदः “अस्मै इमं वृत्रवधनिमित्तं ब्रह्महत्यारूपं पापं प्राप्नुवन्तमिन्द्रं “किमु “ष्वित् "भनन्त भनन्ति । किं वदन्तीति चेत् । तर्हि इन्द्रं पापरहितं मत्वा निविदः स्तुवन्ति । कथमिन्द्रस्य पापरहितत्वम् । उच्यते । “आपः फेनरूपेणास्य “इन्द्रस्य “अवद्यं ब्रह्महत्यादिरूपं पापं “दिधिषन्ते धारयन्ति । "मम “पुत्रः मदीयः पुत्र इन्द्रः "महता प्रभूतेन “वधेन । वध इति वज्रनामैतत् । वज्रेण “वृत्रं जघन्वान् हतवान् । ततः “एतान् सिन्धून् उदकानि “वि “असृजत् विशेषेण स्वैरत्वेन

सर्तुं सृष्टवान्। इन्द्रेणोत्सृष्टा आपस्तस्य पापं जगृहुरित्यर्थः ॥

ममंच्च॒न त्वां युव॒तिः प॒रास॒ ममंच्च॒न त्वां कु॒षवां ज॒गारं ।

ममंच्चि॒दाप॒ः शिशंवे ममृड्यु॒र्ममंच्चि॒दिंद्र॒ः सह॒सोदंतिष्ठत् ॥ ८

ममंत् । च॒न । त्वा॒ । यु॒व॒तिः । प॒रा॒ऽआसं । ममंत् । च॒न । त्वा॒ । कु॒षवां । ज॒गारं ।

ममंत् । चि॒त् । आपः॑ । शिशंवे । म॒मृ॒ड्यु॒ः । ममंत् । चि॒त् । इन्द्रः॑ । सहंसा । उत् । अ॒ति॒ष्ठ॒त् ॥८

ममत् । चन । त्वा । युवतिः । पराऽआस । ममत् । चन । त्वा । कुषवा । जगार ।

ममत् । चित् । आपः । शिशवे । ममृड्युः । ममत् । चित् । इन्द्रः । सहसा । उत् । अतिष्ठत् ॥८

सूक्तशेषेण ऋषिरिन्द्रं स्तौति । हे इन्द्र “ममञ्चन माद्यन्त्येव । प्रमत्तैवेत्यर्थः । “युवतिः त्वदीया मातादितिः “त्वा त्वां “परास पराचिक्षेप । किंच कुषवानाम्नी काचित् राक्षसी सा “ममच्चन प्रमत्तैव “त्वा त्वां "जगार गिरति स्म । हे इन्द्र “ममच्चित् प्रमाद्यन्त्य एव “आपः “शिशवे जाताय तुभ्यं ममृड्युः सुखयांचक्रुः । भमञ्चित् माद्यन्नेव “इन्द्रः “सहसा स्वेन वीर्येण “उदतिष्ठत् सूतिकागृहात् राक्षसीं बाधमानः सन् उत्कर्षेण तस्थौ ।।

ममंच्च॒न तें मघव॒न्व्यंसो निविवि॒ध्वाँ अप॒ हनूं ज॒घानं ।

अधा॒ निविंद्ध॒ उत्तंरो बभू॒वाञ्छिरों दा॒सस्य॒ सं पिंणग्व॒धेनं ॥९

ममंत् । च॒न । ते॒ । म॒घ॒ऽव॒न् । विऽअंसः । नि॒ऽवि॒वि॒ध्वान् । अपं । हनू॒ इतिं । ज॒घानं ।

अधं । निऽविंद्धः । उत्ऽतंरः । ब॒भू॒वान् । शिरः॑ । दा॒सस्यं । सम् । पि॒ण॒क् । व॒धेनं ॥९

ममत् । चन । ते । मघऽवन् । विऽअंसः । निऽविविध्वान् । अप । हनू इति । जघान ।

अध । निऽविद्धः । उत्ऽतरः । बभूवान् । शिरः । दासस्य । सम् । पिणक् । वधेन ॥९

हे "मघवन् धनवन्निन्द्र "ममच्चन प्रमाद्यन्नेव व्यंसो नाम राक्षसः "निविविध्वान् प्रविध्यन् "ते "हनू त्वदीये हनू मुखपार्श्वे "अप "जघान अपहतवान् । "अध अथानन्तरं है इन्द्र निविद्धः राक्षसेन ताडितः त्वम् "उत्तरः

व्यंसाधिकबलः “बभूवान् भूतः सन् “दासस्य क्षीणस्य व्यंसस्य “शिरः “वधेन वज्रेण “सं “पिणक् पिष्टवानसि ।।

गृ॒ष्टिः सं॑सू॒व स्थवि॑रं तवा॒गाम॑नाधृ॒ष्यं वृ॑ष॒भं तु॒म्रमिंद्रं॑ ।

अरीं॑ळ्हं व॒त्सं च॒रथा॑य मा॒ता स्व॒यं गा॒तुं त॒न्वं॑ इ॒च्छमा॑नं ॥ १०

गृ॒ष्टिः । स॒सू॒व । स्थवि॑रम् । त॒वा॒गाम् । अ॒ना॒धृ॒ष्यम् । वृ॒ष॒भम् । तु॒म्रम् । इन्द्र॑म् ।

अरीं॑ळ्हम् । व॒त्सम् । च॒रथा॑य । मा॒ता । स्व॒यम् । गा॒तुम् । त॒न्वे॑ । इ॒च्छमा॑नम् ॥१०

गृष्टिः । ससूव । स्थविरम् । तवागाम् । अनाधृष्यम् । वृषभम् । तुम्रम् । इन्द्रम् ।

अरीळ्हम् । वत्सम् । चरथाय । माता । स्वयम् । गातुम् । तन्वे । इच्छमानम् ॥१०

“गृष्टिः काचित् गौः “वत्सं यथा “ससूव सुषुवे । तथा “माता इन्द्रजनन्यदितिः "चरथाय स्वेच्छया संचरणाय इन्द्रं ससूव सुषुवे । कीदृशमिन्द्रम् । “स्थविरं वयसा प्रवृद्धं “तवागां प्रवृद्धबलम् “अनाधृष्यं शत्रुभिरनभिभाव्यं “वृषभं सेचनसमर्थं तुम्रं प्रेरकम् "अरीळ्हं शत्रुभिरनभिभूतं “स्वयं “गातुम् अन्यनिरपेक्षगमनं “तन्वे स्वशरीराय “इच्छमानम् इच्छन्तम् ॥

उ॒त मा॒ता मं॑हि॒षमन्वं॑वेनद॒मी त्वां॑ जहति पुत्र दे॒वाः ।

अथां॑ब्रवीद्वृ॒त्रमिं॑द्रो॑ हनि॒ष्यन्त्सखें विष्णो वित॒रं वि क्रं॑मस्व ॥११

उ॒त । मा॒ता । म॒हि॒षम् । अनु॑ । अ॒वे॒न॒त् । अ॒मी इति॑ । त्वा॒ । ज॒ह॒ति॒ । पु॒त्र॒ । दे॒वाः ।

अथ॑ । अ॒ब्र॒वी॒त् । वृ॒त्रम् । इन्द्रः॑ । ह॒नि॒ष्यन् । सखे॑ । वि॒ष्णो॒ इति॑ । वि॒ऽत॒रम् । वि । क्र॒म॒स्व॒ ॥११

उत । माता । महिषम् । अनु । अवेनत् । अमी इति । त्वा । जहति । पुत्र । देवाः ।

अथ । अब्रवीत् । वृत्रम् । इन्द्रः । हनिष्यन् । सखे । विष्णो इति । विऽतरम् । वि । क्रमस्व ॥११

“उत अपि च हे मदीय “पुत्र इन्द्र "अमी वह्नयादयः "देवाः “त्वा त्वां “जहति त्यजन्ति । इत्युक्तवतीन्द्रस्य “माता अदितिः इन्द्रं "महिषं महान्तम् । महिष इति महन्नामैतत् । “अन्ववेनत् अयाचत । “अथ अनन्तरं हे “विष्णो व्यापनशील हे “सखे मित्रभूत हरे त्वं “वृत्रं “हनिष्यन्

हन्तुम् इच्छन् “वितरं “वि "क्रमस्व अतिपराक्रमी भव इति “इन्द्रः विष्णुम् 'अब्रवीत उवाच ॥

कस्तें मा॒तरं वि॒धवां॑मचक्रच्छ॒युं कस्त्वाम॑जिघांस॒च्चरं॑तं ।

कस्तें दे॒वो अधिं मार्डी॒क आं॑सी॒द्यत्प्राक्षिं॑णाः पि॒तरं पाद॒गृह्यं ॥१२

कः । ते॒ । मा॒तरं॑म् । वि॒धवां॑म् । अ॒च॒क्र॒त् । श॒युम् । कः । त्वाम् । अ॒जि॒घां॒स॒त् । चरं॑न्तम् ।

कः । ते॒ । दे॒वः । अधिं । मा॒र्डी॒के । आ॒सी॒त् । यत् । प्र । अक्षिं॑णाः । पि॒तरं॑म् । पा॒द॒ऽगृह्यं ॥१२

कः । ते । मातरम् । विधवाम् । अचक्रत् । शयुम् । कः । त्वाम् । अजिघांसत् । चरन्तम् ।

कः । ते । देवः । अधि । मार्डीके । आसीत् । यत् । प्र । अक्षिणाः । पितरम् । पादऽगृह्य ॥१२

हे इन्द्र “यत् यस्मात् कारणात् पितुः सकाशात् जनिष्यमाणात् भीतस्त्वं त्वदीयं “पितरं “पादगृह्य पादेषु गृहीत्वा “प्राक्षिणाः प्रकर्षेणावधीः । तस्मात् कारणात् “ते त्वत्तोऽन्यः “कः देवः “मातरं स्वकीयजननीं विधवां पितृवधेन पतिरहिताम् “अचक्रत् अकरोत् । “कः त्वत्तोऽन्यः "शयुं शयानं "चरन्तं जाग्रतं वा “त्वाम् "अजिघांसत् हन्तुमैच्छत् । ते त्वत्तोऽन्यः कः “देवः मार्डीके प्रजानां सुखकरणे “अधि अधिकः “आसीत् । अयमर्थः ‘ऋक्सामे वै देवेभ्यः' (तै. सं. ६. १. ३. ६) इत्यनुवाके यज्ञो दक्षिणामभ्यध्यायत्' इत्यादिब्राह्मणेन तैत्तिरीयकैर्बहुधा प्रपञ्चितः ॥

अवं॑त्र्या॒ शुनं॑ आ॒न्त्राणि॑ पेचे॒ न दे॒वेषु॑ विविदे मर्डि॒तारं॑ ।

अप॑श्यं जा॒याममं॑हीयमाना॒मधा॑ मे श्ये॒नो मध्वा जं॑भार ॥ १३

अवं॑र्त्या । शुनः॑ । आ॒न्त्राणि॑ । पे॒चे॒ । न । दे॒वेषु॑ । वि॒वि॒दे॒ । म॒र्डि॒तारं॑म् ।

अप॑श्यम् । जा॒याम् । अमं॑हीयमानाम् । अध॑ । मे॒ । श्ये॒नः॑ । मधु॑ । आ । ज॒भा॒र॒ ॥१३

अवर्त्या । शुनः । आन्त्राणि । पेचे । न । देवेषु । विविदे । मर्डितारम् ।

अपश्यम् । जायाम् । अमहीयमानाम् । अध । मे । श्येनः । मधु । आ । जभार ॥१३

अनया वामदेवः स्वकीयं दारिद्र्यं सूचयन्निंद्रस्योत्कर्षमाह । वामदेवोऽहम् “अवर्त्या जीवनोपायराहित्येन “शुनः शुनकसंबन्धीनि "अन्त्राणि पुरीतन्ति "पेचे अपचम् । "देवेषु द्योतमानेषु वह्या“यदिषु मध्ये इन्द्रादन्यं मर्डितारं सुखयितारं न “विविदे न लेभे । किंच “जायां स्वकीयां भार्याम् “अमहीयमानाम् अश्लाघनीयाम् “अपश्यम् अद्राक्षम् । “अध अथानन्तरं “श्येनः श्येनवच्छीघ्रगामीन्द्रः “मे मह्यं “मधु मधुरोपेतमुदकम् “आ “जभार आजहार ॥ ॥ २६ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।

पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति

श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्क

भूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये तृतीयाष्टके पञ्चमोऽध्यायः संपूर्णः ॥

# ऋग्वेदः सूक्तं ४.१९

← सूक्तं ४.१८

ऋग्वेदः - मण्डल ४

सूक्तं ४.१९

वामदेवो गौतमः

सूक्तं ४.२० →

## दे. इन्द्रः। त्रिष्टुप्

एवा त्वामिन्द्र वज्रिन्नत्र विश्वे देवासः सुहवास ऊमाः ।

महामुभे रोदसी वृद्धमृष्वं निरेकमिद्वृणते वृत्रहत्ये ॥१॥

अवासृजन्त जिव्रयो न देवा भुवः सम्राळिन्द्र सत्ययोनिः ।

अहन्नहिं परिशयानमर्णः प्र वर्तनीररदो विश्वधेनाः ॥२॥

अतृष्णुवन्तं वियतमबुध्यमबुध्यमानं सुषुपाणमिन्द्र ।

सप्त प्रति प्रवत आशयानमहिं वज्रेण वि रिणा अपर्वन् ॥३॥

अक्षोदयच्छवसा क्षाम बुध्नं वार्ण वातस्तविषीभिरिन्द्रः ।

दृळ्हान्यौभ्नादुशमान ओजोऽवाभिनत्ककुभः पर्वतानाम् ॥४॥

अभि प्र दद्रुर्जनयो न गर्भं रथा इव प्र ययुः साकमद्रयः ।

अतर्पयो विसृत उब्ज ऊर्मीन्त्वं वृताँ अरिणा इन्द्र सिन्धून् ॥५॥

त्वं महीमवनिं विश्वधेनां तुर्वीतये वय्याय क्षरन्तीम् ।

अरमयो नमसैजदर्णः सुतरणाँ अकृणोरिन्द्र सिन्धून् ॥६॥

प्राग्रुवो नभन्वो न वक्वा ध्वस्रा अपिन्वद्युवतीरृतज्ञाः ।

धन्वान्यज्राँ अपृणक्तृषाणाँ अधोगिन्द्र स्तर्यो दंसुपत्नीः ॥७॥

पूर्वीरुषसः शरदश्च गूर्ता वृत्रं जघन्वाँ असृजद्वि सिन्धून् ।

परिष्ठिता अतृणद्बद्बधानाः सीरा इन्द्रः स्रवितवे पृथिव्या ॥८॥

वम्रीभिः पुत्रमग्रुवो अदानं निवेशनाद्धरिव आ जभर्थ ।

व्यन्धो अख्यदहिमाददानो निर्भूदुखच्छित्समरन्त पर्व ॥९॥

प्र ते पूर्वाणि करणानि विप्राविद्वाँ आह विदुषे करांसि ।

यथायथा वृष्ण्यानि स्वगूर्तापांसि राजन्नर्याविवेषीः ॥१०॥

नू ष्टुत इन्द्र नू गृणान इषं जरित्रे नद्यो न पीपेः ।

अकारि ते हरिवो ब्रह्म नव्यं धिया स्याम रथ्यः सदासाः ॥११॥

## सायणभाष्यम्

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।

निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

व्याख्यातः पञ्चमोऽध्यायस्तृतीयाष्टक आदरात् ।

धीमता सायणाख्येन षष्ठोऽध्यायोऽथ वर्ण्यते ।

चतुर्थे मण्डले द्वितीयेऽनुवाकेऽष्ट सूक्तानि व्याख्यातानि ।' एवा त्वामिन्द्र ' इत्येकादशर्चं नवमं सूक्तम् । तस्य मण्डलादिपरिभाषया वामदेव ऋषिः ।

अनादेशपरिभाषया त्रिष्टुप् छन्दः । इन्द्रो देवता। तथा चानुक्रान्तम्-' एवैकादश' इति । अग्निष्टोमे माध्यंदिनसवने मैत्रावरुणशस्त्रे इदं सूक्तम् । सूत्र्यते हि- एवा त्वामिन्द्रोशन्नु षु णः सुमना उपाक इति याज्या' (आश्व. श्रौ. ५. १६ ) इति । पृष्ठ्याभिप्लवषडहयोः प्रथमेऽहनि मैत्रावरुणशस्त्रे अहीनसूक्तं तत्स्थाने त्रीणि संपातसूक्तानि । तत्रेदं प्रथमं सूक्तम् । सूत्रितं च–' एवा त्वामिन्द्र यन्न इन्द्रः' (आश्व, श्रौ. ७. ५) इति ॥

एवा त्वामिंद्र वज्रिन्नत्र विश्वें देवासः सुहवांस ऊमाः ।

महामुभे रोदंसी वृद्धमृष्वं निरेकमिद्वृंणते वृत्रहत्यें ॥१

एव । त्वाम् । इन्द्र । वज्रिन् । अत्रं । विश्वें । देवासः । सुऽहवांसः । ऊमाः ।

म॒हाम् । उ॒भे इति॑ । रोद॑सी॒ इति॑ । वृ॒द्धम् । ऋ॒ष्वम् । निः ।
एक॑म् । इत् । गृ॒ण॒ते॒ । वृ॒त्र॒ऽहत्ये॑ ॥१

एव । त्वाम् । इन्द्र । वज्रिन् । अत्र । विश्वे । देवासः ।
सुऽहवासः । ऊमाः ।

महाम् । उभे इति । रोदसी इति । वृद्धम् । ऋष्वम् । निः ।
एकम् । इत् । गृणते । वृत्रऽहत्ये ॥१

“अत्र अस्मिन् यज्ञे “वज्रिन हे वज्रवन् “इन्द्र "सुहवासः
सुहवाः शोभनाह्वानाः “ऊमाः रक्षकाः “विश्वे “देवासः सर्वे
देवाः "उभे “रोदसी द्यावापृथिव्यौ च “एव एवमुक्तप्रकारेण
स्तूयमानं “महां महान्तं प्रभूतं "वृद्धं गुणैः प्रवृद्धम् “ऋष्वं
दर्शनीयं “त्वाम् “एकमित् एकमेव “वृत्रहत्ये वृत्रहननार्थं
“निः “वृणते निःशेषेण संभजन्ते ।।

अवांसृजंत॒ जिव्रंयो॒ न दे॒वा भुवः॑ स॒म्राळिंद्र स॒त्ययोंनिः ।

अह॒न्नहिं परि॒शयांन॒मर्ण॒ः प्र वंर्त॒नीरंरदो वि॒श्वधेंनाः ॥२

अवं । अ॒सृ॒ज॒न्त॒ । जिव्रंयः । न । दे॒वाः । भुवः॑ । स॒म्ऽराट्
। इ॒न्द्र॒ । स॒त्यऽयोंनिः ।

अहंन् । अहिंम् । प॒रि॒ऽशयांनम् । अर्णः॑ । प्र । व॒र्त॒नीः ।
अ॒र॒द॒ः । वि॒श्वऽधेंनाः ॥२

अव । असृजन्त । जिव्रयः । न । देवाः । भुवः । सम्ऽराट्
। इन्द्र । सत्यऽयोनिः ।

अहन् । अहिम् । परिऽशयानम् । अर्णः । प्र । वर्तनीः ।
अरदः । विश्वऽधेनाः ॥२

हे “इन्द्र “देवाः त्वां “जिव्रयो “न जीर्णाः प्रवृद्धाः पितरो यूनः पुत्रानिव “अवासृजन्त असुरवधार्थं प्रैरयन् । ततो हे इन्द्र “सत्ययोनिः सत्यनिवासस्त्वं “सम्राट् सर्वेषां लोकानामधीश्वरः “भुवः अभवः । “अर्णः उदकं लक्षीकृत्य “परिशयानं परितः समन्तात् शयनं कुर्वन्तम् “अहिं वृत्रासुरम् “अहन् अवधीः । “विश्वधेनाः विश्वस्य प्रीणयित्रीः “वर्तनीः सर्वत्र प्रवर्तिका नदीः “प्र “अरदः प्रकर्षेण विलेखनं कृतवानसि। इन्द्रो वृत्रं हत्वा तेनावृतान्युदकानि प्रवाहरूपेण प्रवर्तयतीत्यर्थः ॥

अतृंप्णुवंत॒ं वियंतमबु॒ध्यमबुंध्यमानं सुषुपा॒णमिंद्र ।

स॒प्त प्रतिं प्र॒वतं आ॒शयांन॒महिं॒ वज्रेंण॒ वि रिंणा अप॒र्वन् ॥ ३

अतृ॑ष्णुवन्तम् । वि॒ऽय॑तम् । अ॒बु॒ध्यम् । अबु॑ध्यमानम् । सु॒सु॒पा॒नम् । इ॒न्द्र॒ ।

स॒प्त । प्रति॑ । प्र॒ऽवतः॑ । आ॒ऽशया॑नम् । अहि॑म् । वज्रे॑ण । वि । रि॒णाः॒ । अ॒प॒र्वन् ॥३

अतृष्णुवन्तम् । विऽयतम् । अबुध्यम् । अबुध्यमानम् । सुसुपानम् । इन्द्र ।

सप्त । प्रति । प्रऽवतः । आऽशयानम् । अहिम् । वज्रेण । वि । रिणाः । अपर्वन् ॥३

हे “इन्द्र त्वम् “अतृष्णुवन्तं भोगेषु अतृप्यन्तं “वियतं शिथिलाङ्गम् "अबुध्यं दुर्विज्ञानम् “अबुध्यमानं किमप्यजानन्तं “सुषुपाणं सुप्तं "सप्त सर्पणस्वभावाः “प्रवतः अपः “प्रति “आशयानम् आवृत्य तिष्ठन्तम् “अहिं वृत्रम् “अपर्वन् अपर्वणि पौर्णमास्यां “वज्रेण “वि “रिणाः

व्यरिणाः । विशेषेण हतवानसि । पौर्णमास्यां वृत्रवधः ‘ त्वष्टा हतपुत्रः' इत्यनुवाके ' घ्नन्ति वा एनं पौर्णमास अमावास्यायां प्याययन्ति ' ( तै. सं. २. ५. २. ५ ) इति तैत्तिरीयेऽपि उक्तः ।।

अक्षो॑दय॒च्छव॑सा॒ क्षाम॑ बु॒ध्नं वार्ण वात॒स्तवि॑षीभि॒रिंद्रः॑ ।

दृ॒ळ्हान्यौ॑भ्नादु॒शमा॑न॒ ओजोऽवा॑भिनत्क॒कुभ॒ः पर्व॑तानां ॥
४

अक्षो॑दयत् । शव॑सा । क्षाम॑ । बु॒ध्नम् । वाः । न । वातः॑ । तवि॑षीभिः । इन्द्रः॑ ।

दृ॒ळ्हानि॑ । औ॒भ्ना॒त् । उ॒शमा॑नः । ओजः॑ । अव॑ । अ॒भि॒न॒त् । क॒कुभः॑ । पर्व॑तानाम् ॥४

अक्षोदयत् । शवसा । क्षाम । बुध्नम् । वाः । न । वातः । तविषीभिः । इन्द्रः ।

दृळ्हानि । औभ्नात् । उशमानः । ओजः । अव । अभिनत् । ककुभः । पर्वतानाम् ॥४

“इन्द्रः परमैश्वर्ययुक्तः “शवसा बलेन “बुध्नम् अन्तरिक्षं “क्षाम क्षीणोदकम् "अक्षोदयत् संपिपेष । तत्र दृष्टान्तः । “वातः वायुः “तविषीभिः बलैः “वार्ण उदकमिव तद्वत् । किंच “ओजः बलम् "उशमानः कामयमान इन्द्रः “दृळ्हानि दृढानि स्थिराण्यप्यभ्राणि "औभ्नात् अभाङ्क्षीत् । तथा “पर्वतानां गिरीणां “ककुभः पक्षान् “अवाभिनत् अत्यन्तमभैत्सीत् ॥

अ॒भि प्र द॑द्रु॒र्जन॑यो॒ न गर्भं॒ रथा॑ इव॒ प्र य॑युः सा॒कमद्र॑यः ।

अतं॑र्पयो वि॒सृतं॑ उ॒ब्ज ऊ॒र्मींत्वं वृ॒ताँ अं॑रिणा इं॑द्र॒ सिंधूं॑न् ॥५

अ॒भि । प्र । द॒द्रुः॒ । जनं॑यः । न । गर्भं॑म् । रथाः॑ऽइव । प्र । य॒युः॒ । सा॒कम् । अद्रं॑यः ।

अतं॑र्पयः । वि॒ऽसृतः॑ । उ॒ब्जः । ऊ॒र्मीन् । त्वम् । वृ॒तान् । अ॒रि॒णाः॒ । इ॒न्द्र॒ । सिन्धूं॑न् ॥५

अभि । प्र । दद्रुः । जनयः । न । गर्भम् । रथाःऽइव । प्र । ययुः । साकम् । अद्रयः ।

अतर्पयः । विऽसृतः । उब्जः । ऊर्मीन् । त्वम् । वृतान् । अरिणाः । इन्द्र । सिन्धून् ॥५

हे “इन्द्र त्वाम् “अद्रयः मरुतः “जनयः जनन्यः “गर्भं “न पुत्रमिव “अभि “प्र “दद्रुः अभिजग्मुः । किंच “रथाइव रंहणशीला रथा यथा तथा वृत्रवधार्थं त्वया “साकं “प्र “ययुः प्रकर्षेण अयासिषुः । हे इन्द्र त्वं “विसृतः

विसरणशीला नदीः "अतर्पयः अद्भिरपूरयः । तथा
“ऊर्मीन् मेघान् "उब्जः अवधीः । तथा “त्वं वृतान्
वृत्रेणावृतान् “सिन्धून् अपः “अरिणाः प्रैरयः ॥ ॥ १ ॥

त्वं म॒हीम॒वनिं वि॒श्वधेंनां तु॒र्वीतंये व॒य्यांय॒ क्षरंतीं ।

अरंमयो॒ नम॒सैज॒दर्णः॑ सुतर॒णाँ अंकृणोरिंद्र॒ सिंधूंन् ॥६

त्वम् । म॒हीम् । अ॒वनिंम् । वि॒श्वऽधेंनाम् । तु॒र्वीतंये ।
व॒य्यांय । क्षरंन्तीम् ।

अरंमयः । नमंसा । एजंत् । अर्णः॑ । सु॒ऽत॒र॒णान् ।
अ॒कृ॒णोः॒ । इ॒न्द्र॒ । सिन्धूंन् ॥६

त्वम् । महीम् । अवनिम् । विश्वऽधेनाम् । तुर्वीतये ।
वय्याय । क्षरन्तीम् ।

अरमयः । नमसा । एजत् । अर्णः । सुऽतरणान् ।
अकृणोः । इन्द्र । सिन्धून् ॥६

हे इन्द्र “त्वं “महीं महती “विश्वधेनां विश्वस्य प्रीणयित्रीं “तुर्वीतये तुर्वीतिनाम्ने राज्ञे “वय्याय वय्यनाम्ने च “क्षरन्तीम् अभीष्टान् कामान् दुहतीम् “अवनिं भूमिं “नमसा अन्नेन “एजत् एजता चलता "अर्णः अर्णसोदकेन च “अरमयः रमयसि । इन्द्रः पृथिवीमन्नोदकसमृद्धां करोतीत्यर्थः । किंच हे "इन्द्र त्वं “सिन्धून् जलानि “सुतरणान् सुष्ठु तीर्णानि “अकृणोः अकार्षीः ॥

प्राग्रुवों नभ॒न्वो॒३॒ न वक्वां ध्व॒स्रा अंपिन्वद्युव॒तीर्ऋंत॒ज्ञाः ।

धन्वा॒न्यज्राँ अपृणक्तृषा॒णाँ अधो॒गिंद्रः॑ स्त॒र्यो॒३॒ दंसुंपत्नीः
॥७

प्र । अ॒ग्रुवः॑ । न॒भ॒न्वः॑ । न । वक्वाः॑ । ध्व॒स्राः । अ॒पि॒न्व॒त् । यु॒व॒तीः । ऋ॒त॒ऽज्ञाः ।

धन्वा॑नि । अज्रा॑न् । अ॒पृ॒ण॒क् । तृ॒षा॒णान् । अधो॑क् । इन्द्रः॑ । स्त॒र्यः॑ । दंऽसु॑पत्नीः ॥७

प्र । अग्रुवः । नभन्वः । न । वक्वाः । ध्वस्राः । अपिन्वत् । युवतीः । ऋतऽज्ञाः ।

धन्वानि । अज्रान् । अपृणक् । तृषाणान् । अधोक् । इन्द्रः । स्तर्यः । दंऽसुपत्नीः ॥७

इन्द्रः “नभन्वः शत्रूणां हिंसिकाः “वक्वाः “न सेना इव “ध्वस्राः कूलानां ध्वंसिकाः “युवतीः अद्भिर्मिश्रिताः “ऋतज्ञाः ऋतस्यान्नस्य जनयित्रीः “अग्रुवः । अग्रुव इति नदीनामैतत् । अग्रगामिनीः नदीः “प्र “अपिन्वत् प्रकर्षेणापूरयत् । तथा “धन्वानि निर्जलानुन्नतान् देशांश्च

वृष्ट्या “अपृणक् अपूरयत् । तथा “अज्रान् मार्गस्य गन्तॄन् “तृषाणान् पिपासया युक्तान् पुरुषान् अपृणक् अपूरयत् । किंच “इन्द्रः “दंसुपत्नीः दमनपरा असुराः सुष्ठु पतयो यासां ताः “स्तर्यः स्तरीर्निर्वृत्तप्रसवी गाः “अधोक् अधुक्षत् । इन्द्रो राक्षसकृतनिरोधदुःखात् निरुद्धप्रसवा अपि गा विमुच्य सप्रसवाश्चकारेत्यर्थः ॥

पू॒र्वीरु॒षसः॑ श॒रद॑श्च गू॒र्ता वृ॒त्रं जं॑घ॒न्वाँ अं॑सृज॒द्वि सिं॑धूं॑न् ।

परिं॑ष्ठिता अतृणद्बद्बधा॒नाः सी॒रा इंद्र॒ः स्रवि॑तवे पृथि॒व्या ॥ ८

पू॒र्वीः । उ॒षसः॑ । श॒रदः॑ । च॒ । गू॒र्ताः । वृ॒त्रम् । ज॒घ॒न्वान् । अ॒सृ॒ज॒त् । वि । सिन्धू॑न् ।

परिंऽस्थिताः । अ॒तृ॒ण॒त् । ब॒द्ब॒धा॒नाः । सी॒राः । इन्द्रः॑ । स्त्रविंतवे । पृ॒थि॒व्या ॥८

पूर्वीः । उषसः । शरदः । च । गूर्ताः । वृत्रम् । जघन्वान् । असृजत् । वि । सिन्धून् ।

परिऽस्थिताः । अतृणत् । बद्बधानाः । सीराः । इन्द्रः । स्त्रवितवे । पृथिव्या ॥८

"वृत्रं वृत्राख्यमसुरं “जघन्वान् हतवानिन्द्रः “गूर्ताः तमिस्त्रया गीर्णाः "पूर्वीः बह्वीः “उषसः “शरदश्च संवत्सरांश्च “वि “असृजत् विशेषेण ससर्ज । तथा “सिन्धून् वृत्रेणावृतान्युदकानि व्यसृजत् । किंच “इन्द्रः “परिष्ठिताः मेघेषु परितः स्थिताः “बद्बधानाः वृत्रेण परितो बध्यमानाः “सीराः नदीः । सीरा इति नदीनामैतत् । “पृथिव्या पृथिवीरूपेण मार्गेण "स्त्रवितवे स्त्रवितुं गमनार्थम् “अतृणत् अविध्यत् ॥

व॒म्रीभि॑ः पु॒त्रम॒ग्रुवो॑ अदा॒नं नि॒वेश॑नाद्धरिव॒ आ ज॑भर्थ ।

व्यं॑१॒॑धो अ॑ख्य॒दहि॑माददा॒नो निर्भू॑दुख॒च्छित्सम॑रंत॒ पर्व॑ ॥९

व॒म्रीभि॑ः । पु॒त्रम् । अ॒ग्रुव॑ः । अ॒दा॒नम् । नि॒ऽवेश॑नात् ।
ह॒रि॒ऽव॒ः । आ । ज॒भ॒र्थ॒ ।

वि । अ॒न्धः । अ॒ख्य॒त् । अहि॑म् । आ॒ऽद॒दा॒नः । निः । भू॒त्
। उ॒ख॒ऽछित् । सम् । अ॒र॒न्त॒ । पर्व॑ ॥९

वम्रीभिः । पुत्रम् । अग्रुवः । अदानम् । निऽवेशनात् ।
हरिऽवः । आ । जभर्थ ।

वि । अन्धः । अख्यत् । अहिम् । आऽददानः । निः । भूत्
। उखऽछित् । सम् । अरन्त । पर्व ॥९

हे "हरिवः हरिसंज्ञकाश्वोपेतेन्द्र त्वं "वम्रीभिः उपजिह्विकाभिः "अदानम् अद्यमानम् "अग्रुवः । अग्रू नाम काचित् । तस्याः "पुत्रं "निवेशनात् वल्मीकाख्यात् स्थानात् "आ "जभर्थ आहृतवानसि ॥ "आददानः इन्द्रेणाह्नियमाणोऽग्रुवः पुत्रः "अन्धः पूर्वमन्धः सन् "अहिं सर्पं "वि "अख्यत् विशेषेण अपश्यत् । ततः निर्भूत् वल्मीकान्निर्गतः अभूत्। 'उखच्छित् वल्मीकाख्याया उखायाश्छेदकानि "पर्व पर्वाणि अस्य सर्वाण्यङ्गानां शिथिलानि पर्वाणि "समरन्त समगच्छन्त । उपजिह्विकाभिः शिथिलीकृतानि अग्रुवः पुत्रस्य पर्वाणीन्द्रेण समधीयन्तेत्यर्थः ॥

प्र ते॒ पूर्वा॑णि॒ कर॑णानि विप्राावि॒द्वाँ आ॑ह वि॒दुषे॒ करां॑सि ।

यथा॑यथा॒ वृष्ण्या॑नि॒ स्वगू॒र्तापां॑सि राज॒न्नर्या॒विं॑वेषीः ॥१०

प्र । ते॒ । पू॒र्वाणि॑ । कर॑णानि । वि॒प्र॒ । आ॒ऽवि॒द्वान् । आ॒ह॒ । वि॒दुषे॑ । करां॑सि ।

यथा॑ऽयथा । वृष्ण्या॑नि । स्वऽगू॑र्ता । अपां॑सि । रा॒ज॒न् । नर्या॑ । अवि॑वेषीः ॥१०

प्र । ते । पूर्वाणि । करणानि । विप्र । आऽविद्वान् । आह । विदुषे । करांसि ।

यथाऽयथा । वृष्ण्यानि । स्वऽगूर्ता । अपांसि । राजन् । नर्या । अविवेषीः ॥१०

हे “राजन् राजमानेन्द्र “वृष्ण्यानि वर्षणयोग्यानि “स्वगूर्ता स्वगूर्तानि स्वयमुद्गीर्णानि “नर्या नर्याणि मनुष्यहितानि “अपांसि त्वत्संबन्धीनि कर्माणि “यथायथा “अविवेषीः व्याप्नोः । अकार्षीरिति यावत् । तथातथा हे “विप्र प्राज्ञेन्द्र “विदुषे विदुषः सर्वं जानतः “ते त्वत्संबन्धीनि “पूर्वाणि

पुरातनानि "करणानि कर्माणि "आविद्वान् आ समन्ताज्जानन् वामदेवः "करांसि त्वदीयानि कर्माणि “प्र प्रकर्षेण “आह ब्रवीति ॥

नू ष्टु॒त इं॑द्र॒ नू गृं॑णा॒न इषं॑ जरि॒त्रे न॒द्यो॒३॒ न पीं॑पेः ।

अका॑रि ते हरिवो॒ ब्रह्म॒ नव्यं॑ धि॒या स्या॑म र॒थ्यः॑ सदा॒साः ॥ ११

नु । स्तु॒तः । इ॒न्द्र॒ । नु । गृ॒णा॒नः । इषं॑म् । ज॒रि॒त्रे । न॒द्यः॑ । न । पी॒पे॒रिति॑ पीपेः ।

अका॑रि । ते॒ । ह॒रि॒ऽव॒ः । ब्रह्मं॑ । नव्यं॑म् । धि॒या । स्या॒म॒ । र॒थ्यः॑ । स॒दा॒ऽसाः ॥११

नु । स्तुतः । इन्द्र । नु । गृणानः । इषम् । जरित्रे । नद्यः । न । पीपेरिति पीपेः ।

अकारि । ते । हरिऽवः । ब्रह्म । नव्यम् । धिया । स्याम । रथ्यः । सदाऽसाः ॥११

हे "इन्द्र "नु क्षिप्रं “स्तुतः पूर्वैर्ऋषिभिः संस्तुतः “नु क्षिप्रं “गृणानः अस्माभिः स्तूयमानः त्वम् “इषम् अन्नं “जरित्रे स्तोत्रे मह्यं "नद्यो “न अद्भिर्नदीरिव “पीपेः प्यायय । प्रवृद्धं कुरु । “हरिवः हरिसंज्ञकाश्वोपेतेन्द्र “ते तुभ्यं “नव्यं नवतरं “ब्रह्म स्तोत्रम् “अकारि अस्माभिः क्रियते । “रथ्यः रथवन्तो वयं “धिया प्रज्ञारूपया स्तुत्या “सदासाः त्वां सर्वदा भजमानास्त्वदर्थं हवीरूपस्यान्नस्य दातारो वा “स्याम भूयास्म ॥ ॥ २॥

## टिप्पणी

४.१९.११ इषं जरित्रे नद्यो न पीपेः इति

इष उपरि टिप्पणी

# ऋग्वेदः सूक्तं ४.२०

ऋग्वेदः - मण्डल ४
← सूक्तं ४.१९
सूक्तं ४.२०
सूक्तं ४.२१ →
वामदेवो गौतमः

## दे. इन्द्रः। त्रिष्टुप्

आ न इन्द्रो दूरादा न आसादभिष्टिकृदवसे यासदुग्रः ।

ओजिष्ठेभिर्नृपतिर्वज्रबाहुः संगे समत्सु तुर्वणिः पृतन्यून् ॥१॥

आ न इन्द्रो हरिभिर्यात्वच्छार्वाचीनोऽवसे राधसे च ।

तिष्ठाति वज्री मघवा विरप्शीमं यज्ञमनु नो वाजसातौ ॥२॥

इमं यज्ञं त्वमस्माकमिन्द्र पुरो दधत्सनिष्यसि क्रतुं नः ।

श्वघ्नीव वज्रिन्सनये धनानां त्वया वयमर्य आजिं जयेम ॥३॥

उशन्नु षु णः सुमना उपाके सोमस्य नु सुषुतस्य स्वधावः ।

पा इन्द्र प्रतिभृतस्य मध्वः समन्धसा ममदः पृष्ठ्येन ॥४॥

वि यो ररप्श ऋषिभिर्नवेभिर्वृक्षो न पक्वः सृण्यो न जेता ।

मर्यो न योषामभि मन्यमानोऽच्छा विवक्मि पुरुहूतमिन्द्रम् ॥५॥

गिरिर्न यः स्वतवाँ ऋष्व इन्द्रः सनादेव सहसे जात उग्रः ।

आदर्ता वज्रं स्थविरं न भीम उद्नेव कोशं वसुना न्यृष्टम् ॥६॥

न यस्य वर्ता जनुषा न्वस्ति न राधस आमरीता मघस्य ।

उद्वावृषाणस्तविषीव उग्रास्मभ्यं दद्धि पुरुहूत रायः ॥७॥

ईक्षे रायः क्षयस्य चर्षणीनामुत व्रजमपवर्तासि गोनाम् ।

शिक्षानरः समिथेषु प्रहावान्वस्वो राशिमभिनेतासि भूरिम् ॥८॥

कया तच्छृण्वे शच्या शचिष्ठो यया कृणोति मुहु का चिदृष्वः ।

पुरु दाशुषे विचयिष्ठो अंहोऽथा दधाति द्रविणं जरित्रे ॥९॥

मा नो मर्धीरा भरा दद्धि तन्नः प्र दाशुषे दातवे भूरि यत्ते ।

नव्ये देष्णे शस्ते अस्मिन्त उक्थे प्र ब्रवाम वयमिन्द्र स्तुवन्तः ॥१०॥

नू ष्टुत इन्द्र नू गृणान इषं जरित्रे नद्यो न पीपेः ।

अकारि ते हरिवो ब्रह्म नव्यं धिया स्याम रथ्यः सदासाः ॥११॥

## सायणभाष्यम्

' आ न इन्द्रः' इत्येकादशर्चं दशमं सूक्तं वामदेवस्यार्षं त्रैष्टुभमैन्द्रम् । ‘आ नः' इत्यनुक्रमणिका । पृष्ठ्याभिप्लवषडहयोः प्रथमेऽहनि निष्केवल्ये एतन्निविद्धानीयम् । सूत्रितं च -- आ न इन्द्र इति निष्केवल्यम् ' ( आश्व. श्रौ. ७. ५) इति । महाव्रतेऽप्येतत् संपातसूक्तम् । तथैव पञ्चमारण्यके सूत्रितं च−' आ न इन्द्रो दूरादा न आसादिति संपातः ' (ऐ. आ. ५. २. २) इति ॥

आ न॒ इंद्रो॑ दू॒रादा न॑ आ॒सादा॑भिष्टि॒कृदव॑से यासदु॒ग्रः ।

ओजि॑ष्ठेभिर्नृ॒पति॒र्वज्र॑बाहुः सं॒गे स॒मत्सु॑ तु॒र्वणिः॑ पृत॒न्यून् ॥ १

आ । नः॒ । इन्द्रः॑ । दू॒रात् । आ । नः॒ । आ॒सात् ।
अ॒भि॒ष्टि॒ऽकृत् । अव॑से । या॒स॒त् । उ॒ग्रः ।

ओजि॑ष्ठेभिः । नृ॒ऽपतिः॑ । वज्र॑ऽबाहुः । स॒म्ऽगे । स॒मत्ऽसु॑ । तु॒र्वणिः॑ । पृ॒त॒न्यून् ॥१

आ । नः । इन्द्रः । दूरात् । आ । नः । आसात् ।
अभिष्टिऽकृत् । अवसे । यासत् । उग्रः ।

ओजिष्ठेभिः । नृऽपतिः । वज्रऽबाहुः । सम्ऽगे । समत्ऽसु । तुर्वणिः । पृतन्यून् ॥१

“अभिष्टिकृत् यजमानसंबन्धिनामभीष्टानां कर्ता "उग्रः तेजस्वी "इन्द्रः “नः अस्माकम् “अवसे रक्षणाय “दूरात् "आ "यासत् आयातु आगच्छतु । अपि च "आसात् आसन्नादन्तिकाच्च “नः अस्माकमवसे रक्षणाय “आ यासत् आयातु । कीदृशः । “समत्सु संग्रामेषु “संगे शत्रुभिः संयोगे सति “पृतन्यून् शत्रून् "तुर्वणिः हिंसन् "वज्रबाहुः वज्रहस्तः "नृपतिः वृष्टिद्वारा नृणां मनुष्याणां पालकः “ओजिष्ठेभिः अतिशयेन तेजस्विभिः मरुद्भिर्युक्त इति शेषः ॥

आ न॒ इंद्रो॒ हरिं॑भिर्या॒त्वच्छा॒र्वाची॒नोऽवं॑से॒ राधं॑से च ।

तिष्ठा॑ति व॒ज्री म॒घवा॑ विर॒प्शीमं य॒ज्ञमनु॑ नो॒ वाजं॑सातौ ॥२

आ । न॒ः । इन्द्रः॑ । हरिं॑ऽभिः । या॒तु॒ । अच्छं॑ । अ॒र्वा॒ची॒नः । अवं॑से । राधं॑से । च॒ ।

तिष्ठांति । व॒ज्री । म॒घऽवां । वि॒ऽर॒प्शी । इ॒मम् । य॒ज्ञम् । अनुं । न॒ः । वाजंऽसातौ ॥२

आ । नः । इन्द्रः । हरिऽभिः । यातु । अच्छ । अर्वाचीनः । अवसे । राधसे । च ।

तिष्ठाति । वज्री । मघऽवा । विऽरप्शी । इमम् । यज्ञम् । अनु । नः । वाजऽसातौ ॥२

“अर्वाचीनः अस्मदभिमुखः “इन्द्रः “अवसे अस्मदीयाय रक्षणाय “राधसे “च धनाय च “नः “अच्छ अस्मान् अभि लक्षीकृत्य “हरिभिः अश्वैः सह “आ “यातु आगच्छतु । किंच "वज्री वज्रवान् “मघवा धनवान् “विरप्शी महान् । विरप्शीति महन्नामसु पाठात् । अस्मदीयस्य कर्मणो द्वेष्टृभिरसुरादिभिः सह “नः अस्माकं “वाजसातौ युद्धे प्राप्ते सति “इमम् अस्मदीयं “यज्ञम् “अनु उद्दिश्य “तिष्ठाति तिष्ठतु ॥

इ॒मं य॒ज्ञं त्वम॒स्माकं॑मिंद्र पु॒रो दधं॑त्सनिष्यसि॒ क्रतुं॑ नः ।

श्व॒घ्नीवं॑ वज्रिन्त्स॒नये॒ धनां॑ना॒ं त्वयां॑ व॒यम॒र्य आ॒जिं जं॑येम

॥३

इ॒मम् । य॒ज्ञम् । त्वम् । अ॒स्माकं॑म् । इ॒न्द्र॒ । पु॒रः । दधं॑त् ।

स॒नि॒ष्य॒सि॒ । क्रतुं॑म् । न॒ः ।

श्व॒घ्नीऽइं॑व । व॒ज्रि॒न् । स॒नयें॑ । धनां॑नाम् । त्वयां॑ । व॒यम् ।

अ॒र्यः । आ॒जिम् । ज॒ये॒म॒ ॥३

इमम् । यज्ञम् । त्वम् । अस्माकम् । इन्द्र । पुरः । दधत् ।

सनिष्यसि । क्रतुम् । नः ।

श्वघ्नीऽइव । वज्रिन् । सनये । धनानाम् । त्वया । वयम् ।

अर्यः । आजिम् । जयेम ॥३

हे “इन्द्र “त्वं “नः अस्मान् “पुरो “दधत् पुरस्कृतान् कुर्वन् “अस्माकं “क्रतुं क्रियमाणम् “इमं “यज्ञं “सनिष्यसि संभजिष्यसि । अपि च “श्वघ्नीव मृगयुर्मृगानिव हे “वज्रिन् वज्रवन्निन्द्र “त्वया “अर्यः अरयः स्तोतारः “वयं “धनानां पश्वादिधनानां “सनये लाभाय “आजिं शत्रुसंबन्धिनं संग्रामं “जयेम संजीयास्म ॥

अग्निष्टोमे माध्यंदिनसवने मैत्रावरुणस्य ‘उशन्नु षु णः' इति शस्त्रयाज्या । सूत्रितं च - उशन्नु षु णः सुमना उपाक इति याज्या' ( आश्व. श्रौ. ५. १६ ) इति ॥ उशन्नु षु णः सुमन उपके सोमस्य नु सुषुतस्य स्वधावः ।

उ॒शन्नु॒ षु णः॑ सु॒मनां उपा॒के सोमं॑स्य॒ नु सुषुं॑तस्य स्वधावः ।

पा इं॑द्र॒ प्रतिं॑भृतस्य॒ मध्व॒ः समं॑धंसा ममदः पृ॒ष्ठ्ये॑न ॥४

उ॒शन् । ऊं॒ इति॑ । सु । न॒ः । सु॒ऽमनाः॑ । उ॒पा॒के । सोम॑स्य । नु । सु॒ऽसु॑तस्य । स्व॒धा॒ऽव॒ः ।

पाः । इ॒न्द्र॒ । प्रति॑ऽभृतस्य । मध्वः॑ । सम् । अन्ध॑सा । म॒म॒द॒ः । पृ॒ष्ठ्ये॑न ॥४

उशन् । ऊं इति । सु । नः । सुऽमनाः । उपाके । सोमस्य । नु । सुऽसुतस्य । स्वधाऽवः ।

पाः । इन्द्र । प्रतिऽभृतस्य । मध्वः । सम् । अन्धसा । ममदः । पृष्ठ्येन ॥४

हे “स्वधावः अन्नवन् “इन्द्र “सुमनाः शोभनमनस्कस्त्वम् “उपाके समीपे "नः अस्मान् "उशन्नु “सु अत्यन्तं कामयमानः सन् "सुषुतस्य सुष्व् भिषुतं “प्रतिभृतस्य संभृतं “मध्वः मादकं “सोमस्य सोमं नु क्षिप्रमेव “पाः पिब । “पृष्ठ्येन । पृष्ठशब्देन माध्यंदिनसवने

उद्गातृभिरुद्गीयमानं स्तोत्रमुच्यते । तत्संबन्धिना "अन्धसा पीतेन सोमेन “सं “ममदः प्रहृष्टो भव ॥

वि यो रंर॒प्श ऋषिंभि॒र्नवेंभिर्वृ॒क्षो न प॒क्वः सृण्यो॒ न जेतां ।

मर्यो॒ न योषांम॒भि मन्यंमा॒नोऽच्छां विवक्मि पुरुहू॒तमिंद्रं ॥ ५

वि । यः । र॒रप्शे । ऋषिंऽभिः । नवेंभिः । वृ॒क्षः । न । प॒क्वः । सृण्यः॑ । न । जेतां ।

मर्यः॑ । न । योषांम् । अ॒भि । मन्यंमानः । अच्छं । वि॒व॒क्मि॒ । पु॒रु॒ऽहू॒तम् । इन्द्रंम् ॥५

वि । यः । ररप्शे । ऋषिऽभिः । नवेभिः । वृक्षः । न । पक्वः । सृण्यः । न । जेता ।

मर्यः । न । योषाम् । अभि । मन्यमानः । अच्छ । विवक्मि । पुरुऽहूतम् । इन्द्रम् ॥५

“पक्वः पक्वफलः “वृक्षो “न वृक्ष इव । अत्र सृणिशब्दोऽङ्कुशवाची । तेनायुधमात्रं लक्ष्यते । “सृण्यः आयुधकुशलः “जेता “न शत्रूविजयी वीरपुरुष इव “यः “नवेभिः नवैर्नूतनैः “ऋषिभिः “वि “ररप्शे विविधं स्तूयते । स्तोताहं “पुरुहूतं बहुभिराहूतं तम् “इन्द्रम् “अच्छ अभि लक्षीकृत्य “विवक्मि विशेषेण वच्मि स्तौमि । तत्र दृष्टान्तः । “अभि “मन्यमानः मदीयेयं योषिदित्यभिजानन् “मर्यः मर्त्यः “योषां “न स्त्रीमिव तद्वत् ॥ ॥ ३ ॥

गि॒रिर्न यः स्वत॑वाँ ऋ॒ष्व इंद्रः॑ स॒नादे॒व सह॑से जा॒त उ॒ग्रः ।

आद॑र्ता॒ वज्रं॒ स्थवि॑रं॒ न भी॒म उ॒द्नेव॒ कोशं॒ वसु॑ना॒ न्यृ॑ष्टं ॥६

गि॒रिः । न । यः । स्वऽतं॑वान् । ऋ॒ष्वः । इन्द्रः॑ । स॒नात् । ए॒व । सहं॑से । जा॒तः । उ॒ग्रः ।

आऽदं॑र्ता । वज्रं॑म् । स्थविं॑रम् । न । भी॒मः । उ॒द्नाऽइं॑व । कोशं॑म् । वसुं॑ना । निऽऋं॑ष्टम् ॥६

गिरिः । न । यः । स्वऽतवान् । ऋष्वः । इन्द्रः । सनात् । एव । सहसे । जातः । उग्रः ।

आऽदर्ता । वज्रम् । स्थविरम् । न । भीमः । उद्नाऽइव । कोशम् । वसुना । निऽऋष्टम् ॥६

"गिरिर्न पर्वत इव “स्वतवान् स्वयं प्रवृद्धः “ऋष्वः महान् । ऋष्व इति महन्नाम ‘ महत् ब्रध्नः ऋष्वः ' ( नि. ३. ३. ३) इति तन्नामसु पाठात् । “उग्रः ओजस्वी “यः “इन्द्रः “सहसे शत्रोरभिभवाय “सनादेव चिरादेव “जातः उत्पन्नः “भीमः शत्रूणां भयंकरः स इन्द्रः “उद्नेव “कोशम् उदकेन

जलपात्रमिव “वसुना तेजसा “न्यृष्टं निगतं “स्थविरं बृहत् “वज्रं “न वज्रं च । नेति चार्थे । "आदर्ता आदृतवान् आसीत् ॥

न यस्य॑ व॒र्ता ज॒नुषा॒ न्वस्ति॒ न राध॑स आमरी॒ता म॒घस्य॑ ।

उ॒द्वा॒वृ॒षा॒णस्त॑विषीव उग्रा॒स्मभ्य॑ं दद्धि पुरुहूत रा॒यः ॥७

न । यस्य॑ । व॒र्ता । ज॒नुषा॑ । नु । अस्ति॑ । न । राध॑सः । आ॒ऽम॒री॒ता । म॒घस्य॑ ।

उ॒त्ऽव॒वृ॒षा॒णः । त॒वि॒षी॒ऽव॒ः । उ॒ग्र॒ । अ॒स्मभ्य॑म् । द॒द्धि॒ । पु॒रु॒ऽहू॒त॒ । रा॒यः ॥७

न । यस्य । वर्ता । जनुषा । नु । अस्ति । न । राधसः । आऽमरीता । मघस्य ।

उत्ऽववृषाणः । तविषीऽवः । उग्र । अस्मभ्यम् । दद्धि । पुरुऽहूत । रायः ॥७

हे इन्द्र “यस्य तव कश्चित् "जनुषा जन्मना स्वत एव “नु नूनं सत्यं “वर्ता वारयिता “न “अस्ति। “राधसः यज्ञादिकर्मणां साधकस्य “मघस्य त्वया दीयमानस्य धनस्य “आमरीता कश्चिदपि नाशयिता “न अस्ति । हे "तविषीवः बलवन् “उग्र तेजस्विन हे “पुरुहूत बहुभिराहूतेन्द्र “उद्ववृषाणः अभीष्टान् कामान् वर्षकस्त्वं “रायः पश्वादिधनानि “अस्मभ्यं स्तोतृभ्यः “दद्धि देहि ॥

ईक्षे रा॒यः क्षयं॑स्य चर्षणी॒नामु॒त व्र॒जमं॑पव॒र्तासि॒ गोनां॑ ।

शि॒क्षा॒न॒रः सं॑मि॒थेषु॑ प्र॒हावा॒न्वस्वो॑ रा॒शिमं॑भिने॒तासि॒ भूरिं॑ ॥ ८

ई॒क्षे॑ । रा॒यः । क्षयं॑स्य । च॒र्ष॒णी॒नाम् । उ॒त । व्र॒जम् ।
अ॒प॒ऽव॒र्ता । अ॒सि॒ । गोना॑म् ।

शि॒क्षा॒ऽन॒रः । स॒म्ऽइ॒थेषु॑ । प्र॒हाऽवा॑न् । वस्वः॑ । रा॒शिम् ।
अ॒भि॒ऽने॒ता । अ॒सि॒ । भूरि॑म् ॥८

ईक्षे । रायः । क्षयस्य । चर्षणीनाम् । उत । व्रजम् ।
अपऽवर्ता । असि । गोनाम् ।

शिक्षाऽनरः । सम्ऽइथेषु । प्रहाऽवान् । वस्वः । राशिम् ।
अभिऽनेता । असि । भूरिम् ॥८

हे इन्द्र त्वं “चर्षणीनां प्रजानां "रायः धनस्य “क्षयस्य
गृहस्य च "ईक्षे ईक्षसे । "उत अपि च “गोनां गवां “व्रजं
समूहम् "अपवर्ता अपवारकः “असि ।
निरोधकेभ्योऽसुरेभ्यो गवां मोचयिता भवसीत्यर्थः । किंच
हे इन्द्र “शिक्षानरः शिक्षया नेता प्रज्ञानां शासकः “समिथेषु

युद्धेषु “प्रहावान् प्रहरणवांस्त्वं “भूरिं प्रभूतं “वस्वः धनस्य “राशिं समूहम् अभिनेतासि प्रापयिता च भवसि ॥

कया॒ तच्छृ॑ण्वे॒ शच्या॒ शचि॑ष्ठो॒ यया॑ कृ॒णोति॒ मुहु॒ का चि॑दृ॒ष्वः ।

पु॒रु दा॒शुषे॒ विच॑यिष्ठो॒ अंहोऽथा॑ दधाति॒ द्रवि॑णं जरि॒त्रे ॥९

कया॑ । तत् । शृ॒ण्वे॒ । शच्या॑ । शचि॑ष्ठः । यया॑ । कृ॒णोति॑ । मुहु॑ । का । चि॒त् । ऋ॒ष्वः ।

पु॒रु । दा॒शुषे॑ । विऽच॑यिष्ठः । अंहः॑ । अथ॑ । द॒धा॒ति॒ । द्रवि॑णम् । ज॒रि॒त्रे ॥९

कया । तत् । शृण्वे । शच्या । शचिष्ठः । यया । कृणोति । मुहु । का । चित् । ऋष्वः ।

पुरु । दाशुषे । विऽचयिष्ठः । अंहः । अथ । दधाति । द्रविणम् । जरित्रे ॥९

“शचिष्ठः अतिशयेन प्राज्ञः । तदिति लिङ्गब्यत्ययः । “तत् स इन्द्रः "कया “शच्या कया प्रज्ञया । शचीति प्रज्ञानामैतत् । “शृण्वे श्रूयते । "ऋष्वः महानिन्द्रः “मुहु मुहुः “यया प्रज्ञया “का “चित् कानिचित् कर्माणि “कृणोति करोति । स इन्द्रः “दाशुषे हविर्दत्तवते यजमानाय “पुरु भूयिष्ठम् “अंहः पापं “विचयिष्ठः अतिशयेन नाशको भवति । “अथ अपि च “जरित्रे स्तोत्रे ““द्रविणं पश्वादिधनं “दधाति ददाति ॥

मा नों मर्धीरा भंरा दद्धि तन्नः प्र दाशुषे दातंवे भूरि यत्तें ।

नव्यें देष्णे शस्ते अस्मिंतं उक्थे प्र ब्रंवाम वयमिंद्र स्तुवंतः ॥१०

मा । न॒ः । म॒र्धी॒ः । आ । भ॒र॒ । द॒द्धि । तत् । न॒ः । प्र ।
दा॒शुषें । दातंवे । भूरिं । यत् । ते॒ ।

नव्यें । दे॒ष्णे । श॒स्ते । अ॒स्मिन् । ते॒ । उ॒क्थे । प्र । ब्र॒वा॒म॒ ।
व॒यम् । इ॒न्द्र॒ । स्तु॒वन्तः॑ ॥१०

मा । नः । मर्धीः । आ । भर । दद्धि । तत् । नः । प्र ।
दाशुषे । दातवे । भूरि । यत् । ते ।

नव्ये । देष्णे । शस्ते । अस्मिन् । ते । उक्थे । प्र । ब्रवाम ।
वयम् । इन्द्र । स्तुवन्तः ॥१०

हे इन्द्र त्वं "नः अस्मान् “मा 'मर्धीः मा हिंसीः । किंतु त्वम् "आ “भर पोषको भव। हे इन्द्र "ते त्वदीयं “भूरि बह्वपि “यत् धनं “दाशुषे हविर्दत्तवते यजमानाय “दातवे दातुम् । “प्र भवतीति शेषः । “नः अस्मभ्यं “तत् धनम् आहृत्य “दद्धि देहि । हे "इन्द्र त्वां स्तुवन्तः “वयम् “अस्मिन् “उक्थे

अस्मिन्निष्केवल्याख्यशस्त्रे “ते त्वदर्थं "नव्ये नूतने “शस्ते प्रशस्ते “देष्णे दातव्ये हविषि निमित्तभूते सति “प्र “ब्रवाम प्रकर्षेण त्वां वदाम ॥

नू ष्टु॒त इं॑द्र॒ नू गृं॑णा॒न इषं॑ जरि॒त्रे न॒द्यो॒३॒ न पीं॑पेः ।

अकां॑रि ते हरिवो॒ ब्रह्म॒ नव्यं॑ धि॒या स्यां॑म र॒थ्यः॑ सदा॒साः ॥ ११

नु । स्तु॒तः । इ॒न्द्र॒ । नु । गृ॒णा॒नः । इषं॑म् । ज॒रि॒त्रे । न॒द्यः॑ । न । पी॒पे॒रिति॑ पीपेः ।

अकां॑रि । ते॒ । ह॒रि॒ऽव॒ः । ब्रह्मं॑ । नव्यं॑म् । धि॒या । स्या॒म॒ । र॒थ्यः॑ । स॒दा॒ऽसाः ॥११

नु । स्तुतः । इन्द्र । नु । गृणानः । इषम् । जरित्रे । नद्यः । न । पीपेरिति पीपेः ।

अकारि । ते । हरिऽवः । ब्रह्म । नव्यम् । धिया । स्याम । रथ्यः । सदाऽसाः ॥११

पूर्वं व्याख्याता ॥ ॥ ४ ॥

# ऋग्वेदः सूक्तं ४.२१



## दे. इन्द्रः। त्रिष्टुप्

आ यात्विन्द्रोऽवस उप न इह स्तुतः सधमादस्तु शूरः ।

वावृधानस्तविषीर्यस्य पूर्वीर्द्यौर्न क्षत्रमभिभूति पुष्यात् ॥१॥

तस्येदिह स्तवथ वृष्ण्यानि तुविद्युम्नस्य तुविराधसो नॄन् ।

यस्य क्रतुर्विदथ्यो न सम्राट् साह्वान्तरुत्रो अभ्यस्ति कृष्टीः ॥२॥

आ यात्विन्द्रो दिव आ पृथिव्या मक्षू समुद्रादुत वा पुरीषात् ।

स्वर्णरादवसे नो मरुत्वान्परावतो वा सदनादृतस्य ॥३॥

स्थूरस्य रायो बृहतो य ईशे तमु ष्टवाम विदथेष्विन्द्रम् ।

यो वायुना जयति गोमतीषु प्र धृष्णुया नयति वस्यो अच्छ ॥४॥

उप यो नमो नमसि स्तभायन्नियर्ति वाचं जनयन्यजध्यै ।

ऋञ्जसानः पुरुवार उक्थैरेन्द्रं कृण्वीत सदनेषु होता ॥५॥

धिषा यदि धिषण्यन्तः सरण्यान्सदन्तो अद्रिमौशिजस्य गोहे ।

आ दुरोषाः पास्त्यस्य होता यो नो महान्संवरणेषु वह्निः ॥६॥

सत्रा यदीं भार्वरस्य वृष्णः सिषक्ति शुष्म स्तुवते भराय ।

गुहा यदीमौशिजस्य गोहे प्र यद्धिये प्रायसे मदाय ॥७॥

वि यद्वरांसि पर्वतस्य वृण्वे पयोभिर्जिन्वे अपां जवांसि ।

विदद्गौरस्य गवयस्य गोहे यदी वाजाय सुध्यो वहन्ति ॥८॥

भद्रा ते हस्ता सुकृतोत पाणी प्रयन्तारा स्तुवते राध इन्द्र ।

का ते निषत्तिः किमु नो ममत्सि किं नोदुदु हर्षसे दातवा उ ॥९॥

एवा वस्व इन्द्रः सत्यः सम्राड्ढन्ता वृत्रं वरिवः पूरवे कः ।

पुरुष्टुत क्रत्वा नः शग्धि रायो भक्षीय तेऽवसो दैव्यस्य ॥१०॥

नू ष्टुत इन्द्र नू गृणान इषं जरित्रे नद्यो न पीपेः ।

अकारि ते हरिवो ब्रह्म नव्यं धिया स्याम रथ्यः सदासाः ॥११॥

## सायणभाष्यम्

‘ आ यात्विन्द्रः' इत्येकादशर्चमेकादशं सूक्तं वामदेवस्यार्षं त्रैष्टुभमैन्द्रम् । ‘आ यातु ' इत्यनुक्रान्तम् । पृष्ठ्याभिप्लवषडहयोः प्रथमेऽहन्येतन्निविद्धानीयम् । सूत्रितं च- आ यात्विन्द्रोऽवस इति मरुत्वतीयम्' ( आश्व. श्रौ. ७.५.१८ ) इति ।।

आ या॒त्विंद्रोऽवं॑स॒ उपं॑ न इ॒ह स्तु॒तः सं॑ध॒मादं॑स्तु॒ शूरः॑ ।

वा॒वृ॒धा॒नस्तविं॑षी॒र्यस्यं पू॒र्वीर्द्यौर्न क्ष॒त्रम॒भिभू॑ति॒ पुष्यां॑त् ॥१

आ । या॒तु॒ । इन्द्रः॑ । अव॑से । उप॑ । नः॒ । इ॒ह । स्तु॒तः ।
स॒ध॒ऽमात् । अ॒स्तु॒ । शूरः॑ ।

व॒वृ॒धा॒नः । तवि॑षीः । यस्य॑ । पू॒र्वीः । द्यौः । न । क्ष॒त्रम् ।
अ॒भिऽभू॑ति । पुष्या॑त् ॥१

आ । यातु । इन्द्रः । अवसे । उप । नः । इह । स्तुतः ।
सधऽमात् । अस्तु । शूरः ।

ववृधानः । तविषीः । यस्य । पूर्वीः । द्यौः । न । क्षत्रम् ।
अभिऽभूति । पुष्यात् ॥१

सः “इन्द्रः “नः अस्माकम् “अवसे रक्षणाय "उप “आ “यातु उपागच्छतु । य इन्द्रः “इह अस्मिन् यज्ञे “स्तुतः । “शूरः विक्रान्तः “ववृधानः प्रवृद्धोऽयमिन्द्रः “सधमादस्तु अस्माभिः सह माद्यन् भवतु । “यस्य इन्द्रस्य “तविषीः तविष्यो बलानि “पूर्वीः पूर्व्यो बहूनि । सन्तीति शेषः ।

यश्चेन्द्रः “द्यौर्न द्योतमानः सूर्य इव “अभिभूति परकीयं बलमभिभावुकं “क्षत्रं स्वकीयं बलं तेजो वा “पुष्यात् पुष्यतु । स इन्द्र उपायात्विति पूर्वेण संबन्धः ॥

तस्येदि॒ह स्त॑वथ॒ वृष्ण्या॑नि तुविद्यु॒म्नस्य॑ तुवि॒राध॑सो॒ नॄन् ।

यस्य॒ क्रतु॑र्विद॒थ्यो॒३॒ न स॒म्राट् सा॒ह्वाँ तरु॑त्रो अ॒भ्यस्ति॑ कृ॒ष्टीः ॥२

तस्य॑ । इत् । इ॒ह । स्त॒व॒थ॒ । वृष्ण्या॑नि । तु॒वि॒ऽद्यु॒म्नस्य॑ । तु॒वि॒ऽराध॑सः । नॄन् ।

यस्य॑ । क्रतुः॑ । वि॒द॒थ्यः॑ । न । स॒म्ऽराट् । स॒ह्वान् । तरु॑त्रः । अ॒भि । अस्ति॑ । कृ॒ष्टीः ॥२

तस्य । इत् । इह । स्तवथ । वृष्ण्यानि । तुविऽद्युम्नस्य । तुविऽराधसः । नॄन् ।

यस्य । क्रतुः । विदथ्यः । न । सम्ऽराट् । सह्वान् । तरुत्रः । अभि । अस्ति । कृष्टीः ॥२

“तुविद्युम्नस्य बहुकीर्तेः "तुविराधसः बहुधनस्य “तस्येत् तस्येन्द्रस्यैव “वृष्ण्यानि बलभूतान् “नॄन् नेतॄन् मरुतो हे स्तोतारो यूयम् “इह अस्मिन् यज्ञे "स्तवथ स्तुत । "साह्वान् शत्रूनभिभावुकः “तरुत्रः अस्मानापद्भ्यस्तारकः “यस्य इन्द्रस्य “क्रतुः कर्म "कृष्टीः शत्रुसंबन्धिनीः प्रजाः “अभ्यस्ति अभिभवति । तत्र दृष्टान्तः । “विदथ्यो "न “सम्राट् । विदथार्हः' यज्ञार्हः सम्राट् सकललोकानाम् अधिपतिरिव तद्वत् । तस्य वृष्ण्यानि इति पूर्वेण संबन्धः ।।

आ या॒त्विंद्रो॑ दि॒व आ पृ॑थि॒व्या म॒क्षू स॑मु॒द्रादु॒त वा॒ पुरी॑षात् ।

स्वंर्णरा॒दवंसे नो म॒रुत्वांन्परा॒वतों वा॒ सदंनादृ॒तस्यं ॥३

आ । या॒तु॒ । इन्द्रः॑ । दि॒वः । आ । पृ॒थि॒व्याः । म॒क्षु । स॒मु॒द्रात् । उ॒त । वा॒ । पुरींषात् ।

स्वः॑ऽनरात् । अवंसे । न॒ः । म॒रुत्वा॑न् । प॒रा॒ऽवतः॑ । वा॒ । सदंनात् । ऋ॒तस्यं ॥३

आ । यातु । इन्द्रः । दिवः । आ । पृथिव्याः । मक्षु । समुद्रात् । उत । वा । पुरीषात् ।

स्वःऽनरात् । अवसे । नः । मरुत्वान् । पराऽवतः । वा । सदनात् । ऋतस्य ॥३

“मरुत्वान् मरुद्भिः सहितः “इन्द्रः “नः अस्माकम् “अवसे रक्षणाय “दिवः स्वर्गलोकात् “आ “यातु आगच्छतु । “पृथिव्याः भूलोकाच्च “मक्षु शीघ्रम् “आ यातु । “उत “वा अथवा “समुद्रात् अन्तरिक्षलोकाच्चायातु । समुद्र

इत्यन्तरिक्षनाम ‘ सगरः समुद्रः अध्वरम् ' ( नि. १. ३. १५ ) इति तन्नामसु पाठात् । अथवा “पुरीषात् उदकादायातु । पुरीषमित्युदकनाम ‘ मधु पुरीषं पिप्पलम् ' ( नि. १. १२. १२ ) इति तन्नामसु पाठात् । “स्वर्णरात् स्वरादित्यो नरो नेता यस्य तस्माल्लोकाद्वा आयातु । “परावतो “वा दूराद्वा आयातु । “ऋतस्य उदकस्य “सदनात् स्थानात् मेघलोकाद्वा आयातु ॥

स्थू॒रस्य॑ रा॒यो बृ॑ह॒तो य ईशे॒ तमु॑ ष्टवाम वि॒दथे॒ष्विंद्रं॑ ।

यो वा॒युना॒ जय॑ति॒ गोम॑तीषु॒ प्र धृ॑ष्णु॒या नय॑ति॒ वस्यो॒ अच्छ॑ ॥४

स्थू॒रस्य॑ । रा॒यः । बृ॒ह॒तः । यः । ईशे॑ । तम् । ऊं॒ इति॑ । स्त॒वा॒म॒ । वि॒दथे॑षु । इन्द्र॑म् ।

यः । वा॒युना॑ । जयं॑ति । गोऽमं॑तीषु । प्र । धृ॒ष्णु॒ऽया । नयं॑ति । वस्यः॑ । अच्छं ॥४

स्थूरस्य । रायः । बृहतः । यः । ईशे । तम् । ऊं इति । स्तवाम । विदथेषु । इन्द्रम् ।

यः । वायुना । जयति । गोऽमतीषु । प्र । धृष्णुऽया । नयति । वस्यः । अच्छ ॥४

"यः इन्द्रः “स्थूरस्य स्थूलस्य "बृहतः महतः “रायः धनस्य “ईशे ईष्टे “विदथेषु यज्ञेषु । विदथ इति यज्ञनामैतत् । “तम् इन्द्रम् "उ' तमिन्द्रमेव वयं स्तोतारः “स्तवाम । “यः इन्द्रः “वायुना प्राणरूपेण बलेन “गोमतीषु सेनासु “जयति शत्रून् विजयते । “धृष्णुया धृष्णुः प्रगल्भो य इन्द्रः स्तोतॄन् "वस्यः वसीयः श्रेष्ठं पश्वादिधनम् "अच्छ अभि “प्र “नयति प्रापयति । तमेवेन्द्रं स्तवामेति पूर्वेण संबन्धः ॥

उप॒ यो नमो॒ नमं॑सि स्तभा॒यन्नियं॑र्ति॒ वाचं॑ ज॒नय॒न्यजं॑ध्यै ।

ऋं॒ज॒सा॒नः पुं॑रु॒वारं॑ उ॒क्थैरेंद्रं॑ कृण्वीत॒ सदं॑नेषु॒ होतां॑ ॥५

उपं॑ । यः । नमः॑ । नमं॑सि । स्त॒भा॒यन् । इयं॑र्ति । वाचं॑म् ।
ज॒नयं॑न् । यजं॑ध्यै ।

ऋ॒ञ्ज॒सा॒नः । पु॒रु॒ऽवारः॑ । उ॒क्थैः । आ । इन्द्रं॑म् । कृ॒ण्वी॒त॒
। सदं॑नेषु । होतां॑ ॥५

उप । यः । नमः । नमसि । स्तभायन् । इयर्ति । वाचम् ।
जनयन् । यजध्यै ।

ऋञ्जसानः । पुरुऽवारः । उक्थैः । आ । इन्द्रम् । कृण्वीत
। सदनेषु । होता ॥५

“उप "स्तभायन् लोकानुपस्तम्भयन् “यजध्यै यष्टुं “वाचं गर्जितलक्षणां वाचं “जनयन् प्रजनयन् “ऋञ्जसानः प्रसाध्यमानः । ‘ ऋञ्जतिः प्रसाधनकर्मा' इति यास्कः । “उक्थैः शस्त्रलक्षणैः स्तोत्रैः “पुरुवारः बहुभिः संभजनीयः “यः इन्द्रः "नमसि । नम इत्यन्ननामैतत् । यजमानैर्दत्ते हविषि “नमः यजमानेभ्यो यज्ञादिसाधनमन्नम् “इयर्ति प्रेरयति । इन्द्रो हविषा तृप्तः सन् वृष्टिद्वारा अन्नं प्रयच्छति तेन चान्नेन पुनर्यज्ञः प्रजायत इत्यर्थः । अस्मदीयः "होता “सदनेषु यज्ञगृहेषु तम् “इन्द्रम् “आ “कृण्वीत अभिमुखीकरोतु ॥ ॥ ५ ॥

धि॒षा यदिं॑ धिष॒ण्यं॑तः॒ सर॒ण्यान्त्सदं॑तो॒ अद्रिं॑मौशि॒जस्य॒ गोहें॑ ।

आ दु॒रोषाः॑ पा॒स्त्यस्य॒ होता॒ यो नो॑ म॒हान्त्स॒ंवर॑णेषु॒ वह्निः॑ ॥६

धि॒षा । यदि॑ । धि॒ष॒ण्यन्तः॑ । स॒र॒ण्यान् । सद॑न्तः । अद्रि॑म् । औ॒शि॒जस्य॑ । गोहे॑ ।

आ । दु॒रोषाः॑ । पा॒स्त्यस्य॑ । होता॑ । यः । न॒ः । म॒हान् । स॒म्ऽवर॑णेषु । वह्निः॑ ॥६

धिषा । यदि । धिषण्यन्तः । सरण्यान् । सदन्तः । अद्रिम् । औशिजस्य । गोहे ।

आ । दुरोषाः । पास्त्यस्य । होता । यः । नः । महान् । सम्ऽवरणेषु । वह्निः ॥६

“धिषण्यन्तः धिषणामिन्द्रविषयां स्तुतिमिच्छन्तः “औशिजस्य । उशिजः कामयमाना ऋत्विजः। तेषां संबन्ध्यौशिजो यजमानः । तस्य “गोहे गृहे “सदन्तः

निषीदन्तो जनाः “अद्रिम् । आदृणाति शत्रून् इत्यद्रिरिन्द्रः । तमिन्द्रं “धिषा स्तुत्या "यदि यदा “सरण्यान् उपागच्छेयुः तदा स इन्द्रः “आ यातु । "नः अस्माकं संवरणेषु शत्रुसंबन्धिषु निरोधेषु “वह्निः वोढा पास्त्यस्य पस्त्ये गृहे वसता यजमानेन "होता आह्वाता “दुरोषाः दुस्तरक्रोधः “यः इन्द्रः “महान् प्रभूतो भवति । स आयात्विति ॥

स॒त्रा यदीं॑ भार्व॒रस्य॒ वृष्ण॒ः सिषं॑क्ति॒ शुष्मः॑ स्तुव॒ते भरा॑य ।

गुहा॒ यदीमौशि॒जस्य॒ गोहे॒ प्र यद्धि॒ये प्राय॑से॒ मदा॑य ॥७

स॒त्रा । यत् । ई॒म् । भा॒र्व॒रस्य॑ । वृष्णः॑ । सिसं॑क्ति । शुष्मः॑ । स्तु॒व॒ते । भरा॑य ।

गुहा॑ । यत् । ई॒म् । औ॒शि॒जस्य॑ । गोहे॑ । प्र । यत् । धि॒ये । प्र । अयं॑से । मदा॑य ॥७

सत्रा । यत् । ईम् । भार्वरस्य । वृष्णः । सिसक्ति । शुष्मः । स्तुवते । भराय ।

गुहा । यत् । ईम् । औशिजस्य । गोहे । प्र । यत् । धिये । प्र । अयसे । मदाय ॥७

“भार्वरस्य । भर्वरो जगद्भर्ता प्रजापतिः । तस्य पुत्रो भार्वरः । तस्य “वृष्णः कामानां वर्षितुरिन्द्रस्य संबन्धी "ईम् एषः “शुष्मः बलं “स्तुवते स्तोत्रं कुर्वन्तं यजमानं “सिषक्ति सेवते इति “यत् तत् "सत्रा सत्यमेव । "ईम् एतद्बलम् “औशिजस्य यजमानस्य “भराय भर्तुं "गुहा गुहायां गुहारूपे हृदये "प्र भवतीति “यत् तत्सत्यम् । यजमानस्य “गोहे गृहे “धिये कर्मणे “प्र भवतीति “यत् तत्सत्यम् । “अयसे गमनाय कामानां प्राप्तये “मदाय हर्षाय तत्र यद्बलं प्रभवति तत्सत्यम् । इन्द्रस्य बलं यजमानं सर्वदा पालयतीत्यर्थः ॥

वि यद्वरां॑सि॒ पर्व॑तस्य वृ॒ण्वे पयो॑भिर्जि॒न्वे अ॒पां जवां॑सि ।

वि॒दद्गौ॒रस्य॑ गव॒यस्य॒ गोहे॒ यदी॒ वाजा॑य सु॒ध्यो॒३॒॑ वह॑न्ति ॥८

वि । यत् । वरां॑सि । पर्व॑तस्य । वृ॒ण्वे । पय॑ःऽभिः । जि॒न्वे । अ॒पाम् । जवां॑सि ।

वि॒दत् । गौ॒रस्य॑ । ग॒व॒यस्य॑ । गोहे॑ । यदि॑ । वाजा॑य । सु॒ऽध्य॑ः । वह॑न्ति ॥८

वि । यत् । वरांसि । पर्वतस्य । वृण्वे । पयःऽभिः । जिन्वे । अपाम् । जवांसि ।

विदत् । गौरस्य । गवयस्य । गोहे । यदि । वाजाय । सुऽध्यः । वहन्ति ॥८

इन्द्रः “पर्वतस्य मेघस्य “वरांसि द्वाराणि “वि “वृण्वे विवृतानि कृतवानिति “यत् । “अपाम् उदकानां “जवांसि वेगान् “पयोभिः जलैः "जिन्वे प्यायययतीति यत् । “यदि यदा “सुध्यः शोभनकर्माणो यजमानाः “वाजाय अन्नाय “वहन्ति इन्द्रं प्राप्नुवन्ति तदा “गोहे गृहे “गौरस्य गौरमृगस्य “गवयस्य गवयमृगस्य च “विदत् तौ द्वौ पशू लभते इति यत् । तत्सर्वं सत्रा इति पूर्वेण संबन्धः ॥

अभ्युदयेष्टौ इन्द्रस्य प्रदातुः ‘भद्रा ते हस्ता' इति याज्या । सूत्रितं च−' दीर्घस्ते अस्त्वङ्कुशो भद्रा ते हस्ता सुकृतोत पाणी ' ( आश्व. श्रौ. ३.१३) इति ॥

भ॒द्रा ते॒ हस्ता॒ सुकृ॑तो॒त पा॒णी प्र॑य॒न्तारा॑ स्तुव॒ते राध॑ इंद्र ।

का ते॒ निष॑त्तिः॒ किमु॒ नो म॑मत्सि॒ किं नोदु॑दु हर्षसे॒ दात॒वा उं ॥९

भ॒द्रा । ते॒ । हस्तां॑ । सु॒ऽकृ॑ता । उ॒त । पा॒णी इति॑ ।
प्र॒ऽय॒न्तारा॑ । स्तु॒व॒ते । राधः॑ । इ॒न्द्र॒ ।

का । ते॒ । निऽस॑त्तिः । किम् । ऊँ॒ इति॑ । नः॒ । म॒म॒त्सि॒ ।
किम् । न । उत्ऽउ॑त् । ऊँ॒ इति॑ । ह॒र्ष॒से॒ । दात॒वै । ऊँ॒ इति॑
॥९

भद्रा । ते । हस्ता । सुऽकृता । उत । पाणी इति ।
प्रऽयन्तारा । स्तुवते । राधः । इन्द्र ।

का । ते । निऽसत्तिः । किम् । ऊं इति । नः । ममत्सि ।
किम् । न । उत्ऽउत् । ऊं इति । हर्षसे । दातवै । ऊं इति
॥९

हे "इन्द्र "ते त्वदीयौ "भद्रा भद्रौ कल्याणौ "हस्ता हस्तौ
"सुकृता सुकृतौ शोभनकर्माणौ भवतः । "उत अपि च
"पाणी त्वदीयौ हस्तौ "स्तुवते स्तोत्रे यजमानाय "राधः धनं

“प्रयन्तारा प्रयन्तारौ प्रदातारौ भवतः । हे इन्द्र “ते त्वदीया “निषत्तिः निषदनं स्थितिः "का । त्वमस्मान् “किमु किमर्थं “नो “ममत्सि न मादयसि । “किम् "उदुदु किमर्थमेव “दातवै अस्माकं धनं दातुं “न “हर्षसे हृष्टो न भवसि ॥

ऐन्द्रस्य वार्त्रघ्नस्य पशोः ' एवा वस्वः' इति हविषो याज्या । सूत्रितं च -' एवा वस्व इन्द्रः सत्यः सम्राड्यद्वाग्वदन्त्यविचेतनानि ' ( आश्व. श्रौ. ३.८) इति ।

ए॒वा वस्व॒ इंद्रः॑ स॒त्यः स॒म्राड्ढंतां वृ॒त्रं वरिंवः पू॒रवें कः ।

पुरुंष्टुत॒ क्रत्वां नः शग्धि रा॒यो भंक्षी॒य तेऽवंसो॒ दैव्यंस्य ॥ १०

ए॒व । वस्वः॑ । इन्द्रः॑ । स॒त्यः । स॒म्ऽराट् । हन्तां । वृ॒त्रम् । वरिंवः । पू॒रवें । कु॒रितिं कः ।

पुरु॑ऽस्तुत । क्रत्वा॑ । न॒ः । श॒ग्धि॒ । रा॒यः । भ॒क्षी॒य । ते॒ ।
अव॑सः । दैव्य॑स्य ॥१०

एव । वस्वः । इन्द्रः । सत्यः । सम्ऽराट् । हन्ता । वृत्रम् ।
वरिवः । पूरवे । करिति कः ।

पुरुऽस्तुत । क्रत्वा । नः । शग्धि । रायः । भक्षीय । ते ।
अवसः । दैव्यस्य ॥१०

“एवा एवमुक्तप्रकारेण स्तूयमानः “सत्यः सत्यवान् “वस्वः धनस्य “सम्राट् ईश्वरः “वृत्रं वृत्रनामानमसुरं “हन्ता हिंसिता “इन्द्रः “पूरवे मनुष्याय यजमानाय “वरिवः धनं "कः करोति । ददातीत्यर्थः । 'क्रत्वा कर्मणा स्तुतिहेतुना हे “पुरुष्टुत बहुभिर्यजमानैः स्तुतेन्द्र त्वं “नः अस्मभ्यं “रायः धनानि “शग्धि देहि ।। “ते त्वया दीयमानस्य “दैव्यस्य देवसंबन्धिनः “अवसः अन्नस्य ।। कर्मणि षष्ठी ॥ अन्नं “भक्षीय अहं भजेय ॥

नू ष्टुत इं॑द्र नू गृ॑णा॒न इषं॑ जरि॒त्रे न॒द्यो॒३॒ न पीं॑पेः ।

अका॑रि ते हरिवो॒ ब्रह्म॒ नव्यं॑ धि॒या स्या॑म र॒थ्यः॑ सदा॒साः ॥
११

नु । स्तुतः । इ॒न्द्र॒ । नु । गृ॒णा॒नः । इषं॑म् । ज॒रि॒त्रे । न॒द्यः॑ ।
न । पी॒पे॒रिति॑ पीपेः ।

अका॑रि । ते॒ । ह॒रि॒ऽव॒ः । ब्रह्म॑ । नव्यं॑म् । धि॒या । स्या॒म॒ ।
र॒थ्यः॑ । स॒दा॒ऽसाः ॥११

नु । स्तुतः । इन्द्र । नु । गृणानः । इषम् । जरित्रे । नद्यः ।
न । पीपेरिति पीपेः ।

अकारि । ते । हरिऽवः । ब्रह्म । नव्यम् । धिया । स्याम ।
रथ्यः । सदाऽसाः ॥११

पूर्वं व्याख्याता ॥

**टिप्पणी**

यथा सायणाचार्येण उल्लिखितं अस्ति, आश्वलायनश्रौतसूत्रे (७.५.१८ ) अस्य सूक्तस्य विनियोगः आभिप्लविकषडहस्य(द्र. अभिप्लवोपरि संदर्भाः) प्रथमे अह्नि मरुत्वतीये शस्त्रे अस्ति। षडहस्य प्रथमेऽह्नि येषां मन्त्राणां विनियोगं करणीयः अस्ति, तेषां लक्षणानां उल्लेखं ऐतरेयब्राह्मणे (४.२९ ) अस्ति - यद्वा एति च प्रेति च तत्प्रथमस्याह्नो रूपं यद्युक्तवद्यद्रथवद्यदाशुमद्यत्पिबवद्यत्प्रथमे पदे देवता निरुच्यते यदयं लोकोऽभ्युदितो यद्राथंतरं

यद्वायत्रं यत्करिष्यदेतानि वै प्रथमस्याह्नो रूपाणि। अस्य कथनानुसारेण येषु मन्त्रेषु एति(आगमनम्) अस्ति, यथा वर्तमानसूक्ते आ यातु इन्द्रो अवसे उप नः इति, तेषां मन्त्राणां विनियोजनं प्रथमेऽह्नि करणीयमस्ति। ओंकारस्य त्र्यक्षराणां मध्ये प्रथमं अक्षरं अ अस्ति यस्य देवता ब्रह्मा अस्ति। अस्य उद्देश्यं भौतिकद्रव्येषु यत्किंचित् ऊनं अस्ति, तस्य पूर्तिः, आदानं अस्ति। प्रथमस्याह्नः भौतिकचित्रं भागवतपुराणस्य प्रथमे स्कन्धे उपलब्धमस्ति, अयं प्रतीयते। प्रथमस्कन्धे परीक्षितः शृङ्गीऋषितः मृत्युरूपं शापं प्राप्नोति। परीक्षितशब्दस्य तात्पर्यं परि - क्षितः, परितः क्षिप्तानि वृत्तयः अस्ति। तेषां वृत्तीनां संवरणं प्रथमस्याह्नः कार्यमस्ति। तदोपरि परीक्षितः शुकदेवतः भागवतपुराणस्य श्रवणं करोति। अयं आ-यातु अस्ति। शुक्लयजुर्वेदे (२०.४७ ) आ या्त्विन्द्रो अवसे उप नः इति मन्त्रस्य

विनियोगं सौत्रामणीयागे अस्ति। पारस्करगृह्यसूत्रे (२.१६ ) अस्य मन्त्रस्य विनियोगः आश्विन्पौर्णामास्यां दधिमधुघृतमिश्रणस्य अवेक्षणे अस्ति -- आश्वयुज्यां पृषातकाः १। पायसमैन्द्रं श्रपयित्वा दधिमधुघृतमिश्रं जुहोतीन्द्रायेन्द्राण्या अश्विभ्यामाश्वयुज्यै पौर्णमास्यै शरदे चेति २। प्राशनान्ते दधिपृषातकमञ्जलिना जुहोति ऊनंमे पूर्यतां पूर्णंमे मा व्यगात्स्वाहेति ३। दधिमधुघृतमिश्रममात्या अवेक्षन्त आयात्विन्द्र इत्यनुवाकेन ४। मातृभिर्वत्सान्संसृज्य तां रात्रिमाग्रहायणीं च ५। ततो ब्राह्मणभोजनम् ६ । आश्विन् पौर्णमास्याः यानि कृत्यानि सन्ति, ते लोके इदानीमपि प्रचलिताः सन्ति - सुरायाः सन्धानम्(घेवरमिष्टान्नरूपेण), रक्षासूत्रबन्धनम्, नवीनयज्ञोपवीतधारणम्, कोकिलव्रतस्य(कौकिलसौत्रामण्याः) उद्यापनम्

इत्यादि। अतएव, पारस्करगृह्यसूत्रस्य विनियोगः प्रस्तुतसूक्तस्य भौतिकचित्रस्य सर्जने अधिकं उपयोगी भवितुं शक्यते। अत्र पृषदाज्यस्य अर्थं शंकायुक्तस्य श्रद्धया कर्तुं शक्यमस्ति। दधि - मधु - घृत एते त्रयः वैदिकवाङ्मये अन्नाद्यानि सन्ति - अन्नेषु श्रेष्ठतमाः। यथा श्रद्धायाः रूपं भविष्यति, तदनुसारेणैव अन्नस्य रूपं भविष्यति।

अभिप्लवषडहस्य द्वितीयमहः (ऋ. ३.३२)

अभिप्लवषडहस्य तृतीयमहः (ऋ. ५.२९)

# ऋग्वेदः सूक्तं ४.२२

← सूक्तं ४.२१

ऋग्वेदः - मण्डल ४

सूक्तं ४.२२

वामदेवो गौतमः

सूक्तं ४.२३ →

## दे. इन्द्रः। त्रिष्टुप्

यन्न इन्द्रो जुजुषे यच्च वष्टि तन्नो महान्करति शुष्म्या चित् ।

ब्रह्म स्तोमं मघवा सोममुक्था यो अश्मानं शवसा बिभ्रदेति ॥१॥

वृषा वृषन्धिं चतुरश्रिमस्यन्नुग्रो बाहुभ्यां नृतमः शचीवान् ।

श्रिये परुष्णीमुषमाण ऊर्णां यस्याः पर्वाणि सख्याय विव्ये ॥२॥

यो देवो देवतमो जायमानो महो वाजेभिर्महद्भिश्च शुष्मैः ।

दधानो वज्रं बाह्वोरुशन्तं द्याममेन रेजयत्प्र भूम ॥३॥

विश्वा रोधांसि प्रवतश्च पूर्वीर्द्यौरृष्वाज्जनिमन्नेजत क्षाः ।

आ मातरा भरति शुष्म्या गोर्नृवत्परिज्मन्नोनुवन्त वाताः ॥४॥

ता तू त इन्द्र महतो महानि विश्वेष्वित्सवनेषु प्रवाच्या ।

यच्छूर धृष्णो धृषता दधृष्वानहिं वज्रेण शवसाविवेषीः ॥५॥

ता तू ते सत्या तुविनृम्ण विश्वा प्र धेनवः सिस्रते वृष्ण ऊध्नः ।

अधा ह त्वद्वृषमणो भियानाः प्र सिन्धवो जवसा चक्रमन्त ॥६॥

अत्राह ते हरिवस्ता उ देवीरवोभिरिन्द्र स्तवन्त स्वसारः ।

यत्सीमनु प्र मुचो बद्बधाना दीर्घामनु प्रसितिं स्यन्दयध्यै ॥७॥

पिपीळे अंशुर्मद्यो न सिन्धुरा त्वा शमी शशमानस्य शक्तिः ।

अस्मद्र्यक्छुशुचानस्य यम्या आशुर्न रश्मिं तुव्योजसं गोः ॥८॥

अस्मे वर्षिष्ठा कृणुहि ज्येष्ठा नृम्णानि सत्रा सहुरे सहांसि ।

अस्मभ्यं वृत्रा सुहनानि रन्धि जहि वधर्वनुषो मर्त्यस्य ॥९॥

अस्माकमित्सु शृणुहि त्वमिन्द्रास्मभ्यं चित्राँ उप माहि वाजान् ।

अस्मभ्यं विश्वा इषणः पुरंधीरस्माकं सु मघवन्बोधि गोदाः ॥१०॥

नू ष्टुत इन्द्र नू गृणान इषं जरित्रे नद्यो न पीपेः ।

अकारि ते हरिवो ब्रह्म नव्यं धिया स्याम रथ्यः सदासाः ॥११॥

- ऋग्वेदः

## सायणभाष्यम्

तत्र तृतीयानुवाके एकादश सूक्तानि । तत्र ‘ यन्न इन्द्रः' इत्येकादशर्चं प्रथमं सूक्तं वामदेवस्यार्षं त्रैष्टुभमैन्द्रम् । ‘यन्नः' इत्यनुक्रमणिका । पृष्ठ्याभिप्लवषडहयोः प्रथमेऽहनि माध्यंदिनसवने मैत्रावरुणशस्त्रे द्वितीयमिदं संपातसूक्तम् । सूत्रितं च-' एवा त्वामिन्द्र यन्न इन्द्रः' ( आश्व. श्रौ. ७. ५) इति ॥

यन्न॒ इंद्रों जुजु॒षे यच्च॒ वष्टि॒ तन्नों म॒हान्कंरति शु॒ष्म्या चिंत् ।

ब्रह्म॒ स्तोमं म॒घवा॒ सोमंमु॒क्था यो अश्मांन॒ं शवंसा॒
बिभ्र॒देतिं ॥१

यत् । न॒ः । इन्द्रः॑ । जु॒जु॒षे । यत् । च॒ । वष्टिं । तत् । न॒ः ।
म॒हान् । क॒र॒ति॒ । शु॒ष्मी । आ । चि॒त् ।

ब्रह्मं । स्तोमंम् । म॒घऽवां । सोमंम् । उ॒क्था । यः ।
अश्मांनम् । शवंसा । बिभ्रंत् । एतिं ॥१

यत् । नः । इन्द्रः । जुजुषे । यत् । च । वष्टि । तत् । नः ।
महान् । करति । शुष्मी । आ । चित् ।

ब्रह्म । स्तोमम् । मघऽवा । सोमम् । उक्था । यः ।
अश्मानम् । शवसा । बिभ्रत् । एति ॥१

“इन्द्रः “नः अस्मदीयं “यत् हविर्लक्षणान्नादिकं “जुजुषे सेवते “यच्च हविरादिकं च “वष्टि कामयते “महान् प्रभूतः “शुष्मी बलवानिन्द्रः । चिदिति चार्थे । “ब्रह्म “चित् हविर्लक्षणपुरोडाशादिकमन्नं च “स्तोमं स्तोत्रसमूहं च “सोमम् अभिषुतं सोमं च "उक्था उक्थानि शस्त्राणि चेत्येवंभूतं “तत् ब्रह्मादिचतुष्टयम् “आ “करति आकरोतु स्वीकरोतु । “मघवा धनवान् । अत्र अश्मशब्दः वज्रवाची । “अश्मानं वज्रं “बिभ्रत् धारयन् “शवसा बलेन युक्तः “यः इन्द्रः “एति आगच्छति । स इन्द्रः स्वीकरोत्विति पूर्वेण संबन्धः ॥६ ।।

वृषा॒ वृष॑न्धिं॒ चतु॑रश्रि॒मस्य॑न्नु॒ग्रो बा॒हुभ्यां॒ नृत॑मः॒ शची॑वान् ।

श्रि॒ये परु॑ष्णीमु॒षमा॑ण॒ ऊर्णां॒ यस्याः॒ पर्वा॑णि स॒ख्याय॑ वि॒व्ये ॥२

वृषा॑ । वृष॑न्धिम् । चतुः॒ऽअश्रिम् । अस्य॑न् । उ॒ग्रः ।
बा॒हुऽभ्यां॑म् । नृऽत॑मः । शची॑ऽवान् ।

श्रि॒ये । परु॑ष्णीम् । उ॒षमा॑णः । ऊर्णा॑म् । यस्याः॑ । पर्वा॑णि
। स॒ख्याय॑ । वि॒व्ये ॥२

वृषा । वृषन्धिम् । चतुःऽअश्रिम् । अस्यन् । उग्रः ।
बाहुऽभ्याम् । नृऽतमः । शचीऽवान् ।

श्रिये । परुष्णीम् । उषमाणः । ऊर्णाम् । यस्याः । पर्वाणि
। सख्याय । विव्ये ॥२

“वृषा कामानां वर्षिता “वृषन्धिं मेघभेदनद्वारेण वर्षं
कुर्वन्तं “चतुरश्रिं चतसृभिः अश्रिभिः धाराभिरुपेतं वज्रं
“बाहुभ्यां हस्ताभ्याम् “अस्यन् शत्रुषु प्रक्षिपन् “उग्रः
उद्गूर्णबलः “नृतमः नेतृतमः “शचीवान कर्मवानिन्द्रः
“ऊर्णाम् आच्छादिकां परुष्णीं पर्ववतीं नदीं “श्रिये

आश्रयणार्थम् “उषमाणः सेवमान: भवति । “यस्याः नद्याः “पर्वाणि भिन्नान् देशान् “सख्याय सखिकर्मणे "विव्ये संवृतवान्॥

यो दे॒वो दे॒वत॑मो॒ जाय॑मानो म॒हो वाजे॑भिर्म॒हद्भि॑श्च॒ शुष्मैः॑ ।

दधा॑नो॒ वज्रं॑ बा॒ह्वोरु॒शन्तं॒ द्याममे॑न रेजय॒त्प्र भूम॑ ॥३

यः । दे॒वः । दे॒वऽत॑मः । जाय॑मानः । म॒हः । वाजे॑भिः । म॒हत्ऽभिः॑ । च॒ । शुष्मैः॑ ।

दधा॑नः । वज्र॑म् । बा॒ह्वोः । उ॒शन्त॑म् । द्याम् । अमे॑न । रे॒ज॒य॒त् । प्र । भूम॑ ॥३

यः । देवः । देवऽतमः । जायमानः । महः । वाजेभिः । महत्ऽभिः । च । शुष्मैः ।

दधानः । वज्रम् । बाह्वोः । उशन्तम् । द्याम् । अमेन ।
रेजयत् । प्र । भूम ॥३

“देवः दीप्यमानः “देवतमः दातृतमः "जायमानः उत्पद्यमानः “यः इन्द्रः “महः महद्भिः “वाजेभिः अन्नैः “महद्भिः “शुष्मैः बलैः “च । युक्तोऽभवदिति शेषः । स इन्द्रः “बाह्वोः हस्तयोः “उशन्तं कामयमानं "वज्रं “दधानः धारयन् "अमेन बलेन “द्यां द्युलोकं च “भूम भूलोकं च “प्र “रेजयत् प्रकम्पयति स्म ।।

विश्वा॒ रोधांसि प्र॒वतंश्च पू॒र्वीर्द्यौर्ऋ॒ष्वाज्जनिंमन्रेजत॒ क्षाः ।

आ मा॒तरा॒ भरंति शु॒ष्म्या गोर्नृ॒वत्परिंज्मन्नोनुवंत॒ वाताः॑ ॥४

विश्वां । रोधांसि । प्र॒ऽवतः॑ । च॒ । पू॒र्वीः । द्यौः । ऋ॒ष्वात् ।
जनिंमन् । रे॒ज॒त॒ । क्षाः ।

आ । मा॒तरां । भरंति । शु॒ष्मी । आ । गोः । नृ॒ऽवत् ।
परिंऽज्मन् । नो॒नु॒व॒न्त॒ । वाताः ॥४

विश्वा । रोधांसि । प्रऽवतः । च । पूर्वीः । द्यौः । ऋष्वात् ।
जनिमन् । रेजत । क्षाः ।

आ । मातरा । भरति । शुष्मी । आ । गोः । नृऽवत् ।
परिऽज्मन् । नोनुवन्त । वाताः ॥४

“विश्वा विश्वानि “रोधांसि । रोधःशब्देन उन्नतप्रदेशः उच्यते । उन्नतप्रदेशाः पर्वताश्च पूर्वीः पूर्व्यो बहूनि “प्रवतः प्रवणानि । समुद्राश्चेत्यर्थः। “द्यौः द्युलोकश्च “क्षाः पृथिवी च "जनिमन् इन्द्रस्य जन्मनि सति “ऋष्वात् महतोऽस्मादिन्द्रात् “रेजत अरेजन्त अकम्पन्त । किंच शुष्मी बलवान् इन्द्रः “गोः गन्तुः सूर्यस्य “मातरा मातरौ मातापितृभूतौ द्यावापृथिव्यौ च । “आ इति चार्थे । “आ “भरति आ समन्तात् बिभर्ति । “नृवत् मनुष्या इव “वाताः

इन्द्रेण प्रेरिता वायवश्च परिज्मन् अन्तरिक्षे “नोनुवन्त शब्दायन्ते ।

ता तू त॑ इ॑द्र मह॒तो म॒हानि॒ विश्वे॒ष्वित्सव॑नेषु प्र॒वाच्या॑ ।

यच्छू॑र धृष्णो धृष॒ता द॑धृ॒ष्वानहि॒॑ वज्रे॑ण॒ शव॒सावि॑वेषीः ॥
५

ता । तु । ते॒ । इ॒न्द्र॒ । म॒ह॒तः । म॒हानि॑ । विश्वे॑षु । इत् । सव॑नेषु । प्र॒ऽवाच्या॑ ।

यत् । शू॒र॒ । धृ॒ष्णो॒ इति॑ । धृ॒ष॒ता । द॒धृ॒ष्वान् । अहि॑म् । वज्रे॑ण । शव॑सा । अवि॑वेषीः ॥५

ता । तु । ते । इन्द्र । महतः । महानि । विश्वेषु । इत् । सवनेषु । प्रऽवाच्या ।

यत् । शूर । धृष्णो इति । धृषता । दधृष्वान् । अहिम् । वज्रेण । शवसा । अविवेषीः ॥५

हे "इन्द्र “महतः प्रभूतस्य ते त्वदीयानि “ता तानि कर्माणि "तु क्षिप्रं "महानि महान्ति भवन्ति । “विश्वेष्वित् सर्वेष्वेव “सवनेषु प्रातः सवनादिकर्मसु त्वदीयानि कर्माणि “प्रवाच्या प्रवाच्यानि स्तोतृभिः प्रकर्षेण वक्तुं योग्यानि स्तुत्यानि इति “यत् । हे “धृष्णोः प्रगल्भ हे “शूर विक्रान्तेन्द्र “दधृष्वान् पालकत्वेन लोकान् धारयन् “शवसा बलेन युक्तस्त्वं “धृषता धर्षकेण “वज्रेण “अहिं वृत्रमसुरम् “अविवेषीः अवधीरिति यत् । एतदादीनि कर्माणि महान्तीति पूर्वेण संबन्धः । अत्र अविवेषीरिति वधकर्मा ॥ ॥ ७ ॥

ता तू तें स॒त्या तु॑विनृम्ण॒ विश्वा॒ प्र धे॒नवः॑ सिस्रते॒ वृष्ण॒

ऊध्नः॑ ।

अधा॑ ह॒ त्वद्वृ॑षमणो भिया॒नाः प्र सिंधं॑वो॒ जवं॑सा चक्रमंत ॥६

ता । तु । ते॒ । स॒त्या । तु॒वि॒ऽनृ॒म्ण॒ । विश्वा॑ । प्र । धे॒नवः॑ । सि॒स्र॒ते॒ । वृष्णः॑ । ऊध्नः॑ ।

अध॑ । ह॒ । त्वत् । वृ॒ष॒ऽम॒न॒ः । भि॒या॒नाः । प्र । सिन्ध॑वः । जवं॑सा । च॒क्र॒म॒न्त॒ ॥६

ता । तु । ते । सत्या । तुविऽनृम्ण । विश्वा । प्र । धेनवः । सिस्रते । वृष्णः । ऊध्नः ।

अध । ह । त्वत् । वृषऽमनः । भियानाः । प्र । सिन्धवः । जवसा । चक्रमन्त ॥६

हे "तुविनृम्ण अधिकबल इन्द्र “ते त्वदीयानि “विश्वा विश्वानि “ता तानि कर्माणि “तु क्षिप्रं “सत्या सत्यानि भवन्ति । हे इन्द्र “वृष्णः कामानां वर्षितुस्त्वत्तो भयात् “धेनवः गावः “ऊध्नः स्वकीयादापीनात् “प्र “सिस्रते प्रकर्षेण क्षीरं क्षरन्ति । “अध अपि च हे वृषमनः कामानां वर्षणपरमनस्केन्द्र “सिन्धवः नद्यः “त्वत् त्वत्तः “भियानाः बिभ्यत्यः सत्यः "जवसा वेगेन “प्र “चक्रमन्त “ह प्रकर्षेण गच्छन्ति खलु ॥

अत्राह॑ ते हरिव॒स्ता उ॑ दे॒वीरवो॑भिरिंद्र स्तवंत॒ स्वसा॑रः ।

यत्सी॒मनु॒ प्र मु॒चो ब॑द्बधा॒ना दी॒र्घामनु॒ प्रसि॑तिं स्यंद॒यध्यै॑ ॥७

अत्र॑ । अह॑ । ते॒ । ह॒रि॒ऽव॒ः । ताः । उ॒ं इति॑ । दे॒वीः ।
अवः॑ऽभिः । इ॒न्द्र॒ । स्त॒व॒न्त॒ । स्वसा॑रः ।

यत् । सी॒म् । अनुं । प्र । मु॒चः । ब॒द्ब॒धा॒नाः । दी॒र्घाम् । अनुं । प्रऽसिंतिम् । स्य॒न्द॒यध्यैं ॥७

अत्र । अह । ते । हरिऽवः । ताः । ऊं इति । देवीः । अवःऽभिः । इन्द्र । स्तवन्त । स्वसारः ।

यत् । सीम् । अनु । प्र । मुचः । बद्बधानाः । दीर्घाम् । अनु । प्रऽसितिम् । स्यन्दयध्यै ॥७

हे "इन्द्र त्वं "यत् यदा "बद्बधानाः वृत्रेण बध्यमानाः "सीमनु एताः नदीरुद्दिश्य "दीर्घाम् अत्यधिकां "प्रसितिं बन्धनम् "अनु स्यन्दयध्यै यथाकामं स्यन्दितुं "प्र "मुचः प्रकर्षेणामोचयः । हे "हरिवः हरिवन् इन्द्र "अत्राह अत्रैव मोचनवेलायां "ता "उ ताः प्रसिद्धा एव "देवीः देव्यो द्योतमानाः "स्वसारः नद्यः । अत्र स्वसृशब्दो नदीवाची । "अवोभिः त्वत्कृतै रक्षणैः "ते त्वां "स्तवन्त स्तावयन्ति । नदीपूरणादिभिः कर्मभिः जना इन्द्रं स्तुवन्तीत्यर्थः ॥

पि॒पी॒ळे अं॒शुर्मद्यो॒ न सिंधु॒रा त्वा॒ शमीं शशमा॒नस्यं श॒क्तिः
।

अ॒स्म॒द्र्यं॑क्शुशुचा॒नस्यं यम्या आ॒शुर्न र॒श्मिं तु॒व्योजं॑सं गोः
॥८

पि॒पी॒ळे । अं॒शुः । मद्यः॑ । न । सिन्धुः॑ । आ । त्वा॒ । शमीं ।
श॒श॒मा॒नस्यं । श॒क्तिः ।

अ॒स्म॒द्र्यं॑क् । शु॒शु॒चा॒नस्यं । य॒म्या॒ः । आ॒शुः । न । र॒श्मिम्
। तु॒वि॒ऽओजं॑सम् । गोः ॥८

पिपीळे । अंशुः । मद्यः । न । सिन्धुः । आ । त्वा । शमी ।
शशमानस्य । शक्तिः ।

अस्मद्र्यक् । शुशुचानस्य । यम्याः । आशुः । न । रश्मिम्
। तुविऽओजसम् । गोः ॥८

हे इन्द्र “मद्यः मादयिता "अंशुः सोमः "पिपीळे अपीड्यत। अभ्यषूयत इत्यर्थः। नेति संप्रत्यर्थे । “न इदानी “सिन्धुः स्यन्दमानः सोमः “त्वा त्वाम् “आ “यम्याः आयच्छतु । “शुशुचानस्य दीप्यमानस्य “शशमानस्य स्तुवतः संबन्धी “अस्मद्र्यक् अस्मदभिमुखं “शमी शमनं “शक्तिः स्तुतिकर्म च आयच्छतु । तत्र दृष्टान्तः । “आशुः शीघ्रगामी यन्ता “गोः गन्तुरश्वस्य तुव्योजसं बहुबलम् । दृढमित्यर्थः। “रश्मिं “न अश्वबन्धनरज्जुमिव तद्वत् ॥

अ॒स्मे वर्षि॑ष्ठा कृणुहि॒ ज्येष्ठा॑ नृ॒म्णानि॑ स॒त्रा सं॑हुरे॒ सहां॑सि ।

अ॒स्मभ्यं॑ वृ॒त्रा सु॒हना॑नि रंधि ज॒हि वध॑र्व॒नुषो॒ मर्त्य॑स्य ॥९

अ॒स्मे इति॑ । वर्षि॑ष्ठा । कृ॒णु॒हि॒ । ज्येष्ठा॑ । नृ॒म्णानि॑ । स॒त्रा । स॒हु॒रे॒ । सहां॑सि ।

अ॒स्मभ्यं॑म् । वृ॒त्रा । सु॒ऽहनां॑नि । र॒न्धि॒ । ज॒हि । वधः॑ ।
व॒नुषः॑ । मर्त्यं॑स्य ॥९

अस्मे इति । वर्षिष्ठा । कृणुहि । ज्येष्ठा । नृम्णानि । सत्रा ।
सहुरे । सहांसि ।

अस्मभ्यम् । वृत्रा । सुऽहनानि । रन्धि । जहि । वधः ।
वनुषः । मर्त्यस्य ॥९

हे “सहुरे सहनशीलेन्द्र त्वं “सत्रा सर्वदा "सहांसि शत्रूनभिभावुकानि “वर्षिष्ठा वर्षिष्ठानि प्रवृद्धानि “ज्येष्ठा ज्येष्ठानि प्रशस्तानि “नम्णानि बलानि "अस्मे अस्मभ्यं “कृणुहि कुरु। हे इन्द्र त्वम् “अस्मभ्यं “सुहनानि शोभनवधानि “वृत्रा वृत्राणि शत्रून् “रन्धि रन्धय वशं नय । किंच “वनुषः हिंसकस्य “मर्त्यस्य मरणधर्मणः शत्रोः संबन्धि “वधः हननसाधनमायुधं "जहि नाशय ॥

अ॒स्माक॒मित्सु शृं॑णुहि॒ त्वमिं॑द्रा॒स्मभ्यं॑ चि॒त्राँ उपं॑ माहि॒ वाजां॑न् ।

अ॒स्मभ्य॒ं विश्वां॑ इषण॒ः पुरंधीर॒स्माक॒ं सु मं॑घवन्बोधि गो॒दाः ॥१०

अ॒स्माकं॑म् । इत् । सु । शृ॒णु॒हि॒ । त्वम् । इ॒न्द्र॒ । अ॒स्मभ्यं॑म् । चि॒त्रान् । उपं॑ । मा॒हि॒ । वाजां॑न् ।

अ॒स्मभ्यं॑म् । विश्वाः॑ । इ॒ष॒ण॒ः । पुरं॑म्ऽधीः । अ॒स्माकं॑म् । सु । म॒घ॒ऽव॒न् । बो॒धि॒ । गो॒ऽदाः ॥१०

अस्माकम् । इत् । सु । शृणुहि । त्वम् । इन्द्र । अस्मभ्यम् । चित्रान् । उप । माहि । वाजान् ।

अस्मभ्यम् । विश्वाः । इषणः । पुरम्ऽधीः । अस्माकम् । सु । मघऽवन् । बोधि । गोऽदाः ॥१०

हे "इन्द्र “त्वम् “अस्माकमित् अस्मदीयाः एव स्तुतीः "सु सुष्ठु “शृणुहि । तथा हे इन्द्र त्वं “चित्रान् चायनीयानि "वाजान् अन्नानि “अस्मभ्यम् "उप “माहि देहि । किंच “अस्मभ्यं “विश्वाः सर्वाः “पुरंधीः बुद्धीः “इषणः प्रेरय । अपि च हे “मघवन् धनवन्निन्द्र त्वं “अस्माकं “गोदाः गवां दाता "सु सुष्ठु "बोधि भव ॥

नू ष्टु॒त इं᳚द्र॒ नू गृं॑णा॒न इषं᳚ जरि॒त्रे न॒द्यो॒३॒॑ न पीं॑पेः ।

अकां॑रि ते हरिवो॒ ब्रह्म॒ नव्यं᳚ धि॒या स्यां॑म र॒थ्यः॑ सदा॒साः ॥ ११

नु । स्तु॒तः । इ॒न्द्र॒ । नु । गृ॒णा॒नः । इषं॑म् । ज॒रि॒त्रे । न॒द्यः॑ । न । पी॒पे॒रिति॑ पीपेः ।

अका॑रि । ते॒ । ह॒रि॒ऽव॒ः । ब्रह्म॑ । नव्य॑म् । धि॒या । स्या॒म॒ । र॒थ्यः॑ । स॒दा॒ऽसाः ॥११

नु । स्तुतः । इन्द्र । नु । गृणानः । इषम् । जरित्रे । नद्यः । न । पीपेरिति पीपेः ।

अकारि । ते । हरिऽवः । ब्रह्म । नव्यम् । धिया । स्याम । रथ्यः । सदाऽसाः ॥११

पूर्वं व्याख्याता ॥ ॥ ८ ॥

# ऋग्वेदः सूक्तं ४.२३



## दे. इन्द्रः, ८-१० ऋतं वा। त्रिष्टुप्

कथा महामवृधत्कस्य होतुर्यज्ञं जुषाणो अभि सोममूधः ।

पिबन्नुशानो जुषमाणो अन्धो ववक्ष ऋष्वः शुचते धनाय ॥१॥

को अस्य वीरः सधमादमाप समानंश सुमतिभिः को अस्य ।

कदस्य चित्रं चिकिते कदूती वृधे भुवच्छशमानस्य यज्योः ॥२॥

कथा शृणोति हूयमानमिन्द्रः कथा शृण्वन्नवसामस्य वेद ।

का अस्य पूर्वीरुपमातयो ह कथैनमाहुः पपुरिं जरित्रे ॥३॥

कथा सबाधः शशमानो अस्य नशदभि द्रविणं दीध्यानः ।

देवो भुवन्नवेदा म ऋतानां नमो जगृभ्वाँ अभि यज्जुजोषत् ॥४॥

कथा कदस्या उषसो व्युष्टौ देवो मर्तस्य सख्यं जुजोष ।

कथा कदस्य सख्यं सखिभ्यो ये अस्मिन्कामं सुयुजं ततस्रे ॥५॥

किमादमत्रं सख्यं सखिभ्यः कदा नु ते भ्रात्रं प्र ब्रवाम ।

श्रिये सुदृशो वपुरस्य सर्गाः स्वर्ण चित्रतममिष आ गोः ॥६॥

द्रुहं जिघांसन्ध्वरसमनिन्द्रां तेतिक्ते तिग्मा तुजसे अनीका ।

ऋणा चिद्यत्र ऋणया न उग्रो दूरे अज्ञाता उषसो बबाधे ॥७॥

ऋतस्य हि शुरुधः सन्ति पूर्वीरृतस्य धीतिर्वृजिनानि हन्ति ।

ऋतस्य श्लोको बधिरा ततर्द कर्णा बुधानः शुचमान आयोः ॥८॥

ऋतस्य दृळ्हा धरुणानि सन्ति पुरूणि चन्द्रा वपुषे वपूंषि ।

ऋतेन दीर्घमिषणन्त पृक्ष ऋतेन गाव ऋतमा विवेशुः ॥९॥

ऋतं येमान ऋतमिद्वनोत्यृतस्य शुष्मस्तुरया उ गव्युः ।

ऋताय पृथ्वी बहुले गभीरे ऋताय धेनू परमे दुहाते ॥१०॥

नू ष्टुत इन्द्र नू गृणान इषं जरित्रे नद्यो न पीपेः ।

अकारि ते हरिवो ब्रह्म नव्यं धिया स्याम रथ्यः सदासाः ॥११॥

## सायणभाष्यम्

‘ कथा महाम्' इत्येकादशर्चं द्वितीयं सूक्तं वामदेवस्यार्षं त्रैष्टुभमैन्द्रम् । “ऋतस्य हि 'इत्याद्यास्तिस्र ऋतदेवताका वा । तथा चानुक्रान्तं-’ कथोपान्त्यास्तिस्र ऋतदेव्यो वा ' इति । आभिप्लविकेऽहनि दशरात्रे प्रथमेऽहनि माध्यंदिनसवने मैत्रावरुणशस्त्रेऽहीनसूक्तस्य स्थान इदं तृतीयं संपातसूक्तम् । सूत्रितं च-’ कथा महामिन्द्रः पूर्भिद्य एक इत् ' ( आश्व. श्रौ. ७. ५) इति । महाव्रते निष्केवल्ये एतत् । तथैव पञ्चमारण्यके शौनकेन सूत्रितं च -’ कथा

महामवृधत्कस्य होतुरिति संपातः (ऐ. आ. ५. २. २ ) इति
।

क॒था म॒हाम॑वृध॒त्कस्य॒ होतु॑र्य॒ज्ञं जु॑षा॒णो अ॒भि सोम॒मूधः॑ ।

पिब॑न्नुशा॒नो जु॒षमा॑णो॒ अन्धो॑ वव॒क्ष ऋ॒ष्वः शु॑च॒ते धना॑य ॥
१

क॒था । म॒हाम् । अ॒वृ॒ध॒त् । कस्य॑ । होतुः॑ । य॒ज्ञम् ।
जु॒षा॒णः । अ॒भि । सोम॑म् । ऊधः॑ ।

पिब॑न् । उ॒शा॒नः । जु॒षमा॑णः । अन्धः॑ । व॒व॒क्षे । ऋ॒ष्वः ।
शु॒च॒ते । धना॑य ॥१

कथा । महाम् । अवृधत् । कस्य । होतुः । यज्ञम् ।
जुषाणः । अभि । सोमम् । ऊधः ।

पिबन् । उशानः । जुषमाणः । अन्धः । ववक्षे । ऋष्वः । शुचते । धनाय ॥१

“महां महान्तं गुणैः प्रवृद्धमिन्द्रं “कथा कथं केन प्रकारेण “अवृधत् वर्धयेत् । अस्मत्प्रेरिता स्तुतिरिति शेषः । तस्य महिम्नोऽतिमहत्त्वादिति भावः । स एवेन्द्रः “होतुः होमनिष्पादकस्य “कस्य यजमानस्य “यज्ञं यागं "जुषाणः प्रीयमाणः सन् “अभि । गच्छेदिति शेषः । उपसर्गश्रुतेरुचितक्रियाध्याहारः । किंच “ऊधः उद्धतमतिप्रवृद्धं “सोमम् “अन्धः सोमलक्षणमन्नं “पिबन् आस्वादयन् "उशानः तदेवान्नं कामयमानः “जुषमाणः सेवमानश्च “ऋष्वः महानिन्द्रः “शुचते प्रदीप्ताय “धनाय हिरण्यादिलक्षणाय। उक्तलक्षणं धनं कस्मै यजमानाय दातुं "ववक्षे वहति । पीतमेवान्नं जठरे धारयति। अनेन वाक्यद्वयेन इन्द्रस्याचिन्त्यचरितत्वं ख्यापितं भवति ॥

को अ॒स्य वी॒रः स॑ध॒माद॑माप॒ समा॑नंश सुम॒तिभि॑ः को अ॒स्य ।

कद॑स्य चि॒त्रं चि॑किते॒ कदू॒ती वृ॒धे भु॑वच्छशमा॒नस्य॒ यज्योः॑ ॥२

कः । अ॒स्य॒ । वी॒रः । स॒ध॒ऽमाद॑म् । आ॒प॒ । सम् । आ॒न॒श॒ । सु॒म॒तिऽभिः॑ । कः । अ॒स्य॒ ।

कत् । अ॒स्य॒ । चि॒त्रम् । चि॒कि॒ते॒ । कत् । ऊ॒ती । वृ॒धे । भु॒व॒त् । श॒श॒मा॒नस्य॑ । यज्योः॑ ॥२

कः । अस्य । वीरः । सधऽमादम् । आप । सम् । आनंश । सुमतिऽभिः । कः । अस्य ।

कत् । अस्य । चित्रम् । चिकिते । कत् । ऊती । वृधे । भुवत् । शशमानस्य । यज्योः ॥२

“अस्य इन्द्रस्य संबन्धिनं “सधमादम् । सह माद्यन्तीति सधमादः संग्रामः । तं सह सोमपानं वा "वीरः स्तोत्राणाममित्राणां वा वीरयिता "कः पुमान् “आप प्राप्नोति । “कः च “अस्य इन्द्रस्य “सुमतिभिः शोभनाभिरनुग्रहबुद्धिभिः “समानंश संगच्छते । “कत् कदा वा “अस्य इन्द्रस्य “चित्रं चायनीयं धनं “चिकिते प्रज्ञायते । तत्प्रदानसमयं न कोऽपि जनातीत्यर्थः । “कत् कदा वा “शशमानस्य स्तुवतः "यज्योः यष्टुर्यजमानस्य “वृधे वर्धनाय “ऊती ऊत्या रक्षया “भुवत् भवेत् ॥

कृथा शृंणोति हूयमांनुमिंद्रः कृथा शृृण्वन्नवंसामस्य वेद ।

का अंस्य पूर्वीरुपंमातयो ह कृथैनंमाहुः पपुंरिं जरित्रे ॥३

कृथा । शृृणोति । हूयमांनम् । इन्द्रः । कृथा । शृृण्वन् । अवंसाम् । अस्य । वेद ।

का॒ः । अ॒स्य॒ । पू॒र्वीः । उपं॑ऽमातयः । ह॒ । क॒था । ए॒न॒म् ।
आ॒हु॒ः । पपुं॑रिम् । ज॒रि॒त्रे ॥३

कथा । शृणोति । हूयमानम् । इन्द्रः । कथा । शृण्वन् ।
अवसाम् । अस्य । वेद ।

काः । अस्य । पूर्वीः । उपऽमातयः । ह । कथा । एनम् ।
आहुः । पपुरिम् । जरित्रे ॥३

“इन्द्रः परमैश्वर्ययुक्तः “हूयमानम् आह्वयन्तं स्तोतारं कथा कथं “शृणोति । स्तोत्राणि “शृण्वन् “अस्य स्तोतुः संबन्धीनि “अवसां रक्षणानि “कथा कथं च "वेद वेत्ति । “पूर्वीः पुरीतनानि “अस्य इन्द्रस्य संबन्धीनि “उपमातयः दानानि “काः “ह कानिचित् सन्तीति शेषः । तानि दानानि "जरित्रे स्तोतुः संबन्धिनां कामानां “पपुरिं पूरयितारम् "एनम् इन्द्रं “कथा कथं च “आहुः वदन्ति ॥

क॒था स॒बाध॑: शशमा॒नो अ॑स्य॒ नशं॑द॒भि द्रवि॑णं॒ दीध्या॑नः ।

दे॒वो भुं॑व॒न्नवें॑दा म ऋ॒ताना॒ं नमों जगृ॒भ्वाँ अ॒भि यज्जुजोंषत् ॥४

क॒था । स॒ऽबाध॑: । श॒श॒मा॒नः । अ॒स्य॒ । नशं॑त् । अ॒भि । द्रवि॑णम् । दीध्या॑नः ।

दे॒वः । भु॒व॒त् । नवें॑दाः । मे॒ । ऋ॒ताना॑म् । नम॑: । ज॒गृ॒भ्वान् । अ॒भि । यत् । जुजों॑षत् ॥४

कथा । सऽबाधः । शशमानः । अस्य । नशत् । अभि । द्रविणम् । दीध्यानः ।

देवः । भुवत् । नवेदाः । मे । ऋतानाम् । नमः । जगृभ्वान् । अभि । यत् । जुजोषत् ॥४

"सबाधः सपत्नानां पीडासहितः “शशमानः इन्द्रविषयां स्तुतिं कुर्वन् “दीध्यानः कर्मभिः दीप्यमानो यजमानः “अस्य इन्द्रस्य संबन्धि “द्रविणं पश्वादिधनं “कथा कथम् “अभि “नशत् अभिप्राप्नोति । “नमः हविर्लक्षणमन्नं “जगृभ्वान् गृहीतवानिन्द्रः “यत् यदा “अभि “जुजोषत् माम् अभिसेवेत तदा “देवः दीप्यमान इन्द्रः “मे मदीयानाम् “ऋतानां स्तोत्राणां “नवेदाः अतिशयेन ज्ञाता “भुवत् भवेत् । अत्र निपातस्थो नकारोऽतिशयवाची ॥

क॒था कद॒स्या उ॒षसो॒ व्यु॑ष्टौ दे॒वो मर्त॑स्य स॒ख्यं जु॑जोष ।

क॒था कद॑स्य स॒ख्यं सखि॑भ्यो॒ ये अ॑स्मि॒न्कामं॑ सु॒युजं॑ तत॒स्रे ॥५

क॒था । कत् । अ॒स्याः । उ॒षसः॑ । विऽउ॑ष्टौ । दे॒वः । मर्त॑स्य । स॒ख्यम् । जु॒जो॒ष॒ ।

क॒था । कत् । अ॒स्य॒ । स॒ख्यम् । सखिंऽभ्यः । ये ।
अ॒स्मि॒न् । कामंम् । सु॒ऽयुजंम् । त॒त॒स्रे ॥५

कथा । कत् । अस्याः । उषसः । विऽउष्टौ । देवः । मर्तस्य । सख्यम् । जुजोष ।

कथा । कत् । अस्य । सख्यम् । सखिऽभ्यः । ये । अस्मिन् । कामम् । सुऽयुजम् । ततस्रे ॥५

“देवः द्योतमान इन्द्रः “अस्या “उषसो “व्युष्टौ प्रभाते “मर्तस्य मर्त्यस्य मनुष्यस्य स्तोतुः संबन्धि “सख्यं सखिकर्म “कथा कथं केन प्रकारेण “कत् कदा "जुजोष सेवेत । "ये स्तोतारः “अस्मिन् इन्द्रे “सुयुजं सुष्ठु प्रयुज्यमानं "कामं कामनीयं हविः स्तोत्रं च “ततस्रे वितेनिरे “अस्य इन्द्रस्य “सख्यं सखिकर्म “सखिभ्यः स्तोतृभ्यः “कथा कथं "कत् कदाचित् । भवेदिति शेषः ॥
॥ ९ ॥

कि॒मा॒दम॑त्रं स॒ख्यं सखि॑भ्यः क॒दा नु ते॑ भ्रा॒त्रं प्र ब्र॑वाम ।

श्रि॒ये सु॒दृशो॒ वपु॑रस्य॒ सर्गाः॒ स्व१॒र्ण चि॒त्रत॑ममिष॒ आ गोः ॥ ६

किम् । आत् । अम॑त्रम् । स॒ख्यम् । सखि॑ऽभ्यः । क॒दा । नु । ते॒ । भ्रा॒त्रम् । प्र । ब्र॒वा॒म॒ ।

श्रि॒ये । सु॒ऽदृशः॑ । वपुः॑ । अ॒स्य॒ । सर्गाः॑ । स्वः॑ । न । चि॒त्रऽत॑मम् । इ॒षे॒ । आ । गोः ॥६

किम् । आत् । अमत्रम् । सख्यम् । सखिऽभ्यः । कदा । नु । ते । भ्रात्रम् । प्र । ब्रवाम ।

श्रिये । सुऽदृशः । वपुः । अस्य । सर्गाः । स्वः । न । चित्रऽतमम् । इषे । आ । गोः ॥६

हे इन्द्र वयं यजमानाः ते त्वदीयम् “अमत्रं शत्रूनभिभावुकं “सख्यं सखिकर्म “सखिभ्यः स्तोतृभ्यः “किमात् किं स्वित् “प्र “ब्रवाम प्रकर्षेण वदेम । “ते त्वदीयं “भ्रात्रं भ्रातृकर्म च “कदा “नु कदा खलु प्र ब्रवाम । “सुदृशः शोभनदर्शनस्य “अस्य इन्द्रस्य संबन्धिनः “सर्गाः उद्योगाः “श्रिये सर्वेषां स्तोतृणां श्रेयसे । भवन्तीति शेषः । “स्वर्ण सूर्यो यथा दर्शनीयतमस्तथा “गोः गन्तुरिन्द्रस्य “चित्रतमं दर्शनीयतमं “वपुः शरीरम् “आ “इषे आ समन्तात् सर्वैरिष्यते ॥

द्रुहं॒ जिघांसंध्व॒रसंमनि॒न्द्रां तेतिंक्ते ति॒ग्मा तु॒जसे॒ अनींका ।

ऋ॒णा चि॒द्यत्रं ऋण॒या नं उ॒ग्रो दू॒रे अज्ञांता उ॒षसों बबा॒धे ॥
७

द्रुहंम् । जिघांसन् । ध्व॒रसंम् । अ॒नि॒न्द्राम् । तेतिंक्ते । ति॒ग्मा । तु॒जसें । अनींका ।

ऋ॒णा । चि॒त् । यत्र॑ । ऋ॒ण॒ऽयाः । न॒ः । उ॒ग्रः । दू॒रे ।
अज्ञा॑ताः । उ॒षसः॑ । ब॒बा॒धे ॥७

द्रुहम् । जिघांसन् । ध्वरसम् । अनिन्द्राम् । तेतिक्ते ।
तिग्मा । तुजसे । अनीका ।

ऋणा । चित् । यत्र । ऋणऽयाः । नः । उग्रः । दूरे ।
अज्ञाताः । उषसः । बबाधे ॥७

अयमिन्द्रः “द्रुहं द्रोहं कुर्वतीं “ध्वरसं हिंसिकाम् "अनिन्द्राम् इन्द्रमजानतीं राक्षसीं “जिघांसन् हन्तुमिच्छन् “तिग्मा तिग्मानि पूर्वमेव तीक्ष्णानि “अनीका अनीकानि आयुधानि “तुजसे तद्वधाय “तेतिक्ते अत्यर्थं तीक्ष्णीकरोति । यत्र यासूषःसु तदुपलक्षितेष्वहःसु “ऋणा “चित् ऋणान्यपि “नः । अस्मान् बाधन्त इति शेषः । ताः “उषसः च “उग्रः उद्गूर्णबलः “ऋणयाः ऋणस्य हन्तेन्द्रः। यातिः

वधकर्मा । "दूरे “अज्ञाताः अननुभूताः सतीः “बबाधे अपीडयत् ॥

ऋतपेयनाम्न्येकाहे मरुत्वतीयनिष्केवल्यशस्त्रयोः निविद्धानात्' पुरस्तात् ' ऋतस्य हि' इत्येतदादिके द्वे ऋचौ क्रमेण शंसनीये । सूत्रितं च-' ऋतस्य हि शुरुधः सन्ति पूर्वीरिति सूक्तमुखीये' (आश्व. श्रौ. ९. ७ ) इति ॥ ।

ऋ॒तस्य॒ हि शु॒रुध॑ः संति॑ पू॒र्वीर्ऋ॒तस्य॑ धी॒तिर्वृ॑जि॒नानि॑ हंति ।

ऋ॒तस्य॒ श्लोको॑ बधि॒रा तं॑तर्द॒ कर्णा॑ बुधा॒नः शु॒चमा॑न आ॒योः ॥८

ऋ॒तस्य॑ । हि । शु॒रुध॑ः । सन्ति॑ । पू॒र्वीः । ऋ॒तस्य॑ । धी॒तिः । वृ॒जि॒नानि॑ । ह॒न्ति॒ ।

ऋ॒तस्य॑ । श्लोकः॑ । ब॒धि॒रा । त॒त॒र्द॒ । कर्णा॑ । बु॒धा॒नः । शु॒चमा॑नः । आ॒योः ॥८

ऋतस्य । हि । शुरुधः । सन्ति । पूर्वीः । ऋतस्य । धीतिः । वृजिनानि । हन्ति ।

ऋतस्य । श्लोकः । बधिरा । ततर्द । कर्णा । बुधानः । शुचमानः । आयोः ॥८

अत्र ऋतशब्देनेन्द्रो वादित्यो वा सत्यं वा यज्ञो वोच्यते । “ऋतस्य ऋतदेवस्य संबन्धिन्यः “पूर्वीः बह्व्यः “शुरुधः आपः “सन्ति “हि भवन्ति खलु । “ऋतस्य ऋतदेवस्य संबन्धिनी “धीतिः प्रज्ञा तद्विषया स्तुतिर्वा “वृजिनानि वर्जनीयानि पापानि “हन्ति हिनस्ति । “ऋतस्य ऋतदेवस्य संबन्धिनी “श्लोकः स्तुतिरूपा वाक् “आयोः गन्तुर्मनुष्यस्य संबन्धिनौ “बधिरा बधिरौ प्रतिबद्धौ "कर्णा

कर्णौ "ततर्द तृणत्ति। कीदृशः श्लोकः। “बुधानः बुध्यमानः “शुचमानः दीप्यमानः ॥

ऋ॒तस्यं दृ॒ळ्हा ध॒रुणा॑नि संति पु॒रूणिं च॒ंद्रा वपुं॑षे॒ वपूं॑षि ।

ऋ॒तेनं दी॒र्घमिं॑षणंत॒ पृक्षं ऋ॒तेन॒ गावं ऋ॒तमा विं॑वेशुः ॥९

ऋ॒तस्यं । दृ॒ळ्हा । ध॒रुणा॑नि । स॒न्ति॒ । पु॒रूणिं । च॒न्द्रा । वपुं॑षे । वपूं॑षि ।

ऋ॒तेनं । दी॒र्घम् । इ॒ष॒ण॒न्त॒ । पृक्षः॑ । ऋ॒तेनं । गावः॑ । ऋ॒तम् । आ । वि॒वे॒शुः॒ ॥९

ऋतस्य । दृळ्हा । धरुणानि । सन्ति । पुरूणि । चन्द्रा । वपुषे । वपूंषि ।

ऋतेन । दीर्घम् । इषणन्त । पृक्षः । ऋतेन । गावः ।
ऋतम् । आ । विवेशुः ॥९

“वपुषे वपुष्मतः । षष्य्ार्थे चतुर्थी । “ऋतस्य ऋतदेवस्य संबन्धीनि “दृळ्हा दृढानि “धरुणानि धारकाणि “पुरूणि बहूनि “चन्द्रा चन्द्राण्याह्लादकानि “वपूंषि रूपाणि “सन्ति भवन्ति । “ऋतेन ऋतदेवेन “दीर्घम् अत्यधिकं “पृक्षः अन्नम् “इषणन्त स्तोतार इच्छन्ति । “ऋतेन ऋतदेवेन “गावः धेनवः “ऋतं यज्ञं दक्षिणात्वेन “आ “विवेशुः प्रविशन्ति । यद्वा । गावो रश्मय ऋतमुदकम् आविवेशुः ॥

ऋ॒तं ये॑मा॒न ऋ॒तमिद्व॑नोत्यृ॒तस्य॒ शुष्म॑स्तुर॒या उ॑ ग॒व्युः ।

ऋ॒ताय॑ पृ॒थ्वी ब॑हु॒ले ग॑भी॒रे ऋ॒ताय॑ धे॒नू प॑र॒मे दु॑हाते ॥१०

ऋ॒तम् । ये॒मा॒नः । ऋ॒तम् । इत् । व॒नो॒ति॒ । ऋ॒तस्य॑ ।
शुष्मः॑ । तु॒र॒ऽयाः । ऊं॒ इति॑ । ग॒व्युः ।

ऋ॒ताय॑ । पृ॒थ्वी इति॑ । ब॒हु॒ले इति॑ । ग॒भी॒रे इति॑ । ऋ॒ताय॑ ।
धे॒नू इति॑ । प॒र॒मे इति॑ । दु॒हा॒ते॒ इति॑ ॥१०

ऋतम् । येमानः । ऋतम् । इत् । वनोति । ऋतस्य ।
शुष्मः । तुरऽयाः । ऊं इति । गव्युः ।

ऋताय । पृथ्वी इति । बहुले इति । गभीरे इति । ऋताय ।
धेनू इति । परमे इति । दुहाते इति ॥१०

“ऋतम् ऋतदेवं येमानः नियच्छन् स्तुतिभिर्वशीकुर्वन् स्तोता “ऋतमित् ऋतदेवमेव “वनोति संभजते । “ऋतस्य ऋतदेवस्य संबन्धि “शुष्मः बलं “तुरयाः तूर्णं “गव्युः । “उ इति चार्थे । जलकामश्च भवति । “बहुले विस्तीर्णे “गभीरे दुरवगाहे “पृथ्वी द्यावापृथिव्यौ “ऋताय ऋतदेवाय भवतः

। “धेनू प्रीणयित्र्यौ “परमे उत्कृष्टे द्यावापृथिव्यौ “ऋताय ऋतदेवायैव “दुहाते दोहनं कुर्वाते ।।

नू ष्टुत इंद्र नू गृंणान इषं जरित्रे नद्यो३ न पींपेः ।

अकांरि ते हरिवो ब्रह्म नव्यं धिया स्यांम रथ्यः सदासाः ॥ ११

नु । स्तुतः । इन्द्र । नु । गृणानः । इषंम् । जरित्रे । नद्यः । न । पीपेरितिं पीपेः ।

अकांरि । ते । हरिऽवः । ब्रह्मं । नव्यंम् । धिया । स्याम । रथ्यः । सदाऽसाः ॥११

नु । स्तुतः । इन्द्र । नु । गृणानः । इषम् । जरित्रे । नद्यः । न । पीपेरिति पीपेः ।

अकारि । ते । हरिऽवः । ब्रह्म । नव्यम् । धिया । स्याम । रथ्यः । सदाऽसाः ॥११

पूर्वं व्याख्याता ॥ ॥ १० ॥

# ऋग्वेदः सूक्तं ४.२४



## दे. इन्द्रः। त्रिष्टुप्, १० अनुष्टुप्

का सुष्टुतिः शवसः सूनुमिन्द्रमर्वाचीनं राधस आ ववर्तत् ।

ददिर्हि वीरो गृणते वसूनि स गोपतिर्निष्षिधां नो जनासः ॥१॥

स वृत्रहत्ये हव्यः स ईड्यः स सुष्टुत इन्द्रः सत्यराधाः ।

स यामन्ना मघवा मर्त्याय ब्रह्मण्यते सुष्वये वरिवो धात् ॥२॥

तमिन्नरो वि ह्वयन्ते समीके रिरिक्वांसस्तन्वः कृण्वत त्राम् ।

मिथो यत्त्यागमुभयासो अग्मन्नरस्तोकस्य तनयस्य सातौ ॥३॥

क्रतूयन्ति क्षितयो योग उग्राशुषाणासो मिथो अर्णसातौ ।

सं यद्विशोऽववृत्रन्त युध्मा आदिन्नेम इन्द्रयन्ते अभीके ॥४॥

आदिद्ध नेम इन्द्रियं यजन्त आदित्पक्तिः पुरोळाशं रिरिच्यात् ।

आदित्सोमो वि पपृच्यादसुष्वीनादिज्जुजोष वृषभं यजध्यै ॥५॥

कृणोत्यस्मै वरिवो य इत्थेन्द्राय सोममुशते सुनोति ।

सध्रीचीनेन मनसाविवेनन्तमित्सखायं कृणुते समत्सु ॥६॥

य इन्द्राय सुनवत्सोममद्य पचात्पक्तीरुत भृज्जाति धानाः ।

प्रति मनायोरुचथानि हर्यन्तस्मिन्दधद्वृषणं शुष्ममिन्द्रः ॥७॥

यदा समर्यं व्यचेदृघावा दीर्घं यदाजिमभ्यख्यदर्यः ।

अचिक्रदद्वृषणं पत्न्यच्छा दुरोण आ निशितं सोमसुद्भिः ॥८॥

भूयसा वस्नमचरत्कनीयोऽविक्रीतो अकानिषं पुनर्यन् ।

स भूयसा कनीयो नारिरेचीद्दीना दक्षा वि दुहन्ति प्र वाणम् ॥९॥

क इमं दशभिर्ममेन्द्रं क्रीणाति धेनुभिः ।

यदा वृत्राणि जङ्घनदथैनं मे पुनर्ददत् ॥१०॥

नू ष्टुत इन्द्र नू गृणान इषं जरित्रे नद्यो न पीपेः ।

अकारि ते हरिवो ब्रह्म नव्यं धिया स्याम रथ्यः सदासाः ॥११॥

## सायणभाष्यम्

‘ का सुष्टुतिः' इत्येकादशर्चं तृतीयं सूक्तं वामदेवस्यार्षमैन्द्रम् । दशम्यनुष्टुप् शिष्टास्त्रिष्टुभः। तथा चानुक्रमणिका- का सुष्टुतिरुपान्त्यानुष्टुप् ' इति । विनियोगो लैङ्गिकः ॥

का सु॑ष्टु॒तिः शव॑सः सू॒नुमिन्द्र॑मर्वाची॒नं राध॑स॒ आ व॑वर्तत् ।

द॒दिर्हि वी॒रो गृ॑ण॒ते वसू॑नि॒ स गोप॑तिर्नि॒ष्षिधां॑ नो जनासः ॥१

का । सुऽस्तुतिः । शवंसः । सूनुम् । इन्द्रंम् । अर्वाचीनम् । राधंसे । आ । ववर्तत् ।

ददिः । हि । वीरः । गृणते । वसूंनि । सः । गोऽपंतिः । निःऽसिधांम् । नः । जनासः ॥१

का । सुऽस्तुतिः । शवसः । सूनुम् । इन्द्रम् । अर्वाचीनम् । राधसे । आ । ववर्तत् ।

ददिः । हि । वीरः । गृणते । वसूनि । सः । गोऽपतिः । निःऽसिधाम् । नः । जनासः ॥१

"का कीदृशी "सुष्टुतिः “शवसः “सूनुं बलस्य पुत्रम् । अतिबलिनमित्यर्थः । “अर्वाचीनम् अस्मदभिमुखम् "इन्द्रं परमैश्वर्ययुक्तं “राधसे धनाय अस्मभ्यं धनं दातुम् “आ "ववर्तत् आवर्तयेत् । हे “जनासः जना यजमानाः “वीरः विक्रान्तः “गोपतिः पश्वादिधनस्य पालकः “सः इन्द्रः

“निष्षिधां निष्षेद्धॄणां शत्रूणां संबन्धीनि “वसूनि धनानि गृणते गृणद्भ्यः स्तोतृभ्यः “नः अस्मभ्यं "ददिर्हि दाता खलु भवति ।

स वृंत्रहत्ये हव्यः स ईड्यः स सुष्टुंत इंद्रः सत्यरांधाः ।

स यामन्ना मघवा मर्त्याय ब्रह्मण्यते सुष्वंये वरिंवो धात् ॥ २

सः । वृत्रऽहत्यें । हव्यः । सः । ईड्यः । सः । सुऽस्तुंतः । इन्द्रः । सत्यऽरांधाः ।

सः । यामंन् । आ । मघऽवां । मर्त्याय । ब्रह्मण्यते । सुस्वंये । वरिंवः । धात् ॥२

सः । वृत्रऽहत्ये । हव्यः । सः । ईड्यः । सः । सुऽस्तुतः । इन्द्रः । सत्यऽराधाः ।

सः । यामन् । आ । मघऽवा । मर्त्याय । ब्रह्मण्यते ।
सुस्वये । वरिवः । धात् ॥२

“सः इन्द्रः "वृत्रहत्ये वृत्राणां शत्रूणां हत्ये हनने निमित्तभूते सति "यामन् युद्धे “हव्यः आह्वातव्यो भवति । “सः इन्द्रः “ईड्यः स्तुत्यो भवति । “सः “इन्द्रः सुष्टुतः सन् 'सत्यराधाः यजमानेभ्यो दातुं सत्यधनो भवति । “मघवा धनवान् “सः इन्द्रः “ब्रह्मण्यते स्तोत्रमिच्छते “सुष्वये सोम सुन्वते मर्त्याय मनुष्याय यजमानाय “वरिवः धनम् । वरिव इति धननामैतत् । “आ “धात् आ समन्तात् ददाति ।।

तमिन्नरो॒ वि ह्व॑यंते समी॒के रिं॑रि॒क्वांसं॑स्त॒न्व॑ः कृण्वत॒ त्रां ।

मि॒थो यत्त्या॒गमु॒भयांसो॒ अग्म॒न्नरं॑स्तो॒कस्य॒ तनं॑यस्य सा॒तौ
॥३

तम् । इत् । नरः॑ । वि । ह्व॒य॒न्ते॒ । स॒म्ऽई॒के । रि॒रि॒क्वांसः॑ ।
त॒न्वः॑ । कृ॒ण्व॒त॒ । त्राम् ।

मि॒थः । यत् । त्या॒गम् । उ॒भयां॑सः । अग्मं॑न् । नरः॑ ।
तो॒कस्यं॑ । तनं॑यस्य । सा॒तौ ॥३

तम् । इत् । नरः । वि । ह्वयन्ते । सम्ऽईके । रिरिक्वांसः ।
तन्वः । कृण्वत । त्राम् ।

मिथः । यत् । त्यागम् । उभयासः । अग्मन् । नरः ।
तोकस्य । तनयस्य । सातौ ॥३

“नरः नेतारो मनुष्याः “समीके युद्धे “तमित् तमेवेन्द्रं “वि “ह्वयन्ते विविधमाह्वानं कुर्वते । “तन्वः स्वकीयानि शरीराणि “रिरिक्वांसः तपसा रेचयन्तो यजमानास्तमेवेन्द्रं “त्रां त्रातारं “कृण्वत कृण्वते कुर्वते । “यत् यदा “मिथः परस्परं संगताः “उभयासः उभये यजमानाः स्तोतारश्च

“त्यागं त्यागकर्तारं दातारमिन्द्रम् “अग्मन् उपगच्छन्ति तदा “नरः उभयविधा मनुष्याः “तोकस्य पुत्रस्य “तनयस्य पौत्रस्य च “सातौ लाभे निमित्तभूते सति तमेवेन्द्रं त्रातारं कुर्वन्तीति संबन्धः ॥

क्र॒तू॒यंति॑ क्षि॒तयो॒ योगे॑ उग्राशुषा॒णासो॑ मि॒थो अर्ण॑सातौ ।

सं यद्विशोऽवं॑वृत्रंत यु॒ध्मा आदिन्नेमे॑ इंद्रयंते अ॒भीके॑ ॥४

क्र॒तु॒ऽयन्ति॑ । क्षि॒तयः॑ । योगे॑ । उ॒ग्र॒ । आ॒शु॒षा॒णासः॑ । मि॒थः । अर्ण॑ऽसातौ ।

सम् । यत् । विशः॑ । अवं॑वृत्रन्त । यु॒ध्माः । आत् । इत् । नेमे॑ । इ॒न्द्र॒य॒न्ते॒ । अ॒भीके॑ ॥४

क्रतुऽयन्ति । क्षितयः । योगे । उग्र । आशुषाणासः । मिथः । अर्णऽसातौ ।

सम् । यत् । विशः । अववृत्रन्त । युध्माः । आत् । इत् ।
नेमे । इन्द्रयन्ते । अभीके ॥४

हे “उग्र उद्गूर्णबलेन्द्र "आशुषाणासः व्याप्नुवन्तः “क्षितयः मनुष्याः । क्षितय इति मनुष्यनामैतत् । “अर्णसातौ सस्यादिफलसिद्ध्यर्थमुदकलाभे निमित्ते सति “मिथः परस्परं “योगे संबन्धे सति “क्रतूयन्ति क्रतूनि कर्माणीच्छन्ति । “यत् यदा “युध्माः योधयित्र्यः “विशः प्रजाः "अभीके युद्धे । अभीक इति संग्रामनामैतत् । “सम् “अववृत्रन्त संवर्तन्ते परस्परं संगच्छन्ते “आदित् तदानीमेव “नेमे केचन भाग्यवन्तो योधकाः “इन्द्रयन्ते युद्धे इन्द्रमिच्छन्ति ।

आदिद्ध नेमं इंद्रियं यंजंत आदित्पक्तिः पुंरोळाशं रिरिच्यात् ।

आदित्सोमो॒ वि पंपृच्या॒दसुं॒ष्वी॒नादिज्जुंजोष वृष॒भं यजंध्यै ॥५

आत् । इत् । ह॒ । नेमें । इ॒न्द्रि॒यम् । य॒ज॒न्ते॒ । आत् । इत् । प॒क्तिः । पु॒रो॒ळाशंम् । रि॒रि॒च्या॒त् ।

आत् । इत् । सोमः॑ । वि । प॒पृ॒च्या॒त् । असुंस्वीन् । आत् । इत् । जु॒जो॒ष॒ । वृ॒ष॒भम् । यजंध्यै ॥५

आत् । इत् । ह । नेमे । इन्द्रियम् । यजन्ते । आत् । इत् । पक्तिः । पुरोळाशम् । रिरिच्यात् ।

आत् । इत् । सोमः । वि । पपृच्यात् । असुस्वीन् । आत् । इत् । जुजोष । वृषभम् । यजध्यै ॥५

“आदित् तदानीमेव युद्धकाले “नेमे अन्ये योधाः "इन्द्रियं बलवन्तमिन्द्रं “यजन्ते "ह पूजयन्ति खलु । कश्चित् "आदित् अनन्तरमेव “पुरोळाशं पिष्टरूपं हविः पक्तिः

पचन् “रिरिच्यात् इन्द्राय दद्यात् । “आदित् अनन्तरमेव “सोमः अभिषुतसोमो यजमानः “असुष्वीन् अनभिषुतसोमान् यजमानान् “वि “पपृच्यात् धनैः पृथक्कुर्यात् । “आदित् अनन्तरमेव कश्चित् “वृषभं कामानां वर्षितारमिन्द्रं “यजध्यै यष्टुं “जुजोष सेवते ।। ।। ११ ॥

कृ॒णोत्य॑स्मै॒ वरि॑वो॒ य इ॒त्थेंद्रा॑य॒ सोम॑मुश॒ते सु॒नोति॑ ।

स॒ध्री॒चीने॑न॒ मन॒सावि॑वेन॒न्तमित्सखा॑यं कृणुते स॒मत्सु॑ ॥६

कृ॒णोति॑ । अ॒स्मै॒ । वरि॑वः । यः । इ॒त्था । इन्द्रा॑य । सोम॑म् । उ॒श॒ते । सु॒नोति॑ ।

स॒ध्री॒चीने॑न । मन॑सा । अवि॑ऽवेनन् । तम् । इत् । सखा॑यम् । कृ॒णु॒ते॒ । स॒मत्ऽसु॑ ॥६

कृणोति । अस्मै । वरिवः । यः । इत्था । इन्द्राय । सोमम् । उशते । सुनोति ।

सध्रीचीनेन । मनसा । अविऽवेनन् । तम् । इत् । सखायम् । कृणुते । समत्ऽसु ॥६

“यः यजमानः “सोमम् "उशते कामयमानाय “इत्था अमुत्र स्वर्गलोके स्थिताय “इन्द्राय सुनोति अभिषवं करोति इन्द्रोऽपि "अस्मै यजमानाय “वरिवः धनं “कृणोति करोति । “सध्रीचीनेन संगतेन “मनसा प्रवणेन चित्तेन “अविवेनम् । वेनतिः कान्तिकर्मा । विवेनो विगतेच्छः । तदन्योऽविवेनः । आत्मानं कामयमानं “तमित् तमेव सुन्वन्तं यजमानं “सखायं मित्रं “समत्सु संग्रामेष्विन्द्रः “कृणुते करोति ।।

य इंद्रा॑य सु॒नव॒त्सोमं॑म॒द्य पचा॑त्प॒क्तीरु॒त भृ॒ज्जाति॑ धा॒नाः ।

प्रतिं मना॒योरु॒चथा॑नि॒ हर्यं॒तस्मिं॑दध॒द्वृषं॑णं॒ शुष्म॒मिंद्रः॑ ॥७

यः । इन्द्रा॑य । सु॒नवं॑त् । सोमं॑म् । अ॒द्य । पचा॑त् । प॒क्तीः ।
उ॒त । भृ॒ज्जाति॑ । धा॒नाः ।

प्रति॑ । म॒ना॒योः । उ॒चथा॑नि । हर्यं॑न् । तस्मिं॑न् । द॒ध॒त् ।
वृषं॑णम् । शुष्मं॑म् । इन्द्रः॑ ॥७

यः । इन्द्राय । सुनवत् । सोमम् । अद्य । पचात् । पक्तीः ।
उत । भृज्जाति । धानाः ।

प्रति । मनायोः । उचथानि । हर्यन् । तस्मिन् । दधत् ।
वृषणम् । शुष्मम् । इन्द्रः ॥७

“अद्य अस्मिन् दिवसे “यः यजमानः “इन्द्राय परमैश्वर्ययुक्ताय देवाय “सोमं सोम लक्षणमन्नं “सुनवत् सुनुयात् अभिषवं कुर्यात् । तथा यः “पक्तीः पक्तव्यांश्च पुरोडाशादीन् “पचात् पचेत् पचनं कुर्यात् । "उत अपि च

यः “धानाः भर्जनयोग्यान यवान् । अत्र भृष्ट्यववाची धानाशब्दस्तद्योग्यं यवमात्रं लक्षयति । “भृजाति भृज्जेत् भर्जनं कुर्यात् । “इन्द्रः “मनायोः स्तुतिमिच्छतो यजमानस्य “उचथानि स्तोत्राणि "प्रति “हर्यन प्रतिकामयमानः सन् “तस्मिन यजमाने “वृषणं कामानां वर्षणसमर्थं “शुष्मं बलं “दधत् धारयति ।।

य॒दा सं॑म॒र्यं व्यचे॒दृघा॑वा दी॒र्घं यदा॒जिम॒भ्यख्य॑द॒र्यः ।

अचि॑क्रद॒द्वृष॑णं॒ पत्न्यच्छा॑ दुरो॒ण आ निशि॑तं सोम॒सुद्भिः॑ ॥ ८

य॒दा । स॒ऽम॒र्यम् । वि । अचे॑त् । ऋघा॑वा । दी॒र्घम् । यत् । आ॒जिम् । अ॒भि । अख्य॑त् । अ॒र्यः ।

अचिंक्रदत् । वृषंणम् । पत्नीं । अच्छं । दु॒रो॒णे । आ ।
निऽशिंतम् । सो॒म॒सुत्ऽभिः॑ ॥८

यदा । सऽमर्यम् । वि । अचेत् । ऋघावा । दीर्घम् । यत् ।
आजिम् । अभि । अख्यत् । अर्यः ।

अचिक्रदत् । वृषणम् । पत्नी । अच्छ । दुरोणे । आ ।
निऽशितम् । सोमसुत्ऽभिः ॥८

"यदा "ऋघावा शत्रूणां हिंसक इन्द्रः "समर्यं सह मर्तव्यं शत्रुं "व्यचेत् व्यज्ञासीत् विशेषेण जानीयात् । यत् यदा "अर्यः स्वामीन्द्रः "दीर्घम् अत्यधिकम् "आजिं संग्रामम् "अभ्यख्यत् अभिपश्येत् तदा तस्य इन्द्रस्य "पत्नी "दुरोणे यज्ञगृहे 'सोमसुद्भिः सोमं सुन्वद्भिर्ऋत्विग्भिः निशितं तीक्ष्णीकृतम् । सोमपानेनोत्साहवन्तमित्यर्थः । "वृषणं कामानां वर्षितारमिन्द्रम् "अच्छ अभि आ "अचिक्रदत् आक्रन्दति आह्वयते ॥

भूयंसा व॒स्नमंचर॒त्कनी॒योऽविंक्रीतो अकानिषं॒ पुन॒र्यन् ।

स भूयंसा॒ कनींयो॒ नारिंरेचीद्दी॒ना दक्षा॒ वि दुंहंति॒ प्र वा॒णं ॥ ९

भूयंसा । व॒स्नम् । अ॒च॒र॒त् । कनींयः । अविंऽक्रीतः । अ॒का॒नि॒ष॒म् । पुनः॑ । यन् ।

सः । भूयंसा । कनींयः । न । अ॒रि॒रे॒ची॒त् । दी॒नाः । दक्षाः॑ । वि । दु॒हन्ति॒ । प्र । वा॒णम् ॥९

भूयसा । वस्नम् । अचरत् । कनीयः । अविऽक्रीतः । अकानिषम् । पुनः । यन् ।

सः । भूयसा । कनीयः । न । अरिरेचीत् । दीनाः । दक्षाः । वि । दुहन्ति । प्र । वाणम् ॥९

अत्र ऋग्द्वये संप्रदायविद्भिः पूर्वाचार्यैः केचित् श्लोकाः पठ्यन्ते । ते एव लिख्यन्ते । ‘अल्पं यः परिगृह्णाति मूल्यं पण्येन भूयसा । स क्रेतारं पुनर्गच्छन्न विक्रीतस्त्वयं मया ॥ ६ ॥ इति ब्रुवन्कामयते पुनर्मूल्यस्य पूरणम् । स विक्रेता पुनर्मूल्यं भूयसा न प्रपूरयेत् ॥२॥ हीनं न लभते वस्नं यदा विक्रीतवान्पुरा । यथासमयमेव स्यात्तयोर्न पुनरन्यथा ॥ ३ ॥ अयं विक्रय एवेति समयश्चेत् कृतो भवेत् । अथ मूल्यार्थमेतत्स्याद्विचार्यैव तु निर्णयः ॥४॥ इत्येवं समयोऽकारि तदा मूल्यं प्रपूर्यते। तस्मादादौ मया कार्यः समयोऽत्रेति चिन्तयन् ॥५॥ वामदेवो वशीकृत्य शक्रं स्तोत्रेण भूयसा । विक्रीणन् समयं चक्र इन्द्रं क इममित्यृचि ॥ ६ ॥ अतश्च द्वृच एकार्थो भूयसा वस्नमित्ययम्' इति । अयमर्थः प्रतिपाद्यते । कश्चित् “भूयसा भूम्ना पण्येन द्रव्येण “कनीयः अल्पतरं “वस्नं वसु मूल्यं धनम् “अचरत् प्राप्नोति । “पुनर्यन् क्रेतारं पुनर्गच्छन् स विक्रेतायमर्थो मया “अविक्रीतः इति ब्रुवन्

“अकानिषं मूल्यपूर्तिं कामयते ॥ व्यत्ययेन उत्तमपुरुषः ॥ “सः विक्रेता "भूयसा धनेन “कनीयः अल्पतरं मूल्यं नारिरेचीत् क्रेतुः सकाशान्न रिक्तीकरोति । न लभत इत्यर्थः । “दीनाः असमर्थाः “दक्षाः समर्थाश्च “वाणं वचनं “वि “प्र “दुहन्ति यथोक्तं क्रयकाले तथैव लभन्ते ॥

क इ॒मं द॒शभि॒र्ममेंद्रं॑ क्रीणाति धे॒नुभिः॑ ।

य॒दा वृ॒त्राणि॒ जंघ॑न॒दथैं॑नं मे॒ पुनं॑र्ददत् ॥१०

कः । इ॒मम् । द॒शऽभिः॑ । ममं॑ । इन्द्रं॑म् । क्री॒णा॒ति॒ । धे॒नुऽभिः॑ ।

य॒दा । वृ॒त्राणिं॑ । जङ्घं॑नत् । अथं॑ । ए॒न॒म् । मे॒ । पुनः॑ । द॒द॒त् ॥१०

कः । इमम् । दशऽभिः । मम । इन्द्रम् । क्रीणाति ।
धेनुऽभिः ।

यदा । वृत्राणि । जङ्घनत् । अथ । एनम् । मे । पुनः ।
ददत् ॥१०

“मम मदीयम् “इमं स्वभूतम् “इन्द्रं “धेनुभिः प्रीणयित्रीभिः "दशभिः दशसंख्याकाभिः स्तुतिभिः “कः “क्रीणाति क्रयं करोति । तदानीं हे क्रेतारो युष्माकं मध्ये एवमपि समयः क्रियते । “यदा अयमिन्द्रः “वृत्राणि त्वदीयान् शत्रून् “जङ्घनत् हन्यात् “अथ अनन्तरमेव “एनम् इन्द्रं “मे मह्यं पुनर्ददत् पुनर्दद्यात् ।।

नू ष्टुत इंद्र नू गृंणान इषं जरित्रे नद्यो३ न पींपेः ।

अका॑रि ते हरिवो॒ ब्रह्म॒ नव्यं॑ धि॒या स्या॑म र॒थ्यः॑ सदा॒साः ॥ ११

नु । स्तु॒तः । इ॒न्द्र॒ । नु । गृ॒णा॒नः । इषं॑म् । ज॒रि॒त्रे । न॒द्यः॑ । न । पी॒पे॒रिति॑ पीपेः ।

अका॑रि । ते॒ । ह॒रि॒ऽव॒ः । ब्रह्म॑ । नव्यं॑म् । धि॒या । स्या॒म॒ । र॒थ्यः॑ । स॒दा॒ऽसाः ॥११

नु । स्तुतः । इन्द्र । नु । गृणानः । इषम् । जरित्रे । नद्यः । न । पीपेरिति पीपेः ।

अकारि । ते । हरिऽवः । ब्रह्म । नव्यम् । धिया । स्याम । रथ्यः । सदाऽसाः ॥११

पूर्वं व्याख्याता ॥ ॥ १२ ॥

# ऋग्वेदः सूक्तं ४.२५



## दे. इन्द्रः। त्रिष्टुप्

को अद्य नर्यो देवकाम उशन्निन्द्रस्य सख्यं जुजोष ।

को वा महेऽवसे पार्याय समिद्धे अग्नौ सुतसोम ईट्टे ॥१॥

को नानाम वचसा सोम्याय मनायुर्वा भवति वस्त उस्राः ।

क इन्द्रस्य युज्यं कः सखित्वं को भ्रात्रं वष्टि कवये क ऊती ॥२॥

को देवानामवो अद्या वृणीते क आदित्याँ अदितिं ज्योतिरीट्टे ।

कस्याश्विनाविन्द्रो अग्निः सुतस्यांशोः पिबन्ति मनसाविवेनम् ॥३॥

तस्मा अग्निर्भारतः शर्म यंसज्ज्योक्पश्यात्सूर्यमुच्चरन्तम् ।

य इन्द्राय सुनवामेत्याह नरे नर्याय नृतमाय नृणाम् ॥४॥

न तं जिनन्ति बहवो न दभ्रा उर्वस्मा अदितिः शर्म यंसत् ।

प्रियः सुकृत्प्रिय इन्द्रे मनायुः प्रियः सुप्रावीः प्रियो अस्य सोमी ॥५॥

सुप्राव्यः प्राशुषाळेष वीरः सुष्वेः पक्तिं कृणुते केवलेन्द्रः ।

नासुष्वेरापिर्न सखा न जामिर्दुष्प्राव्योऽवहन्तेदवाचः ॥६॥

न रेवता पणिना सख्यमिन्द्रोऽसुन्वता सुतपाः सं गृणीते ।

आस्य वेदः खिदति हन्ति नग्नं वि सुष्वये पक्तये केवलो भूत् ॥७॥

इन्द्रं परेऽवरे मध्यमास इन्द्रं यान्तोऽवसितास इन्द्रम् ।

इन्द्रं क्षियन्त उत युध्यमाना इन्द्रं नरो वाजयन्तो हवन्ते ॥८॥

## सायणभाष्यम्

‘ को अद्य' इत्यष्टर्चं चतुर्थं सूक्तं वामदेवस्यार्षं त्रैष्टुभमैन्द्रम् । तथा चानुक्रान्तं-- ‘ को अद्याष्टौ' इति । दशरात्रे चतुर्थेऽहनि माध्यंदिने सवने स्तोमवृद्धौ मैत्रावरुणशस्त्रे आरम्भणीयाया उपरिष्टादिदं सूक्तमावपनीयं च । सूत्रितं च- स्तोमे वर्धमाने को अद्य नर्यः' ( आश्व. श्रौ. ७, १२ ) इति ॥

को अ॒द्य नर्यो॑ दे॒वका॑म उ॒शन्निंद्रं॑स्य स॒ख्यं जु॑जोष ।

को वां॑ म॒हेऽवं॑से॒ पार्या॑य॒ समिं॑द्धे अ॒ग्नौ सु॒तसो॑म ईट्टे ॥१

कः । अ॒द्य । नर्यः॑ । दे॒वऽका॑मः । उ॒शन् । इन्द्रं॑स्य । स॒ख्यम् । जु॒जो॒ष॒ ।

कः । वा॒ । म॒हे । अव॑से । पार्या॑य । सम्ऽइ॑द्धे । अ॒ग्नौ ।
सु॒तऽसो॑मः । ई॒ट्टे॒ ॥१

कः । अद्य । नर्यः । देवऽकामः । उशन् । इन्द्रस्य ।
सख्यम् । जुजोष ।

कः । वा । महे । अवसे । पार्याय । सम्ऽइद्धे । अग्नौ ।
सुतऽसोमः । ईट्टे ॥१

“अद्य अस्मिन् दिवसे “नर्यः मनुष्यहितः “देवकामः देवानिच्छन् "उशन् कामयमानः “कः यजमानः “इन्द्रस्य “सख्यं सखित्वं “जुजोष सेवते । किंच “सुतसोमः अभिषुतसोमः "को “वा यजमानः “अग्नौ “समिद्धे प्रज्वलिते सति "महे महते प्रवृद्धाय “पार्याय पारमर्हते “अवसे तर्पणाय “ईट्टे इन्द्रं स्तौति ।।

को ना॑नाम॒ वच॑सा सो॒म्याय॑ मना॒युर्वा॑ भवति॒ वस्त॑ उ॒स्राः ।

क इन्द्र॑स्य॒ युज्य॒॑ कः स॑खि॒त्वं को भ्रा॒त्रं व॑ष्टि क॒वये॒ क ऊ॒ती ॥२

कः । न॒ना॒म॒ । वच॑सा । सो॒म्याय॑ । म॒ना॒युः । वा॒ । भ॒व॒ति॒ । वस्ते॑ । उ॒स्राः ।

कः । इन्द्र॑स्य । युज्य॑म् । कः । स॒खि॒ऽत्वम् । कः । भ्रा॒त्रम् । व॒ष्टि॒ । क॒वये॑ । कः । ऊ॒ती ॥२

कः । ननाम । वचसा । सोम्याय । मनायुः । वा । भवति । वस्ते । उस्राः ।

कः । इन्द्रस्य । युज्यम् । कः । सखिऽत्वम् । कः । भ्रात्रम् । वष्टि । कवये । कः । ऊती ॥२

“कः यजमानः “वचसा वाग्रूपया स्तुत्या “सोम्याय सोमायेन्द्राय “ननाम नमति प्रह्वीभवति । कः “वा इन्द्राय “मनायुः “भवति स्तुतिकामोऽस्ति । कः “उस्राः इन्द्रेण दत्ता गाः “वरते आच्छादयति । धारयतीत्यर्थः । "कः “इन्द्रस्य “युज्यं साहाय्यं “वष्टि इच्छति । "कः “सखित्वं “को “भ्रात्रं भ्रातृभावं वष्टि इच्छति । “कवये क्रान्तदर्शिने इन्द्राय “ऊती ऊतये तर्पणाय “कः । भवतीति शेषः ॥

को दे॒वाना॒मवों अ॒द्या वृंणीते॒ क आंदि॒त्याँ अदिंतिं॒ ज्योतिंरीट्टे ।

कस्या॒श्विना॒विंद्रों अ॒ग्निः सु॒तस्यां॒शोः पिंबंति॒ मन॒साविंवेनं ॥३

कः । दे॒वानांम् । अवः॑ । अ॒द्य । वृ॒णी॒ते । कः । आ॒दि॒त्यान् । अदिंतिम् । ज्योतिः॑ । ई॒ट्टे॒ ।

कस्यं । अ॒श्विनौं । इन्द्रः॑ । अ॒ग्निः । सु॒तस्यं । अं॒शोः ।
पि॒ब॒न्ति॒ । मनंसा । अविंऽवेनम् ॥३

कः । देवानाम् । अवः । अद्य । वृणीते । कः । आदित्यान्
। अदितिम् । ज्योतिः । ईट्टे ।

कस्य । अश्विनौ । इन्द्रः । अग्निः । सुतस्य । अंशोः ।
पिबन्ति । मनसा । अविऽवेनम् ॥३

“अद्य अस्मिन् दिने “कः यजमानः "देवानां द्योतमानानामिन्द्रादीनाम् “अवः रक्षणं “वृणीते प्रार्थयते । “क “आदित्यान् देवान् “अदितिं देवमातरं च “ज्योतिः उदकं च “ईट्टे याचते । “अश्विनौ अश्विदेवौ “इन्द्रः च “अग्निः च "मनसा स्तुत्या प्रीताः सन्तः "अविवेनम् अविगतकामम् । यथाकाममित्यर्थः । “कस्य यजमानस्य संबन्धिनं "सुतस्य अभिषुतस्य “अंशोः सोमस्य । सोममित्यर्थः । “पिबन्ति पानं कुर्वन्ति ॥

तस्मा॑ अ॒ग्निर्भार॑तः॒ शर्म॑ यंस॒ज्ज्योक्प॑श्या॒त्सूर्य॑मु॒च्चर॑न्तं ।

य इंद्रा॑य सु॒नवा॒मेत्याह॒ नरे॒ नर्या॑य॒ नृत॑माय नृ॒णां ॥४

तस्मै॑ । अ॒ग्निः । भार॑तः । शर्म॑ । य॒ंस॒त् । ज्योक् । प॒श्या॒त् । सूर्य॑म् । उ॒त्ऽचर॑न्तम् ।

यः । इन्द्रा॑य । सु॒नवा॑म । इति॑ । आह॑ । नरे॑ । नर्या॑य । नृऽत॑माय । नृ॒णाम् ॥४

तस्मै । अग्निः । भारतः । शर्म । यंसत् । ज्योक् । पश्यात् । सूर्यम् । उत्ऽचरन्तम् ।

यः । इन्द्राय । सुनवाम । इति । आह । नरे । नर्याय । नृऽतमाय । नृणाम् ॥४

“भारतः हविषो भर्ताग्निः । ' प्राणो भूत्वा प्रजा धारयन् भारतः' इति वाजसनेयकम् । “अग्निः “तस्मै यजमानाय “शर्म सुखं “यंसत् यच्छेत् । किंचायमग्निः “ज्योक् चिरकालम् “उच्चरन्तम् उद्यन्तं “सूर्यं “पश्यात् पश्येत् । “यः यजमानः “इन्द्राय “सुनवामेत्याह इन्द्रार्थं सोमाभिषवं कुर्यामिति ब्रवीति । कीदृशायेन्द्राय । “नरे नेत्रे “नर्याय नरहिताय “नृणां नराणां नेतॄणां मध्ये "नृतमाय नेतृतमाय ॥

न तं जिंनंति ब॒हवो॒ न द॒भ्रा उ॒र्वंस्मा॒ अदिंति॒ः शर्मं यंसत् ।

प्रि॒यः सु॒कृत्प्रि॒य इंद्रें मना॒युः प्रि॒यः सुंप्रा॒वीः प्रि॒यो अंस्य सो॒मी ॥५

न । तम् । जि॒न॒न्ति॒ । ब॒हवः॑ । न । द॒भ्राः । उ॒रु । अ॒स्मै॒ । अदिंतिः । शर्मं । य॒ंस॒त् ।

प्रि॒यः । सु॒ऽकृत् । प्रि॒यः । इन्द्रे॑ । म॒ना॒युः । प्रि॒यः ।
सु॒प्र॒ऽअ॒वीः । प्रि॒यः । अ॒स्य॒ । सो॒मी ॥५

न । तम् । जिनन्ति । बहवः । न । दभ्राः । उरु । अस्मै ।
अदितिः । शर्म । यंसत् ।

प्रियः । सुऽकृत् । प्रियः । इन्द्रे । मनायुः । प्रियः ।
सुप्रऽअवीः । प्रियः । अस्य । सोमी ॥५

“दभ्राः अल्पाः “बहवो “न बहवोऽपि शत्रुजनाः “तं यजमानं “न "जिनन्ति न हिंसन्तु । य इन्द्राय सुनवामेत्याह तमिति पूर्वेण संबन्धः । “अदितिः इन्द्रमाता “अस्मै यजमानाय “उरु विस्तीर्णं “शर्म सुखं “यंसत् यच्छतु । किंच “इन्द्रे इन्द्राय “सुकृत् शोभनयागादीनां कर्ता यजमानः “प्रियः भवति। “मनायुः इन्द्रविषयस्तुतिकामश्चास्येन्द्रस्य ”प्रियः भवति। “सुप्रावीः सुष्ठु प्राविता सुष्ठु प्रगच्छन्ननुपगच्छन् वा यजमानोऽस्येन्द्रस्य

“प्रियः भवति । “सोमी सोमवान् यजमानः "अस्य इन्द्रस्य “प्रियः भवति ॥ ॥ १३ ॥

सुप्राव्यः प्राशुषाळेष वीरः सुष्वेः पक्तिं कृणुते केवलेंद्रः ।

नासुंष्वेरापिर्न सखा न जामिर्दुंष्प्राव्योंऽवहंतेदवांचः ॥६

सुप्रऽअव्यः । प्राशुषाट् । एषः । वीरः । सुस्वेः । पक्तिम् । कृणुते । केवंला । इन्द्रः ।

न । असुंस्वेः । आपिः । न । सखां । न । जामिः । दुःप्रऽअव्यः । अवऽहन्ता । इत् । अवांचः ॥६

सुप्रऽअव्यः । प्राशुषाट् । एषः । वीरः । सुस्वेः । पक्तिम् । कृणुते । केवला । इन्द्रः ।

न । असुस्वेः । आपिः । न । सखा । न । जामिः ।
दुःप्रऽअव्यः । अवऽहन्ता । इत् । अवाचः ॥६

“प्राशुषाट् शत्रूणां प्रकर्षेण शीघ्रमभिभविता "वीरः विक्रान्तः “एषः “इन्द्रः “सुप्राव्यः सुष्ठु उपगच्छतो हविर्भिः सुष्ठु प्रतर्पयितुर्वा “सुष्वेः सुन्वतो यजमानस्य संबन्धिनीं "केवला केवलामसाधारणां “पक्तिं “कृणुते आत्मनः कुरुते । किंचेन्द्रः “असुष्वेः असुन्वतोऽयजमानस्य “आपिः व्याप्तः "न भवति । इन्द्रोऽयजमानस्य “सखा “न भवति । "जामिः बन्धुश्च “न भवति । अपि च दुष्प्राव्यः दुरुपगमनस्य "अवाचः स्तुतिरहितस्य पुरुषस्य “अवहन्तेत् हिंसितैव भवति ॥

न रे॒वतां प॒णिनां स॒ख्यमिंद्रोऽसुंन्वता सुत॒पाः सं गृंणीते ।

आस्य॒ वेदः॑ खि॒दति॒ हंतिं न॒ग्नं वि सुष्वंये प॒क्तये॒ केवंलो भूत् ॥७

न । रे॒वतां । प॒णिनां । स॒ख्यम् । इन्द्रः॑ । असुंन्वता । सु॒त॒ऽपाः । सम् । गृ॒णी॒ते॒ ।

आ । अ॒स्य॒ । वेदः॑ । खि॒दतिं । हन्तिं । न॒ग्नम् । वि । सुस्वंये । प॒क्तयें । केवंलः । भू॒त् ॥७

न । रेवता । पणिना । सख्यम् । इन्द्रः । असुन्वता । सुतऽपाः । सम् । गृणीते ।

आ । अस्य । वेदः । खिदति । हन्ति । नग्नम् । वि । सुस्वये । पक्तये । केवलः । भूत् ॥७

“सुतपाः अभिषुतं सोमं पिबन् “इन्द्रः “रेवता धनवता “पणिना वणिजा लुब्धेन “असुन्वता सोमाभिषवमकुर्वता अयजमानेन सह “सख्यं सखित्वं “न “सं “गृणीते न

संस्तौति । नानुमन्यत इत्यर्थः । किंच “अस्य अयजमानस्य “नग्नं निरर्थकं “वेदः धनं ज्ञानं वा “आ “खिदति उद्धरति । “हन्ति हिनस्ति च । अपि च "सुष्वये सोमं सुन्वते “पक्तये हवींषि पचते यजमानाय “केवलः असाधारणः सन् “वि “भूत् विभवति ॥

इंद्रं॒ परेऽवं॑रे मध्य॒मास॒ इंद्रं॒ यांतोऽवं॑सितास॒ इंद्रं॑ ।

इंद्रं॑ क्षि॒यंतं॑ उ॒त युध्यं॑माना॒ इंद्रं॒ नरों॑ वाज॒यंतों॑ हवंते ॥८

इन्द्रं॑म् । परें॑ । अवं॑रे । म॒ध्य॒मासः॑ । इन्द्रं॑म् । यान्तः॑ । अवं॑ऽसितासः । इन्द्रं॑म् ।

इन्द्रं॑म् । क्षि॒यन्तः॑ । उ॒त । युध्यं॑मानाः । इन्द्रं॑म् । नरः॑ । वा॒ज॒यन्तः॑ । ह॒व॒न्ते॒ ॥८

इन्द्रम् । परे । अवरे । मध्यमासः । इन्द्रम् । यान्तः । अवऽसितासः । इन्द्रम् ।

इन्द्रम् । क्षियन्तः । उत । युध्यमानाः । इन्द्रम् । नरः । वाजयन्तः । हवन्ते ॥८

“परे उत्कृष्टाः “अवरे निकृष्टाश्च जनाः' “इन्द्रं “हवन्ते आह्वयन्ति । “मध्यमासः मध्यमाश्च “इन्द्रम् एव हवन्ते । “यान्तः कार्यसिद्ध्यर्थं गच्छन्तो जनाः इन्द्रमेवाह्वयन्ति । “अवसितासः निविष्टाश्च “इन्द्रम् एवाह्वयन्ति । “क्षियन्तः गृहे निवसन्तो जनाः “इन्द्रम् एव हवन्ते । "उत अपि चं “युध्यमानाः युद्धं कुर्वाणा जना जयार्थमिन्द्रमेवाह्वयन्ति । "वाजयन्तः वाजमन्नमिच्छन्तः “नरः नेतारो मनुष्याः “इन्द्रम् एव “हवन्ते ॥ ॥ १४ ॥

होता यक्षदिति प्रैषः को अद्येति तु विस्मयः ।
जामयेऽपह्नवो नैषा विततादिः प्रवल्हिका ।।बृहद्देवता १.५७ ।।

# ऋग्वेदः सूक्तं ४.२६



वामदेवो गौतमः, १- ३ इन्द्रो वा।

## दे. १ - ३ इन्द्रः, आत्मा वा, ४ - ७ श्येनः। त्रिष्टुप्

अहं मनुरभवं सूर्यश्चाहं कक्षीवाँ ऋषिरस्मि विप्रः ।

अहं कुत्समार्जुनेयं न्यृञ्जेऽहं कविरुशना पश्यता मा ॥१॥

अहं भूमिमददामार्यायाहं वृष्टिं दाशुषे मर्त्याय ।

अहमपो अनयं वावशाना मम देवासो अनु केतमायन् ॥२॥

अहं पुरो मन्दसानो व्यैरं नव साकं नवतीः शम्बरस्य ।

शततमं वेश्यं सर्वताता दिवोदासमतिथिग्वं यदावम् ॥३॥

प्र सु ष विभ्यो मरुतो विरस्तु प्र श्येनः श्येनेभ्य आशुपत्वा ।

अचक्रया यत्स्वधया सुपर्णो हव्यं भरन्मनवे देवजुष्टम् ॥४॥

भरद्यदि विरतो वेविजानः पथोरुणा मनोजवा असर्जि ।

तूयं ययौ मधुना सोम्येनोत श्रवो विविदे श्येनो अत्र ॥५॥

ऋजीपी श्येनो ददमानो अंशुं परावतः शकुनो मन्द्रं मदम् ।

सोमं भरद्दादृहाणो देवावान्दिवो अमुष्मादुत्तरादादाय ॥६॥

आदाय श्येनो अभरत्सोमं सहस्रं सवाँ अयुतं च साकम् ।

अत्रा पुरंधिरजहादरातीर्मदे सोमस्य मूरा अमूरः ॥७॥

## सायणभाष्यम्

'अहं मनुः' इति सप्तर्चं पञ्चमं सूक्तं वामदेवस्यार्षम् । अत्रेयमनुक्रमणिका--- 'अहं मनुः

सप्ताद्याभिस्तिसृभिरिन्द्रमिवात्मानमृऋषिस्तुष्टावेन्द्रो वात्मानं परा नवाष्टौ वा श्येनस्तुतिः' इति । अत्र 'अहं मनुः' इत्याद्याभिस्तिसृभिरात्मानमिन्द्ररूपेण वामदेवः स्तुतवान् । यद्वा । इन्द्र एव आत्मानं स्तुतवान् । अतो वामदेववाक्यपक्षे वामदेव ऋषिरिन्द्रो देवता । इन्द्रवाक्यपक्षे त्विन्द्र ऋषिः परमात्मा देवता । त्रिष्टुप् छन्दः । अवशिष्टानां वामदेव ऋषिः । अवशिष्टाभिरुत्तरसूक्तेन च सुपर्णात्मना ब्रह्म स्तूयते । अतस्तासां परब्रह्म देवता । श्येननाम्न्येकाहे माध्यंदिनसवने मरुत्वतीयशस्त्रे इदं सूक्तम् । सूत्रितं च- श्येनाजिराभ्यामभिचरन्यजेताहं मनुर्गर्भे नु सन्' ( आश्व. श्रौ. ९. ७ ) इति ॥

अ॒हं मनु॑रभवं॒ सूर्य॑श्चा॒हं क॒क्षीवाँ॒ ऋषि॑रस्मि॒ विप्रः॑ ।

अ॒हं कुत्सं॑मार्जुने॒यं न्यृं॑ञ्जे॒ऽहं क॒विरु॒शना॑ प॒श्यंता मा ॥१

अ॒हम् । मनुः॑ । अ॒भ॒व॒म् । सूर्यः॑ । च॒ । अ॒हम् । क॒क्षीवा॑न् । ऋषिः॑ । अ॒स्मि॒ । विप्रः॑ ।

अ॒हम् । कुत्स॑म् । आ॒र्जु॒ने॒यम् । नि । ऋ॒ञ्जे॒ । अ॒हम् । क॒विः । उ॒शना॑ । पश्य॑त । मा॒ ॥१

अहम् । मनुः । अभवम् । सूर्यः । च । अहम् । कक्षीवान् । ऋषिः । अस्मि । विप्रः ।।

अहम् । कुत्सम् । आर्जुनेयम् । नि । ऋञ्जे । अहम् । कविः । उशना । पश्यत । मा ॥ १ ॥

इदमादिमन्त्रत्रयेण गर्भे वसन् वामदेवः उत्पन्नतत्त्वज्ञानः सन् सार्वात्म्यं स्वानुभवं मन्वादिरूपेण प्रदर्शयन्नाह । अहं वामदेव इन्द्रो वा मनुरभवं सर्वस्य मन्ता प्रजापतिरस्मि । अहम् एव सूर्यश्च सर्वस्य प्रेरकः सविता चास्मि । विप्रः

मेधावी कक्षीवान् दीर्घतमसः पुत्रः एतत्संज्ञकः ऋषिः अप्यहमेव अस्मि । आर्जुनेयम् अर्जुन्याः पुत्रं कुत्सम् एतन्नामकमृषिम् अहम् एव न्यृञ्जे नितरां प्रसाधयामि । "कविः क्रान्तदर्शी "उशना एतदाख्य ऋषिः अहम् एवास्मि । उक्तमुपलक्षणम् । परमार्थदृष्ट्या कृत्स्नमप्यहमेवास्मीत्यर्थः । हे जनाः मा मां सर्वात्मकं पश्यत । यूयमप्येवमेव स्वस्वरूपमनुभवतेत्युक्तं भवति ॥

अ॒हं भूमि॑मददा॒मार्या॑या॒हं वृ॒ष्टिं दा॒शुषे॒ मर्त्या॑य ।

अ॒हम॒पो अ॑नयं वावशा॒ना मम॑ दे॒वासो॒ अनु॒ केत॑मायन् ॥२

अ॒हम् । भूमि॑म् । अ॒द॒दा॒म् । आर्या॑य । अ॒हम् । वृ॒ष्टिम् । दा॒शुषे॑ । मर्त्या॑य ।

अ॒हम् । अ॒पः । अ॒न॒य॒म् । वा॒व॒शा॒नाः । मम॑ । दे॒वासः॑ । अनु॑ । केत॑म् । आ॒य॒न् ॥२

अहम् । भूमिम् । अददाम् । आर्याय । अहम् । वृष्टिम् । दाशुषे । मर्त्याय ।

अहम् । अपः । अनयम् । वावशानाः । मम । देवासः । अनु । केतम् । आयन् ॥ २ ॥

"अहं वामदेव इन्द्रो वा आर्याय मनवे "भूमिं पृथ्वीम् अददां दत्तवानस्मि । दाशुषे हविर्दत्तवते मर्त्याय मनुष्याय यजमानाय "वृष्टिं सस्याद्यभिवृद्ध्यर्थं वृष्टिलक्षणमुदकम् अहम् एव अददाम् । किच "अहं वावशानाः शब्दायमानाः "अपः उदकानि "अनयं सर्वमपि प्रदेशम् अगमयम् । देवासः वह्न्यादयो देवाः "मम "केतं मदीयं संकल्पम् अनु आयन् अनुयन्ति ।।

अ॒हं पुरो॑ मन्दसा॒नो व्यै॑रं॒ नव॑ सा॒कं न॑व॒तीः शम्ब॑रस्य ।

श॒त॒त॒मं वे॒श्यं॑ स॒र्वता॑ता॒ दिवो॑दासमतिथि॒ग्वं यदाव॑म् ॥३

अ॒हम् । पुरः॑ । म॒न्द॒सा॒नः । वि । ऐ॒र॒म् । नव॑ । सा॒कम् ।
न॒व॒तीः । शम्ब॑रस्य ।

श॒त॒ऽत॒मम् । वे॒श्य॑म् । स॒र्वऽता॑ता । दिवः॑ऽदासम् ।
अ॒ति॒थि॒ऽग्वम् । यत् । आव॑म् ॥३

अहम् । पुरः । मन्दसानः । वि । ऐरम् । नव । साकम् ।
नवतीः । शम्बरस्य ।

शतऽतमम् । वेश्यम् । सर्वऽताता । दिवःऽदासम् ।
अतिथिऽग्वम् । यत् । आवम् ॥ ३ ॥

"अहं वामदेव इन्द्रो वा मन्दसानः सोमेन माद्यन् नव नवसंख्याकाः नवतीः नवतिसंख्याकाश्च शम्बरस्य एतन्नामकस्यासुरस्य संबन्धीनि पुरः पुराणि "साकं युगपदेव व्यैरम् अध्वंसयम् । शततमं शतसंख्यापूरणं पुरं वेश्यं दिवोदासनाम्ने प्रवेशार्हमकरवम् । सर्वताता सर्वतातौ यज्ञे "अतिथिग्वम् अतिथीनामभिगन्तारं दिवोदासं दिवोदासनामकं राजर्षिं यत् यदा आवम् अपालयम् । तदा पुरो व्यैरमिति पूर्वेण संबन्धः ॥

प्र सु ष विभ्यो॑ मरुतो॒ विर॑स्तु॒ प्र श्ये॒नः श्ये॒नेभ्य॑ आशु॒पत्वा॑ ।

अ॒च॒क्रया॒ यत्स्व॒धया॑ सुप॒र्णो ह॒व्यं भर॒न्मन॑वे दे॒वजु॑ष्टम् ॥४

प्र । सु । सः । विऽभ्यः॑ । म॒रु॒तः॒ । विः । अ॒स्तु॒ । प्र । श्ये॒नः । श्ये॒नेभ्यः॑ । आ॒शु॒ऽपत्वा॑ ।

अ॒च॒क्रयां । यत् । स्व॒धयां । सु॒ऽप॒र्णः । ह॒व्यम् । भरं॑त् । मनं॑वे । दे॒वऽजुं॑ष्टम् ॥४

प्र । सु । सः । विऽभ्यः। मरुतः। विः । अस्तु । प्र । श्येनः । श्येनेभ्यः । आशुऽपत्वा ।

अचक्रया । यत् । स्वधया। सुऽपर्णः । हव्यम् । भरत् । मनवे । देवऽजुष्टम् ॥ ४ ॥

अथैतदादिभिः श्येनः स्तूयते । हे "मरुतः वेगेन मरुत्सदृशाः पक्षिणः सः प्रसिद्धः श्येनाख्यः विः पक्षी विभ्यः पक्षिभ्यो युष्मत्तः प्र सु "अस्तु बलेन प्रकृष्टो भवतु । किंच श्येनेभ्यः शंसनीयगमनेभ्यः स्वसमानजातिभ्यः पक्षिभ्यः सकाशात् "आशुपत्वा आशुपतनः शीघ्रगामी श्येनः प्रकृष्टो भवतु । 'सुपर्णः शोभनपतनः यत् यदा श्येनः "अचक्रया चक्रवर्जितया स्वधया रथेन देवजुष्टं देवैः सेवितं "हव्यं सोमलक्षणं हविः "मनवे प्रजापतये भरत्

अहरत द्युलोकसकाशादाहृतवान् । अत्र स्वधाशब्दो रथवाची अचक्रया स्वधया वर्तमानम् ' ( ऋ. सं. १०. २७. १९) इत्यादौ दर्शनात् ॥

भर॒द्यदि॒ विरतो॒ वेविं॑जानः प॒थोरुणा॒ मनों॑जवा अस॑र्जि ।

तूयं॑ ययौ॒ मधुं॑ना सो॒म्येनो॒त श्रवों॑ विविदे श्ये॒नो अत्रं॑ ॥५

भरं॑त् । यदिं॑ । विः । अतः॑ । वेविं॑जानः । प॒था । उ॒रुणा॑ । मनः॑ऽजवाः । अ॒स॒र्जि॒ ।

तूयं॑म् । य॒यौ॒ । मधुं॑ना । सो॒म्येनं॑ । उ॒त । श्रवः॑ । वि॒वि॒दे॒ । श्ये॒नः । अत्रं॑ ॥५

भरत् । यदि । विः । अतः । वेविजानः । पृथा । उरुणा । मनःऽजवाः । असर्जि ।

तूयम् । ययौ । मधुना । सोम्येन । उत । श्रवः । विविदे । श्येनः । अत्र ॥ ५॥

"यदि यदा विः पक्षी श्येनः अतः अमुष्मात् द्युलोकात् "वेविजानः सोमपालकान् भीषयन् भरत् अहरत् । सोममाहृतवान् । तदा उरुणा विस्तीर्णेन पथा अन्तरिक्षमार्गेण "मनोजवाः मनोवत् वेगयुक्तः सन् असर्जि संसृष्टः आसीत् । सोम्येन सोममयेन मधुना अन्नेन सह "तूयं क्षिप्रं ययौ जगाम । उत अपि च अत्र अस्मिन् लोके श्येनः सुपर्णः श्रवः सोमाहरणनिमित्तं यशः विविदे लेभे ॥

ऋ॒जी॒पी श्ये॒नो दद॑मानो अ॒ंशुं प॑रा॒वतः॑ शकु॒नो म॒न्द्रं मद॑म् ।

सोम॑ं भरद्दादृहा॒णो दे॒वावा॑न्दि॒वो अ॒मुष्मा॒दुत्त॑रादा॒दाय॑ ॥६

ऋ॒जी॒पी । श्ये॒नः । दद॑मानः । अं॒शुम् । प॒रा॒ऽवतः॑ । श॒कु॒नः । म॒न्द्रम् । मद॑म् ।

सोम॑म् । भ॒र॒त् । द॒दृ॒हा॒णः । दे॒वऽवा॑न् । दि॒वः । अ॒मुष्मा॑त् । उत्ऽत॑रात् । आ॒ऽदाय॑ ॥६

ऋजीपी। श्ये॒नः । ददमानः । अंशुम् । पराऽवतः । शकुनः । मन्द्रम् । मदम् ।

सोमम् । भरत् । ददृहाणः । देवऽवान् । दिवः । अमुष्मात् । उत्ऽतरात् । आऽदाय ।। ६॥

ऋजीपी ऋजुगामी परावतः दूरात् "अंशुं सोमं "ददमानः धारयन् श्येनः शंसनीयगमनः देववान् देवैः सहितः शकुनः पक्षी मन्द्रं मदनीयं स्तुत्यं मदं मदकरं सोमम् उत्तरात् उद्गततरात् "अमुष्मात् "दिवः द्युलोकात् आदाय स्वीकृस्य ददृहाणः दृढीभवन् "भरत् अहरत् ॥

आ॒दाय॑ श्ये॒नो अ॑भर॒त्सोमं॑ स॒हस्रं॑ स॒वाँ अ॒युतं॑ च सा॒कम् ।

अत्रा॒ पुरं॑धिरजहा॒दरा॑ती॒र्मदे॒ सोम॑स्य मू॒रा अमू॑रः ॥७

आ॒ऽदाय॑ । श्ये॒नः । अ॒भ॒र॒त् । सोम॑म् । स॒हस्र॑म् । स॒वान् । अ॒युत॑म् । च॒ । सा॒कम् ।

अत्र॑ । पुर॑म्ऽधिः । अ॒ज॒हा॒त् । अरा॑तीः । मदे॑ । सोम॑स्य । मू॒राः । अमू॑रः ॥

आऽदाय । श्येनः। अभरत् । सोमम् । सहस्रम् । सवान् । अयुतम् । च । साकम् ।

अत्र । पुरम्ऽधिः । अजहात्। अरातीः । मदे । सोमस्य । मूराः । अमूरः ॥ ७ ॥

"श्येनः शंसनीयगमनः पक्षी "सवान् सवानां यज्ञानां सहस्रं सहस्रसंख्याकम् अयुतं च अयुतसंख्याकम् । अपरिमितसंख्याकमित्यर्थः । साकं सह सोमं सोमलक्षणमन्नम् आदाय आदानं कृत्वा "अभरत् अहरत् । आजहार । अत्र अस्मिन् सोमे आहृते सति पुरंधिः पुरंधीर्बहुकर्मा अमूरः अमूढः प्राज्ञ इन्द्रः सोमस्य संबन्धिनि मदे हर्षे सति "मूराः मूढाः अरातीः शत्रून् अजहात् अत्यजत् । जघानेत्यर्थः । अत्रारातिशब्दः स्त्रीलिङ्गः ॥ ॥ १५ ॥

४.२६.१

संशयोऽधः स्विदासीच्च कत्थना स्यादहं मनुः । इमं नो यज्ञमित्यस्यां नियोगः पाद उच्यते ।।बृहद्देवता १.५१ ।।

# ऋग्वेदः सूक्तं ४.२७



## दे. श्येनः, ५ इन्द्रो वा। त्रिष्टुप्, ५ शक्वरी।

गर्भे नु सन्नन्वेषामवेदमहं देवानां जनिमानि विश्वा ।

शतं मा पुर आयसीररक्षन्नध श्येनो जवसा निरदीयम् ॥१॥

न घा स मामप जोषं जभाराभीमास त्वक्षसा वीर्येण ।

ईर्मा पुरंधिरजहादरातीरुत वाताँ अतरच्छूशुवानः ॥२॥

अव यच्छ्येनो अस्वनीदध द्योर्वि यद्यदि वात ऊहुः पुरंधिम् ।

सृजद्यदस्मा अव ह क्षिपज्ज्यां कृशानुरस्ता मनसा भुरण्यन् ॥३॥

ऋजिप्य ईमिन्द्रावतो न भुज्युं श्येनो जभार बृहतो अधि ष्णोः ।

अन्तः पतत्पतत्र्यस्य पर्णमध यामनि प्रसितस्य तद्वेः ॥४॥

अध श्वेतं कलशं गोभिरक्तमापिप्यानं मघवा शुक्रमन्धः ।

अध्वर्युभिः प्रयतं मध्वो अग्रमिन्द्रो मदाय प्रति धत्पिबध्यै शूरो मदाय प्रति धत्पिबध्यै ॥५॥

## सायणभाष्यम्

गर्भे न्विति पंचर्चं षष्ठं सूक्तं वामदेवस्यार्षं त्रैष्टुभं । अंत्या शक्करी षट्पंचाशदक्षरा। श्येनो देवता । पूर्वसूक्तेऽष्टौ वेत्युक्तत्वादंत्याया इंद्रो वा देवता। तथा चानुक्रांतं । गर्भे

नु पंचांत्या शक्करीति ॥ श्येने निष्केवल्यशस्त्र इदं सूक्तं । सूत्रं तु पूर्वमुदाहृतं ॥

गर्भे॒ नु सन्नन्वे॑षामवेदम॒हं दे॒वाना॒ं जनि॑मानि॒ विश्वा॑ ।

श॒तं मा॒ पुर॒ आय॑सीररक्ष॒न्नध॑ श्ये॒नो ज॒वसा॒ निर॑दीयम् ॥१

गर्भे॑ । नु । सन् । अनु॑ । ए॒षा॒म् । अ॒वे॒द॒म् । अ॒हम् । दे॒वाना॑म् । जनि॑मानि । विश्वा॑ ।

श॒तम् । मा॒ । पुरः॑ । आय॑सीः । अ॒र॒क्ष॒न् । अध॑ । श्ये॒नः । ज॒वसा॑ । निः । अ॒दी॒य॒म् ॥१

गर्भे। नु। सन् । अनु। एषां । अवेदं । अहं । देवानां । जनिमानि। विश्वा।

शतं । मा। पुरः। आयसीः । अरक्षन् । अध। श्येनः । जवसा। निः। अदीयं ॥१॥

अत्रैषः श्लोकः पठ्यते -- श्येनभावं समास्थाय गर्भाद्योगेन निःसृतः । ऋषिर्गर्भे शयानः सन् ब्रूते गर्भे नु सन्निति ॥ “गर्भे “नु गर्भे एव “सन् विद्यमानः “अहं वामदेवः “एषाम् इन्द्रादीनां “देवानां “विश्वा विश्वानि सर्वाणि “जनिमानि जन्मानि “अनु “अवेदम् आनुपूर्व्येणाज्ञासिषम् । परमात्मनः सकाशात् सर्वे देवा जाता इत्यवेदिषमित्यर्थः । इतः पूर्वं “शतं बहूनि “आयसीः अयोमयानि अभेद्यानि “पुरः शरीराणि “मा माम् "अरक्षन् अपालयन् । यथाहं शरीरात् व्यतिरिक्तमात्मानं न जानीयां तथा मामरक्षन्नित्यर्थः । “अध अधुना “श्येनः श्येनवत्थि्ततः अहं “जवसा वेगेन “निरदीयं शरीरान्निरगमम् । अनावरणमात्मानं जानन्निर्गतोऽस्मीत्यर्थः । ‘ पुरुषे ह वा अयमादितः इति खण्डे • गर्भ एवैतच्छयानो वामदेव

एवमुवाच ' ( ऐ, आ. २. ५. १ ) इत्यादिनायमर्थः सम्यक् प्रतिपादितः ॥

न घा स मामप जोषं जभाराभीमास त्वक्षंसा वीर्येण ।

ईर्मा पुरंधिरजहादरांतीरुत वाताँ अतरच्छूशुवानः ॥२

न । घ । सः । माम् । अप । जोषंम् । जभार । अभि । ईम् । आस । त्वक्षंसा । वीर्येण ।

ईर्मा । पुरम्ऽधिः । अजहात् । अरांतीः । उत । वातान् । अतरत् । शूशुवानः ॥२

न। घ। सः। मां। अप । जोषं । जभार। अभि । ईं। आस । त्वक्षसा। वीर्येण ।

ईर्मा। पुरंऽधिः । अजहात्। अरातीः । उत । वातान् ।
अतरत् । शूशुवानः ॥२॥

“सः गर्भः “मां वामदेवं “जोषं पर्याप्तं “न “घ नैव “अप “जभार अपजहार । गर्भेऽपि वसतो मे मोहो नाभूदित्यर्थः । अहं तु “ईम् इदं गर्भस्थं दुःखं “त्वक्षसा तीक्ष्णेन “वीर्येण ज्ञानसामर्थ्येन “अभि "आस अभ्यभवम् । “ईर्मा सर्वस्य प्रेरकः “पुरंधिः पुरां धारकः परमात्मा “अरातीः गर्भसंश्रितान् शत्रून् “अजहात् अत्यजत् । जघान । "उत अपि च "शूशुवानः वर्धमानः परिपूर्णः परमात्मा “वातान् गर्भक्लेशकरान् वायून् “अतरत् अतारीत् ॥

अव॒ यच्छ्ये॒नो अस्वं॑नी॒दध॒ द्योर्वि यद्यदि॒ वातं ऊ॒हुः पुरं॑धिम्
।

सृ॒जद्यदं॑स्मा॒ अवं॑ ह क्षि॒पज्ज्यां कृ॒शा॒नु॒रस्ता॒ मनं॑सा भु॒र॒ण्यन् ॥३

अवं । यत् । श्ये॒नः । अस्वं॑नीत् । अधं । द्योः । वि । यत् । यदिं । वा॒ । अतः॑ । ऊ॒हुः । पुरं॑म्ऽधिम् ।

सृ॒जत् । यत् । अ॒स्मै॒ । अवं । ह॒ । क्षि॒पत् । ज्याम् । कृ॒शानुः॑ । अस्तां । मनं॑सा । भु॒र॒ण्यन् ॥३

अव। यत्। श्येनः । अस्वनीत्। अध। द्योः।वि। यत्। यदि। वा। अतः।ऊहुः। पुरंऽधिं।

सृजत् । यत्। अस्मै।अव। ह ।क्षिपत्।ज्यां। कृशानुः । अस्ता। मनसा। भुरण्यन् ॥३॥

“अध तदानीं सोमाहरणकाले “यत् यदा “श्येनः “द्योः द्युलोकात् “अव “अस्वनीत् अवाङ्मुखं शब्दमकरोत् । “यदि “वा यदा च । वेति चार्थे । “यत् यं “पुरंधिं सोमम्

“अतः अस्माच्छ्येनात् “वि “ऊहुः सोमपाला विक्षिप्तवन्तः। “यत् यदा “अस्ता शराणां क्षेप्ता “मनसा मनोवेगेन “भुरण्यन् गन्तुमिच्छन् 'कृशानुः एतन्नामकः सोमपालः "ज्यां धनुषः कोटौ मौर्वीं “क्षिपत् "ह चिक्षेप खलु । “अस्मै श्येनाय शरम् “अव “असृजत् त्यक्तवान् । तथा च ब्राह्मणं- तस्या अनुविसृज्य कृशानुः सोमपालः सव्यस्य पदो नखमच्छिदत् ' ( ऐ. ब्रा. ३. २६) इत्यादि । यदा सोमपाला इत्थमित्थं चक्रुस्तदा श्येनः सोममाजहारेत्यृचोत्तरया संबन्धः ॥

ऋ॒जि॒प्य ई॒मिन्द्रांवतो॒ न भु॒ज्युं श्ये॒नो जंभार बृह॒तो अधि॒ ष्णोः ।

अ॒न्तः पंतत्पत॒त्र्यंस्य प॒र्णमध॒ यामंनि॒ प्रसिंतस्य॒ तद्वेः ॥४

ऋ॒जि॒प्यः । ई॒म् । इन्द्रं॑ऽवतः । न । भु॒ज्युम् । श्ये॒नः ।
ज॒भा॒र॒ । बृ॒ह॒तः । अधिं । स्नोः ।

अ॒न्तरितिं । प॒त॒त् । प॒त॒त्रि । अ॒स्य॒ । प॒र्णम् । अधं ।
यामंनि । प्रऽसिंतस्य । तत् । वेरिति॒ वेः ॥४

ऋजिप्यः । ईं। इंद्रऽवतः। न। भुज्युं । श्येनः । जभार।
बृहतः । अधि । स्नोः ।

अंतरिति।पतत्। पतत्रि।अस्य। पर्णं।अध।यामनि।
प्रऽसितस्य। तत्। वेरिति वेः ॥४॥

“ऋजिप्यः ऋजुगामी “श्येनः “इन्द्रवतः इन्द्रो रक्षको यस्य तस्मात् "बृहतः महतः “अधि उपरि “स्नोः स्थितात् द्युलोकात् “ईम् एनं सोमं "जभार आजहार । तत्र दृष्टान्तः । इन्द्रवतः । इन्द्रः समर्थः । तद्वतो देशात् “भुज्युं न भुज्युनामकं राजानं यथाश्विनावाजह्रतुस्तद्वत् । “अध

तदानीं “यामनि युद्धे “प्रसितस्य कृशानोरस्त्रैर्बद्धस्य "वेः गन्तुः “अस्य श्येनस्य “अन्तः मध्ये स्थितं “पतत्रि पतनशीलं “तत् "पर्णं "पतत् अपतत् ॥

अधं श्वे॒तं क॒लश॒ं गोभिं॒रक्तमांपिप्या॒नं म॒घवां शु॒क्रमन्धः ।

अ॒ध्व॒र्युभि॒ः प्रयंत॒ं मध्वो॒ अग्र॒मिन्द्रो॒ मदां॒य प्रतिं ध॒त्पिबंध्यै॒ शूरो॒ मदां॒य प्रतिं ध॒त्पिबंध्यै ॥५

अधं । श्वे॒तम् । क॒लशंम् । गोभिः॑ । अ॒क्तम् । आ॒ऽपि॒प्या॒नम् । म॒घऽवां । शु॒क्रम् । अन्धः॑ ।

अ॒ध्व॒र्युऽभिः॑ । प्रऽयंतम् । मध्वः॑ । अग्रंम् । इन्द्रः॑ । मदांय । प्रतिं । ध॒त् । पिबंध्यै । शूरः॑ । मदांय । प्रतिं । ध॒त् । पिबंध्यै ॥५

अध। श्वेतं । कलशं। गोभिः । अक्तं । आऽपिप्यानं।
मघऽवा। शुक्रं । अंधः ।

अध्वर्युऽभिः । प्रऽयतं । मध्वः । अग्रं। इंद्रः । मदाय ।
प्रति। धत्। पिबध्यै। शूरः । मदाय । प्रति । धत् । पिबध्यै
॥ ५॥

“अध अधुना “शूरः विक्रान्तः “मघवा धनवान्' “इन्द्रः “श्वेतं शुभ्रं "कलशं कलशे पात्रे स्थितं “गोभिः गव्येन पयसा “अक्तं सिक्तम् “आपिप्यानम् आप्याययन्तं “शुक्रं सारोपेतम् “अध्वर्युभिः “प्रयतं दत्तम् “अन्धः सोमलक्षणमन्नं “मध्वः मधुरस्य सोमरसस्य “अग्रम् अग्रे “मदाय मदार्थं “पिबध्यै पातुं “प्रति “धत् प्रतिदधातु । पुनरुक्तिरादरार्था ॥ ॥ १६ ॥

४.२७.३ कृशानु

**टिप्पणी**

कृशानु उपरिपौराणिकाः संदर्भाः

लक्ष्मीनारायणसंहिता ३.९१.७८ यां कृशाङ्ग द्विजस्य कथा अस्ति। बीजदोषकारणेन कृशाङ्गः ब्राह्मणीपुत्रो भूत्वापि चाण्डालः आसीत्। तेन तपस्तप्त्वा चाण्डालत्वात् मुक्तिं प्राप्य द्विजत्वं अगृह्णात्। कृशाङ्गः संज्ञा संकेतमस्ति यत् तपसा स्वपापानां शोधनमात्रं, कृशाङ्गत्वं पर्याप्तं नास्ति, अपितु कृशानु - यः अन्यानपि कृशं कर्तुं, तेषां दोषानां हरणाय समर्थं भवितुं शक्तः अस्ति, तस्य

संज्ञा कृशानुः अस्ति। लक्ष्मीनारायणसंहितायां अयं कृत्यं अश्वपट्टसरोवरनिकटे अभूत् । अयं संकेतं अस्ति यत् कृशांगता प्राप्तिः एकांगी साधना अस्ति, कृशानुत्वं सर्वांगीणा, अश्वप्रकारा साधना।
प्रस्तुतायां ऋचायां तथा अन्यत्रापि कृशानुः बाणस्य क्षेप्ता अस्ति येन कारणेन सोमस्याहरणसक्तस्य श्येनस्य पर्णं अच्छिद्यत्। पर्णः स्थूलत्वस्य प्रतीकमस्ति। यदा पर्णस्य छेदनं भवति, तदैव कृशाङ्गत्वं।

# ऋग्वेदः सूक्तं ४.२८



## दे. इन्द्रः, इन्द्रासोमौ वा।। त्रिष्टुप्

त्वा युजा तव तत्सोम सख्य इन्द्रो अपो मनवे सस्रुतस्कः ।

अहन्नहिमरिणात्सप्त सिन्धूनपावृणोदपिहितेव खानि ॥१॥

त्वा युजा नि खिदत्सूर्यस्येन्द्रश्चक्रं सहसा सद्य इन्दो ।

अधि ष्णुना बृहता वर्तमानं महो द्रुहो अप विश्वायु धायि ॥२॥

अहन्निन्द्रो अदहदग्निरिन्दो पुरा दस्यून्मध्यंदिनादभीके ।

दुर्गे दुरोणे क्रत्वा न यातां पुरू सहस्रा शर्वा नि बर्हीत् ॥३॥

विश्वस्मात्सीमधमाँ इन्द्र दस्यून्विशो दासीरकृणोरप्रशस्ताः ।

अबाधेथाममृणतं नि शत्रूनविन्देथामपचितिं वधत्रैः ॥४॥

एवा सत्यं मघवाना युवं तदिन्द्रश्च सोमोर्वमश्व्यं गोः ।

आदर्दृतमपिहितान्यश्ना रिरिचथुः क्षाश्चित्ततृदाना ॥५॥

## सायणभाष्यम्

‘ त्वा युजा ' इति पञ्चर्चं सप्तमं सूक्तं वामदेवस्यार्षं त्रैष्टुभम् इन्द्रासोमदेवताकम् । अनुक्रान्तं च'-' त्वा युजैन्द्रासोमम्' इति । विनियोगो लैङ्गिकः ॥

त्वा यु॒जा तव॒ तत्सो॑म स॒ख्य इं॑द्रो॑ अ॒पो मनं॑वे स॒स्रुतं॑स्कः ।

अह॒न्नहि॒मरिं॑णात्स॒प्त सिं॑धू॒नपां॑वृणो॒दपिं॑हितेव॒ खानिं ॥१

त्वा । यु॒जा । तवं॑ । तत् । सो॒म॒ । स॒ख्ये । इन्द्रः॑ । अ॒पः । मनं॑वे । स॒ऽस्रुतः॑ । कु॒रिति॑ कः ।

अहं॑न् । अहिं॑म् । अरिं॑णात् । स॒प्त । सिन्धूं॑न् । अपं॑ । अ॒वृ॒णो॒त् । अपिं॑हिताऽइव । खानिं ॥१

त्वा । युजा । तव । तत् । सोम । सख्ये । इन्द्रः । अपः । मनवे । सऽस्रुतः । करिति कः ।

अहन् । अहिम् । अरिणात् । सप्त । सिन्धून् । अप । अवृणोत् । अपिहिताऽइव । खानि ॥१

हे “सोम “तव स्वदीये “तत् तस्मिन् “सख्ये सखित्वे सति “त्वा त्वया “युजा सहायेन “इन्द्रः “सस्रुतः सरणशीलाः “अपः वृष्टिलक्षणान्युदकानि “मनवे मनुष्येभ्यः “कः अकरोत् । किंच “अहिं वृत्रमसुरम् "अहन् हतवान् । “सप्त सर्पणशीलाः “सिन्धून् अपः “अरिणात् प्रैरयत् । “अपिहितेव अपिहितानीव वृत्रेण तिरोहितानि च । अत्रेवशब्दश्चार्थे । “खानि स्रोतसां द्वाराणि “अपावृणोत उद्घाटितवान् ॥

त्वा यु॒जा नि खिंद॒त्सूर्य॒स्येंद्रंश्च॒क्रं सहं॑सा स॒द्य इंदो ।

अधि॒ ष्णुनां बृह॒ता वर्तं॑मानं म॒हो द्रु॒हो अपं वि॒श्वायुं धायि ॥ २

त्वा । यु॒जा । नि । खि॒द॒त् । सूर्यं॑स्य । इन्द्रः॑ । च॒क्रम् । सहं॑सा । स॒द्यः । इ॒न्दो॒ इतिं॑ ।

अधिं । स्नुनां । बृ॒ह॒ता । वर्तमानम् । म॒हः । द्रु॒हः । अपं ।
वि॒श्वऽआंयु । धा॒यि॒ ॥२

त्वा । युजा । नि । खिदत् । सूर्यस्य । इन्द्रः । चक्रम् ।
सहसा । सद्यः । इन्दो इति ।

अधि । स्नुना । बृहता । वर्तमानम् । महः । द्रुहः । अप ।
विश्वऽआयु । धायि ॥२

हे “इन्दो सोम “इन्द्रः “सद्यः सपदि “त्वा त्वया “युजा सहायेन “सूर्यस्य प्रेरकस्य सवितुः संवन्धिनः पूर्वं द्विचक्रस्य रथस्यैकं “चक्रं “सहसा अभिभावुकेन बलेन “नि “खिदत् आच्छिनत् । कीदृशम्। “अधि उपरि “स्नुना स्थितेन "बृहता महता अन्तरिक्षेण “वर्तमानम्। किंच “महः महतः प्रभूतस्य “द्रुहः द्रोग्धुः सूर्यस्य संबन्धि “विश्वायु सर्वतो गन्तृ चक्रम् "अप “धायि इन्द्रेणापाहारि ।

अह॒न्निंद्रो॒ अदं॑हद॒ग्निरिं॑दो पु॒रा दस्यू॑न्म॒ध्यंदिं॑नाद॒भीकें॑ ।

दु॒र्गे दुं॑रो॒णे क्रत्वा॒ न या॒तां पु॒रू स॒हस्रा॒ शर्वा॒ नि बं॑र्हीत् ॥३

अहं॑न् । इन्द्रः॑ । अदं॑हत् । अ॒ग्निः । इ॒न्दो॒ इतिं॑ । पु॒रा ।
दस्यू॑न् । म॒ध्यन्दिं॑नात् । अ॒भीकें॑ ।

दुः॒ऽगे । दु॒रो॒णे । क्रत्वां॑ । न । या॒ताम् । पु॒रु । स॒हस्रां॑ ।
शर्वा॑ । नि । ब॒र्ही॒त् ॥३

अहन् । इन्द्रः । अदहत् । अग्निः । इन्दो इति । पुरा ।
दस्यून् । मध्यन्दिनात् । अभीके ।

दुःऽगे । दुरोणे । क्रत्वा । न । याताम् । पुरु । सहस्रा ।
शर्वा । नि । बर्हीत् ॥३

हे “इन्दो सोम “अभीके संग्रामे “दस्यून् शत्रून् "इन्द्रः “अहन् अवधीत् । “अग्निः कांश्चिच्छत्रून् “अदहत् ददाह। कीदृशाविन्द्राग्नी। “मध्यंदिनात् मध्याह्नात् “पुरा पुरस्तात् पूर्वाह्ने तव पानात् लब्धबलाविति' शेषः। “यातां गच्छतामसुराणां “पुरु पुरूणि बहूनि सर्वा सर्वाणि निरवशेषाणि “सहस्रा सहस्राण्यपरिमितानि “नि “बर्हीत् न्यबर्हीत् । इन्द्रोऽवधीत् । तत्र दृष्टान्तः । “दुरोणे दुरवने रक्षितुमशक्ये "दुर्गे दुरवगाहे देशे “क्रत्वा “न कर्मणा स्वकीयं कार्यमुद्दिश्य गच्छतः पथिकान् यथा धनलोलुपश्चोरो हन्ति तद्वत् ॥

विश्वं॒स्मात्सीमध॒माँ इं॑द्र॒ दस्यू॒न्विशो॒ दासी॑रकृणोरप्रश॒स्ताः ।

अबां॑धेथा॒मम॑णतं॒ नि शत्रू॒नवि॑न्देथा॒मप॑चिति॒ं वधं॑त्रैः ॥४

विश्वंस्मात् । सी॒म् । अ॒ध॒मान् । इ॒न्द्र॒ । दस्यूंन् । विशः॑ ।
दासीः॑ । अ॒कृ॒णो॒ः । अ॒प्र॒ऽश॒स्ताः ।

अबांधेथाम् । अमृंणतम् । नि । शत्रूंन् । अविंन्देथाम् ।
अपंऽचितिम् । वधंत्रैः ॥४

विश्वस्मात् । सीम् । अधमान् । इन्द्र । दस्यून् । विशः ।
दासीः । अकृणोः । अप्रऽशस्ताः ।

अबाधेथाम् । अमृणतम् । नि । शत्रून् । अविन्देथाम् ।
अपऽचितिम् । वधत्रैः ॥४

हे “इन्द्र त्वं “सीम् एनान् “दस्यून् “विश्वस्मात् सर्वस्मात् गुणात् "अधमान् हीनान् “अकृणोः अकरोः । किंच “दासीः कर्महीनाः “विशः मानुषीः प्रजाः "अप्रशस्ताः गर्हिता अकृणोः । हे इन्द्रासोमौ युवां “शत्रून् "अबाधेथाम् । “नि "अमृणतं नितरां हिंसितवन्तौ । अपि च "वधत्रैः

तेषां शत्रूणां प्रहारैः "अपचितिं पूजां जनेभ्यः "अविन्देथाम् अलभेथाम् ॥

ए॒वा स॒त्यं मंघवाना यु॒वं तदिंद्रंश्च सोमो॒र्वमश्व्यं॒ गोः ।

आदंर्दृत॒मपिंहिता॒न्यश्नां रिरि॒चथुः॒ क्षाश्चिंत्ततृदा॒ना ॥५

ए॒व । स॒त्यम् । म॒घ॒ऽवा॒ना॒ । यु॒वम् । तत् । इन्द्रः॑ । च॒ । सो॒म॒ । ऊ॒र्वम् । अश्व्यंम् । गोः ।

आ । अ॒द॒र्दृ॒त॒म् । अपिंऽहितानि । अश्नां । रि॒रि॒चथुः॑ । क्षाः । चि॒त् । त॒तृ॒दा॒ना ॥५

एव । सत्यम् । मघऽवाना । युवम् । तत् । इन्द्रः । च । सोम । ऊर्वम् । अश्व्यम् । गोः ।

आ । अदर्दृतम् । अपिऽहितानि । अश्ना । रिरिचथुः । क्षाः । चित् । ततृदाना ॥५

हे "सोम त्वं च “इन्द्रश्च इति युवामुभौ “ऊर्वं महान्तम् “अश्व्यम् अश्वसमूहं “गोः गवां समूहं च “आदर्दृतम् आदरयतम् । “अपिहितानि पणिभिराच्छादितानि गवां वृन्दानि “क्षाश्चित् पणीनां

# ऋग्वेदः सूक्तं ४.२९

← सूक्तं ४.२८

ऋग्वेदः - मण्डल ४

सूक्तं ४.२९

वामदेवो गौतमः

सूक्तं ४.३० →

## दे. इन्द्रः। त्रिष्टुप्

आ न स्तुत उप वाजेभिरूती इन्द्र याहि हरिभिर्मन्दसानः ।

तिरश्चिदर्यः सवना पुरूण्याङ्गूषेभिर्गृणानः सत्यराधाः ॥१॥

आ हि ष्मा याति नर्यश्चिकित्वान्हूयमानः सोतृभिरुप यज्ञम् ।

स्वश्वो यो अभीरुर्मन्यमानः सुष्वाणेभिर्मदति सं ह वीरैः ॥२॥

श्रावयेदस्य कर्णा वाजयध्यै जुष्टामनु प्र दिशं मन्दयध्यै ।

उद्वावृषाणो राधसे तुविष्मान्करन्न इन्द्रः सुतीर्थाभयं च ॥३॥

अच्छा यो गन्ता नाधमानमूती इत्था विप्रं हवमानं गृणन्तम् ।

उप त्मनि दधानो धुर्याशून्सहस्राणि शतानि वज्रबाहुः ॥४॥

त्वोतासो मघवन्निन्द्र विप्रा वयं ते स्याम सूरयो गृणन्तः ।

भेजानासो बृहद्दिवस्य राय आकाय्यस्य दावने पुरुक्षोः ॥५॥

## सायणभाष्यम्

‘ आ नः स्तुतः' इति पञ्चर्चमष्टमं सूक्तं वामदेवस्यार्षं त्रैष्टुभमैन्द्रम्। आ नः स्तुतः इत्यनुक्रमणिका । विनियोगो लैङ्गिकः ॥

आ नः॑ स्तु॒त उप॒ वाजे॑भिरू॒ती इंद्र॑ या॒हि हरि॑भिर्मंदसा॒नः ।

ति॒रश्चि॑द॒र्यः सव॑ना पु॒रूण्या॑ङ्गू॒षेभि॑र्गृणा॒नः स॒त्यरा॑धाः ॥१

आ । नः॒ । स्तु॒तः । उप॑ । वाजे॑भिः । ऊ॒ती । इन्द्र॑ । या॒हि ।
हरि॑ऽभिः । म॒न्द॒सा॒नः ।

ति॒रः । चि॒त् । अ॒र्यः । सव॑ना । पु॒रूणि॑ । आ॒ङ्गू॒षेभिः॑ ।
गृ॒णा॒नः । स॒त्यऽरा॑धाः ॥१

आ । नः । स्तुतः । उप । वाजेभिः । ऊती । इन्द्र । याहि ।
हरिऽभिः । मन्दसानः ।

तिरः । चित् । अर्यः । सवना । पुरूणि । आङ्गूषेभिः ।
गृणानः । सत्यऽराधाः ॥१

हे “इन्द्र “स्तुतः त्वं "वाजेभिः वाजैरन्नैः सह "तिरश्चित् प्राप्तानि । ' तिरः सत इति प्राप्तस्य' ( निरु. ३. २० ) इति यास्कः । “पुरूणि पूर्णानि "सवना सवनानि “नः अस्मदीयान् यज्ञान “उप प्रति “ऊती ऊत्यै नोऽस्माकं रक्षणार्थं "हरिभिः अश्वैः “आ “याहि आगच्छ । कीदृशः । "मन्दसानः मोदमानः "अर्यः स्वामी “आङ्गूषेभिः स्तोत्रैः "गृणानः स्तूयमानः "सत्यराधाः सत्यधनः ॥

आ हि ष्मा॒ याति॒ नर्यां॑श्चिकि॒त्वान्हू॒यमां॑नः सो॒तृभि॒रुपं॑ य॒ज्ञं ।

स्वश्वो॒ यो अभी॑रु॒र्मन्यं॑मानः सुष्वा॒णेभि॒र्मदं॑ति॒ सं ह॑ वी॒रैः ॥ २

आ । हि । स्म॒ । याति॑ । नर्यः॑ । चि॒कि॒त्वान् । हू॒यमां॑नः । सो॒तृऽभिः॑ । उपं॑ । य॒ज्ञम् ।

सु॒ऽअश्वः॑ । यः । अभी॑रुः । मन्यं॑मानः । सु॒ऽस्वा॒नेभिः॑ । मदं॑ति । सम् । ह॒ । वी॒रैः ॥२

आ । हि । स्म । याति । नर्यः । चिकित्वान् । हूयमानः । सोतृऽभिः । उप । यज्ञम् ।

सुऽअश्वः । यः । अभीरुः । मन्यमानः । सुऽस्वानेभिः । मदति । सम् । ह । वीरैः ॥२

“नर्यः नृभ्यो हितः "चिकित्वान् सर्वं जानन् "सोतृभिः सोममभिषुण्वद्भिर्ऋत्विग्भिः "हूयमानः आहूयमान इन्द्रोऽस्मदीयं "यज्ञम् "उप प्रति "आ "याति आगच्छतु । “हि "स्म इति पूरणौ । “स्वश्वः शोभनाश्वोपेतः "अभीरुः निर्भयशीलः सुस्वानेभिः सुन्वद्भिर्यजमानैः "मन्यमानः स्तूयमानः "यः इन्द्रः "वीरैः शूरैर्मरुद्भिः सह "सं "मदति “ह सह माद्यत्येव। स इन्द्र आगच्छत्विति पूर्वेण संबन्धः ॥

श्रा॒वयेदं॑स्य॒ कर्णा॑ वाज॒यध्यै॒ जुष्टा॒मनु॒ प्र दिशं॑ मंद॒यध्यै॑ ।

उ॒द्वा॒वृ॒षा॒णो राधं॑से॒ तुविं॑ष्मा॒न्करं॑न्न॒ इंद्रः॑ सुती॒र्थाभं॑यं च ॥३

श्र॒वयं॑ । इत् । अ॒स्य॒ । कर्णा॑ । वा॒ज॒यध्यै॑ । जुष्टा॑म् । अनु॑ ।
प्र । दिशं॑म् । म॒न्द॒यध्यै॑ ।

उ॒त्ऽव॒वृ॒षा॒णः । राधं॑से । तुविं॑ष्मान् । करं॑त् । नः॒ । इन्द्रः॑ ।
सु॒ऽती॒र्था । अभं॑यम् । च॒ ॥३

श्रवय । इत् । अस्य । कर्णा । वाजयध्यै । जुष्टाम् । अनु ।
प्र । दिशम् । मन्दयध्यै ।

उत्ऽववृषाणः । राधसे । तुविष्मान् । करत् । नः । इन्द्रः ।
सुऽतीर्था । अभयम् । च ॥३

हे स्तोतः त्वम् "अस्य इन्द्रस्य संबन्धिनौ "कर्णा कर्णौ "वाजयध्यै इन्द्रं बलिनं कर्तुं "जुष्टामनु "दिशं सेवितासु सर्वासु दिक्षु “प्र “मन्दयध्यै प्रकर्षेणेन्द्रं मादयितुं च “श्रवय स्तोत्राणि श्रावय । "इत् इति पूरणः । “उद्धवृषाणः सोमेनोत्सिच्यमानः “तुविष्मान् बलवान् "इन्द्रः "नः अस्माकं “राधसे धनार्थं "सुतीर्था शोभनानि तीर्थानि "अभयं "च भयराहित्यं च "करत् करोतु ॥

अच्छा॒ यो गंता॒ नाधं॑मानमू॒ती इ॒त्था विप्रं॒ हवं॑मानं गृ॒णंतं॑ ।

उप॒ त्मनि॒ दधा॑नो धु॒र्या॒३॒॑शून्त्स॒हस्रा॑णि श॒ताति॒ वज्रं॑बाहुः ॥ ४

अच्छं॑ । यः । गन्ता॑ । नाधं॑मानम् । ऊ॒ती । इ॒त्था । विप्रं॑म् । हवं॑मानम् । गृ॒णन्तं॑म् ।

उपं । त्मनिं । दधांनः । धुरि । आ॒शून् । स॒हस्रांणि ।
श॒तानिं । वज्रंऽबाहुः ॥४

अच्छ । यः । गन्ता । नाधमानम् । ऊती । इत्था । विप्रम्
। हवमानम् । गृणन्तम् ।

उप । त्मनि । दधानः । धुरि । आशून् । सहस्राणि ।
शतानि । वज्रऽबाहुः ॥४

“वज्रबाहुः वज्रहस्तः "यः इन्द्रः “त्मनि आत्मनि स्थितानात्मवश्यान् "सहस्राणि सहस्रसंख्याकान् "शतानि शतसंख्याकान् "आशून् शीघ्रगामिनोऽश्वान् “धुरि रथवहनप्रदेशे "उप “दधानः संस्थापयन् “ऊती रक्षणार्थं "नाधमानं याचमानं "विप्रं मेधाविनं "हवमानम् आह्वयन्तम् "इत्था इत्थमनेन प्रकारेण "गृणन्तं स्तुवन्तं यजमानम् "अच्छ आभिमुख्येन "गन्ता गमनशीलः ।

भवतीति शेषः । स इन्द्रः सुतीर्थानि अभयं च करोत्विति पूर्वेण संबन्धः ॥

त्वोता॑सो मघवन्निंद्र॒ विप्रा॑ व॒यं ते॑ स्याम सू॒रयो॑ गृ॒णंतः॑ ।

भे॒जा॒नासो॑ बृ॒हद्दिं॑वस्य रा॒य आ॑का॒य्यं॑स्य दा॒वने॑ पु॒रु॒क्षोः ॥५

त्वाऽऊं॑तासः । म॒घ॒ऽव॒न् । इ॒न्द्र॒ । विप्राः॑ । व॒यम् । ते॒ ।
स्या॒म॒ । सू॒रयः॑ । गृ॒णन्तः॑ ।

भे॒जा॒नासः॑ । बृ॒हत्ऽदिं॑वस्य । रा॒यः । आ॒ऽका॒य्यं॑स्य ।
दा॒वने॑ । पु॒रु॒ऽक्षोः ॥५

त्वाऽऊतासः । मघऽवन् । इन्द्र । विप्राः । वयम् । ते ।
स्याम । सूरयः । गृणन्तः ।

भेजानासः । बृहत्ऽदिवस्य । रायः । आऽकाय्यस्य ।
दावने । पुरुऽक्षोः ॥५

हे "मघवन् धनवन् “इन्द्र “त्वोतासः त्वया रक्षिताः "विप्राः मेधाविनः “गृणन्तः त्वां स्तुवन्तः “सूरयः स्तोतारः "वयं बृहद्दिवस्य महद्दीप्तेः आकाय्यस्य आ समन्तात् स्तुत्यस्य "पुरुक्षोः बह्वन्नस्य बहुकीर्तेर्वा "ते त्वदीयस्य "रायः धनस्य “दावने दाने निमित्ते सति “भेजानासः त्वां भजमानाः “स्याम भवेम ॥ ॥ १८ ॥

# ऋग्वेदः सूक्तं ४.३०

← सूक्तं ४.२९

ऋग्वेदः - मण्डल ४

सूक्तं ४.३०

वामदेवो गौतमः

सूक्तं ४.३१ →

## दे. इन्द्रः, ९-११ इन्द्रौषसौ। गायत्री ८, २४ अनुष्टुप्

---

नकिरिन्द्र त्वदुत्तरो न ज्यायाँ अस्ति वृत्रहन् ।

नकिरेवा यथा त्वम् ॥१॥

सत्रा ते अनु कृष्टयो विश्वा चक्रेव वावृतुः ।

सत्रा महाँ असि श्रुतः ॥२॥

विश्वे चनेदना त्वा देवास इन्द्र युयुधुः ।

यदहा नक्तमातिरः ॥३॥

यत्रोत बाधितेभ्यश्चक्रं कुत्साय युध्यते ।

मुषाय इन्द्र सूर्यम् ॥४॥

यत्र देवाँ ऋघायतो विश्वाँ अयुध्य एक इत् ।

त्वमिन्द्र वनूँरहन् ॥५॥

यत्रोत मर्त्याय कमरिणा इन्द्र सूर्यम् ।

प्रावः शचीभिरेतशम् ॥६॥

किमादुतासि वृत्रहन्मघवन्मन्युमत्तमः ।

अत्राह दानुमातिरः ॥७॥

एतद्घेदुत वीर्यमिन्द्र चकर्थ पौंस्यम् ।

स्त्रियं यद्दुर्हणायुवं वधीर्दुहितरं दिवः ॥८॥

दिवश्चिद्घा दुहितरं महान्महीयमानाम् ।

उषासमिन्द्र सं पिणक् ॥९॥

अपोषा अनसः सरत्सम्पिष्टादह बिभ्युषी ।

नि यत्सीं शिश्नथद्वृषा ॥१०॥

एतदस्या अनः शये सुसम्पिष्टं विपाश्या ।

ससार सीं परावतः ॥११॥

उत सिन्धुं विबाल्यं वितस्थानामधि क्षमि ।

परि ष्ठा इन्द्र मायया ॥१२॥

उत शुष्णस्य धृष्णुया प्र मृक्षो अभि वेदनम् ।

पुरो यदस्य सम्पिणक् ॥१३॥

उत दासं कौलितरं बृहतः पर्वतादधि ।

अवाहन्निन्द्र शम्बरम् ॥१४॥

उत दासस्य वर्चिनः सहस्राणि शतावधीः ।

अधि पञ्च प्रधीँरिव ॥१५॥

उत त्यं पुत्रमग्रुवः परावृक्तं शतक्रतुः ।

उक्थेष्विन्द्र आभजत् ॥१६॥

उत त्या तुर्वशायदू अस्नातारा शचीपतिः ।

इन्द्रो विद्वाँ अपारयत् ॥१७॥

उत त्या सद्य आर्या सरयोरिन्द्र पारतः ।

अर्णाचित्ररथावधीः ॥१८॥

अनु द्वा जहिता नयोऽन्धं श्रोणं च वृत्रहन् ।

न तत्ते सुम्नमष्टवे ॥१९॥

शतमश्मन्मयीनां पुरामिन्द्रो व्यास्यत् ।

दिवोदासाय दाशुषे ॥२०॥

अस्वापयद्दभीतये सहस्रा त्रिंशतं हथैः ।

दासानामिन्द्रो मायया ॥२१॥

स घेदुतासि वृत्रहन्समान इन्द्र गोपतिः ।

यस्ता विश्वानि चिच्युषे ॥२२॥

उत नूनं यदिन्द्रियं करिष्या इन्द्र पौंस्यम् ।

अद्या नकिष्टदा मिनत् ॥२३॥

वामंवामं त आदुरे देवो ददात्वर्यमा ।

वामं पूषा वामं भगो वामं देवः करूळती ॥२४॥

**सायणभाष्यम्**

‘ नकिरिन्द्र ' इति चतुर्विंशत्यृचं नवमं सूक्तं वामदेवस्यार्षं गायत्रम् । अष्टमी चतुर्विंशी च द्वे अनुष्टुभौ । इन्द्रो देवता ।' दिवश्चिद्धा' इत्ययं तृच उषोदेवताक इन्द्रदेवताकश्च । तथा चानुक्रान्तं -- ‘नकिश्चतुर्विंशतिर्दिवश्चित्तृच उषस्यश्च गायत्रं ह्यष्टम्यन्त्ये चानुष्टुभौ ' इति । अतिरात्रे तृतीये पर्याये मैत्रावरुणशस्त्रे उत्तमावर्जमिदं सूक्तम् । तथा च सूत्रितं- नकिरिन्द्र त्वदुत्तर इत्युत्तमामुद्धरेत्' ( आश्व. श्रौ. ६. ४ ) इति ।।॥३॥

नकिंरिंद्र॒ त्वदुत्तं॑रो॒ न ज्यायाँ॑ अस्ति वृत्रहन् ।

नकिं॑रे॒वा यथा॒ त्वं ॥१

नकिः॑ । इ॒न्द्र॒ । त्वत् । उत्ऽत॑रः । न । ज्याया॑न् । अ॒स्ति॒ । वृ॒त्र॒ऽह॒न् ।

नकिः॑ । ए॒व । यथा॑ । त्वम् ॥१

नकिः । इन्द्र । त्वत् । उत्ऽतरः । न । ज्यायान् । अस्ति । वृत्रऽहन् ।

नकिः । एव । यथा । त्वम् ॥१

हे "वृत्रहन् "इन्द्र वृत्रस्य नाशकेन्द्र । लोके एकोऽपति शेषः । "त्वत् त्वत्तः "उत्तरः उत्कृष्टतरः “नकिः "अस्ति न भवति । त्वत्तः “ज्यायान् प्रशस्यतरः एकोऽपि "न अस्ति । हे इन्द्र “त्वं लोके "यथा प्रसिद्धो भवसि तथाविध एकोऽपि “नकिरेव अस्ति नैव भवति । कश्चिदपि लोके इन्द्रसदृशो नास्तीत्यर्थः ।।

स॒त्रा ते॒ अनु॑ कृ॒ष्टयो॒ विश्वा॑ च॒क्रेव॑ वावृतुः ।

स॒त्रा म॒हाँ अ॑सि श्रु॒तः ॥२

स॒त्रा । ते॒ । अनु॑ । कृ॒ष्टयः॑ । विश्वा॑ । च॒क्राऽइ॑व । व॒वृ॒तुः॒ ।

स॒त्रा । म॒हान् । अ॒सि॒ । श्रु॒तः ॥२

सत्रा । ते । अनु । कृष्टयः । विश्वा । चक्राऽइव । ववृतुः ।

सत्रा । महान् । असि । श्रुतः ॥२

हे इन्द्र "कृष्टयः प्रजाः "ते त्वाम् "अनु लक्षीकृत्य "सत्रा सत्यमेव “ववृतुः वर्तन्ते । तत्र दृष्टान्तः । “विश्वा विश्वानि व्याप्तानि "चक्रेव चक्राणीव । यथा चक्राणि शकटमनुवर्तन्ते तद्वत् । हे इन्द्र "महान् त्वं "सत्रा सत्यमेव “श्रुतः विश्रुतः "असि । गुणैः प्रख्यातो भवसि ॥

विश्वे॑ च॒नेद॒ना त्वा॑ दे॒वास॑ इंद्र युयुधुः ।

यदहा॒ नक्त॒मातिं॑रः ॥३

विश्वे॑ । च॒न । इत् । अ॒ना । त्वा॒ । दे॒वास॑ः । इ॒न्द्र॒ । यु॒यु॒धु॒ः ।

यत् । अहा॑ । नक्तं॑म् । आ । अतिं॑रः ॥३

विश्वे । चन । इत् । अना । त्वा । देवासः । इन्द्र । युयुधुः ।

यत् । अहा । नक्तम् । आ । अतिरः ॥३

हे “इन्द्र “विश्वे "चनेत् सर्वे एव "देवासः असुरान् विजिगीषवो देवाः "अना प्राणरूपेण बलेन “त्वा त्वां सहायं लब्ध्वा "युयुधुः असुरैः सह युद्धं चक्रुः । "यत् यस्मात् कारणात् "अहा अहःसु “नक्तं रात्रिषु च "आतिरः

आ समन्तात् शत्रूनवधीः । अतः कारणात् युयुधुरिति पूर्वेण संबन्धः ।

यत्रो॒त बा॑धि॒तेभ्यं॑श्च॒क्रं कुत्सा॑य॒ युध्यं॑ते ।

मु॒षा॒य इं॑द्र॒ सूर्यं॑ ॥४

यत्रं॑ । उ॒त । बा॒धि॒तेभ्यः॑ । च॒क्रम् । कुत्सा॑य । युध्यं॑ते ।

मु॒षा॒यः । इ॒न्द्र॒ । सूर्यं॑म् ॥४

यत्र । उत । बाधितेभ्यः । चक्रम् । कुत्साय । युध्यते ।

मुषायः । इन्द्र । सूर्यम् ॥४

"यत्र यस्मिन् युद्धे "उत अपि च हे "इन्द्र त्वं “बाधितेभ्यः कुत्ससहायेभ्यः "युध्यते युद्धं कुर्वते “कुत्साय च "सूर्यं

सूर्यसंबन्धि "चक्रं "मुषायः अमुष्णाः । अपहृतवानसीत्यर्थः । तस्मिन् युद्धे ‘प्रावः शचीभिरेतशम्' इति परेण संबन्धः ॥

यत्रं दे॒वाँ ऋं॑घाय॒तो विश्वाँ॒ अयुं॑ध्य॒ एक॒ इत् ।

त्वमिं॑द्र व॒नूँरहं॑न् ॥५

यत्रं । दे॒वान् । ऋ॒घा॒य॒तः । विश्वा॑न् । अयुं॑ध्यः । एकः॑ । इत् ।

त्वम् । इ॒न्द्र॒ । व॒नून् । अहं॑न् ॥५

यत्र । देवान् । ऋघायतः । विश्वान् । अयुध्यः । एकः । इत् ।

त्वम् । इन्द्र । वनून् । अहन् ॥५

हे "इन्द्र “त्वम् “एक "इत् असहाय एव "यत्र यस्मिन् संग्रामे “देवान् इन्द्रादीन् "ऋघायतः बाधमानान् "विश्वान् सर्वान् राक्षसादीन् "अयुध्यः युद्धमकरोः । तथा “वनृन् हिंसकान् "अहन् अवधीः ॥ ॥ १९ ॥

यत्रो॒त मर्त्या॑य॒ कमरि॑णा इंद्र॒ सूर्यं॑ ।

प्राव॒ः शची॑भि॒रेत॑शं ॥६

यत्र॑ । उ॒त । मर्त्या॑य । कम् । अरि॑णाः । इ॒न्द्र॒ । सूर्य॑म् ।

प्र । आ॒व॒ः । शची॑भिः । एत॑शम् ॥६

यत्र । उत । मर्त्याय । कम् । अरिणाः । इन्द्र । सूर्यम् ।

प्र । आवः । शचीभिः । एतशम् ॥६

“यत्र यस्मिन् संग्रामे “उत अपि च हे “इन्द्र त्वं "मर्त्याय मनुष्याय एतशाख्याय ऋषये "सूर्यम् “अरिणाः अहिंसीः । "कम् इति पूरणः । तदानीं "शचीभिः युद्धकर्मभिः "एतशम् एतत्संज्ञकमृषिं "प्रावः प्रकर्षेणारक्षः ।।॥ २ ॥

किमादुतासिं वृत्रहन्मघंवन्मन्युमत्तंमः ।

अत्राह दानुमातिंरः ॥७

किम् । आत् । उत । असि । वृत्रऽहन् । मघंऽवन् । मन्युमत्ऽतंमः ।

अत्रं । अहं । दानुंम् । आ । अतिरः ॥७

किम् । आत् । उत । असि । वृत्रऽहन् । मघऽवन् । मन्युमत्ऽतमः ।

अत्र । अह । दानुम् । आ । अतिरः ॥७

हे "वृत्रहन् वृत्राणामावरकाणां तमसां हन्तः "मघवन् धनवन् इन्द्र त्वम् "आत् अनन्तरमेव “उत अपि च । "किम् इति प्रश्ने । “मन्युमत्तमः "असि अत्यन्तं क्रोधवान् भवसि । “अत्र अस्मिन्नन्तरिक्षे "अह एव "दानुं दनोः पुत्रं वृत्रम् "आतिरः आ समन्तादहिंसीः ।।॥३॥

ए॒तद्घेदु॒त वी॒र्य१॒॑मिंद्रं॑ च॒कर्थ॒ पौंस्यं॑ ।

स्त्रियं॒ यद्दुं॑र्हणा॒युवं॒ वधीं॑र्दुहि॒तरं॑ दि॒वः ॥८

ए॒तत् । घ॒ । इत् । उ॒त । वी॒र्यं॑म् । इन्द्रं॑ । च॒कर्थं॑ । पौंस्यं॑म् ।

स्त्रियं॑म् । यत् । दुः॒ऽह॒ना॒युवं॑म् । वधीः॑ । दु॒हि॒तरं॑म् । दि॒वः ॥८

एतत् । घ । इत् । उत । वीर्यम् । इन्द्र । चकर्थ । पौंस्यम् ।

स्त्रियम् । यत् । दुःऽहनायुवम् । वधीः । दुहितरम् । दिवः ॥८

हे “इन्द्र “उत अपि च "यत् यस्त्वम् "एतत् उपलक्षितं "पौंस्यं बलं "वीर्यं सामर्थ्योपेतं "चकर्थ कृतवानसि । “घ "इत् इति पूरणौ। किंच “दुर्हणायुवं दुष्टं हननम् इच्छन्तीं “दिवः “दुहितरं द्युलोकसकाशादुत्पन्नां "स्त्रियम् उषसं “वधीः अवधीः ॥

दि॒वश्चि॑द्घा दुहि॒तरं॑ म॒हान्मं॑ही॒यमां॑नां ।

उ॒षासं॑मिंद्र॒ सं पिं॑णक् ॥९

दि॒वः । चि॒त् । घ॒ । दु॒हि॒तरं॑म् । म॒हान् । म॒ही॒यमां॑नाम् ।

उ॒षसं॑म् । इ॒न्द्र॒ । सम् । पि॒ण॒क् ॥९

दिवः । चित् । घ । दुहितरम् । महान् । महीयमानाम् ।

उषसम् । इन्द्र । सम् । पिणक् ॥९

हे "इन्द्र "महान् त्वं "दिवः "दुहितरं द्युलोकस्य पुत्रीं "महीयमानां पूज्यमानाम् "उषसम् उषोदेवीं “सं "पिणक् "चिद्ध संपिष्टवानसि खलु ।।

अपो॒षा अनं॑सः सर॒त्संपिं॑ष्टा॒दहं॑ बि॒भ्युषीं॑ ।

नि यत्सीं॑ शि॒श्नथ॒द्वृषां॑ ॥१०

अपं॑ । उ॒षाः । अनं॑सः । स॒र॒त् । सम्ऽपिं॑ष्टात् । अहं॑ । बि॒भ्युषीं॑ ।

नि । यत् । सी॒म् । शि॒श्नथ॑त् । वृषा॑ ॥१०

अप । उषाः । अनसः । सरत् । सम्ऽपिष्टात् । अह । बिभ्युषी ।

नि । यत् । सीम् । शिश्नथत् । वृषा ॥१०

“वृषा कामानां वर्षिता इन्द्रः "यत् यदा "सीम् एतत् उषसः संबन्धि शकटं “नि "शिश्नथत् न्यवधीत् तदा “उषाः उषोदेवता “बिभ्युषी इन्द्रसकाशात् भीता सती "संपिष्टात् इन्द्रेण संचूर्णितात् "अनसः शकटात् "अप "सरत् अपासरत् अपजगाम । "अह इति पूरणः ॥ ॥ २० ॥

ए॒तद॑स्या॒ अनः॑ शये॒ सुसं॑पिष्टं॒ विपा॒श्या ।

स॒सारं सीं परा॒वतः॑ ॥११

ए॒तत् । अ॒स्या॒ः । अनः॑ । श॒ये॒ । सु॒ऽसंम्पिष्टम् । वि॒ऽपां॑शि । आ ।

स॒सारं । सी॒म् । प॒रा॒ऽवतः॑ ॥११

एतत् । अस्याः । अनः । शये । सुऽसम्पिष्टम् । विऽपाशि । आ ।

ससार । सीम् । पराऽवतः ॥११

“सुसंपिष्टम् इन्द्रेण सुष्ठु संचूर्णितम् "अस्याः उषसः संबन्धि “एतत् "अनः शकटं “विपाशि । विपाडाख्या नदी । तस्यां तत्तीरे “आ “शये आ समन्तात् शेते अशेत । "सीम् इयमुषोदेवता शकटे भग्ने सति "परावतः दूरदेशात् "ससार अपससार ।।

उ॒त सिंधुं विबा॒ल्यं वितस्था॒नामधि॒ क्षमिं ।

परिं ष्ठा इंद्र मा॒ययां ॥१२

उ॒त । सिन्धुं॑म् । वि॒ऽबा॒ल्यं॑म् । वि॒ऽत॒स्था॒नाम् । अधिं । क्षमिं ।

परिं । स्था॒ः । इ॒न्द्र॒ । मा॒ययां ॥१२

उत । सिन्धुम् । विऽबाल्यम् । विऽतस्थानाम् । अधि । क्षमि ।

परि । स्थाः । इन्द्र । मायया ॥१२

हे “इन्द्र “उत अपि च "विबाल्यं विगतबाल्यावस्थां संपूर्णजलां "वितस्थानां वितिष्ठमानां “सिन्धुं नदीम् "अधि "क्षमि क्षमायां "मायया प्रज्ञया “परि “ष्ठाः पर्यस्थाः । सर्वतः स्थापनं कृतवानसि ॥

उ॒त शुष्णं॑स्य धृष्णु॒या प्र मृं॑क्षो अ॒भि वेदं॑नं ।

पुरो॒ यदं॑स्य संपि॒णक् ॥१३

उ॒त । शुष्णं॑स्य । धृष्णु॒ऽया । प्र । मृ॒क्षः॒ । अ॒भि । वेदं॑नम् ।

पुरः॑ । यत् । अ॒स्य॒ । स॒म्ऽपि॒णक् ॥१३

उत । शुष्णस्य । धृष्णुऽया । प्र । मृक्षः । अभि । वेदनम् ।

पुरः । यत् । अस्य । सम्ऽपिणक् ॥१३

“उत अपि च हे इन्द्र “धृष्णुया धृष्णुः धर्षकस्त्वं "शुष्णस्य शुष्णनाम्नोऽसुरस्य संबन्धि "वेदनं वित्तम् "अभि अभितः सर्वतः “प्र “मृक्षः प्रकर्षेणाबाधथाः। "यत् यदा "अस्य शुष्णस्य “पुरः पुराणि नगराणि "संपिणक् संपिष्टवानसि । तदा प्र मृक्षः इति संबन्धः ॥

उ॒त दा॒सं कौ॑लित॒रं बृ॑ह॒तः पर्व॑ता॒दधि॑ ।

अवा॑हन्निंद्र॒ शंब॑रं ॥१४

उ॒त । दा॒सम् । कौ॒लि॒ऽत॒रम् । बृ॒ह॒तः । पर्व॑तात् । अधि॑ ।

अव॑ । अ॒ह॒न् । इ॒न्द्र॒ । शम्ब॑रम् ॥१४

उत । दासम् । कौलिऽतरम् । बृहतः । पर्वतात् । अधि ।

अव । अहन् । इन्द्र । शम्बरम् ॥१४

“उत अपि च हे "इन्द्र त्वं "दासम् उपक्षपयितारं "कौलितरं कुलितरनाम्नोऽपत्यं “शम्बरम् असुरं "बृहतः महतः पर्वतात् अद्रेः "अधि उपरि "अव अवाचीनं कृत्वा "अहन् हतवानसि ॥

उ॒त दा॒सस्यं व॒र्चिनः॑ स॒हस्रा॑णि श॒तावं॑धीः ।

अधि॒ पंचं प्र॒धीँरिंव ॥१५

उ॒त । दा॒सस्यं । व॒र्चिनः॑ । स॒हस्रा॑णि । श॒ता । अ॒व॒धी॒ः ।

अधिं । पञ्चं । प्र॒धीन्ऽइंव ॥१५

उत । दासस्य । वर्चिनः । सहस्राणि । शता । अवधीः ।

अधि । पञ्च । प्रधीन्ऽइव ॥१५

“उत अपि च हे इन्द्र त्वं “प्रधीनिव चक्रस्य परितः स्थितान् शङ्कूनिव हिंसकान् "पञ्च “शता पञ्चशतानि पञ्चशतसंख्याकान् "सहस्राणि सहस्रसंख्याकान् "दासस्य लोकानामुपक्षपयितुः "वर्चिनः

वर्चिनामकस्यासुरस्य संबन्धिनोऽनुचरान् पुरुषान् "अधि अधिकम् "अवधीः हतवानसि ॥ ॥ २१ ॥

उ॒त त्यं पु॒त्रम॒ग्रुव॒ः परा॑वृक्तं श॒तक्र॑तुः ।

उ॒क्थेष्विं॑द्र॒ आभ॑जत् ॥१६

उ॒त । त्यम् । पु॒त्रम् । अ॒ग्रुवः॑ । परा॑ऽवृक्तम् । श॒तऽक्र॑तुः ।

उ॒क्थेषु॑ । इन्द्रः॑ । आ । अ॒भ॒ज॒त् ॥१६

उत । त्यम् । पुत्रम् । अग्रुवः । पराऽवृक्तम् । शतऽक्रतुः ।

उक्थेषु । इन्द्रः । आ । अभजत् ॥१६

"उत अपि च "शतक्रतुः शतकर्मा "इन्द्रः “त्यं तं प्रसिद्धम् "अग्रुवः एतन्नाम्न्याः "पुत्रं "परावृक्तम् एतन्नामकम्

"उक्थेषु स्तोत्रेषु "आभजत् भागिनं कृतवान् । अयमर्थः 'वम्रीभिः पुत्रमग्रुवः ' ( ऋ. सं. ४. १९. ९) इत्यस्यामृचि प्रतिपादित इति ॥

उ॒त त्या तु॒र्वशा॒यदूं अस्ना॒तारा॒ शची॒पतिः॑ ।

इंद्रों वि॒द्वाँ अंपारयत् ॥१७

उ॒त । त्या । तु॒र्वशा॒यदू॒ इतिं । अ॒स्ना॒तारां । शची॒ऽ॒पतिः॑ ।

इन्द्रः॑ । वि॒द्वान् । अ॒पा॒र॒य॒त् ॥१७

उत । त्या । तुर्वशायदू इति । अस्नातारा । शचीऽपतिः ।

इन्द्रः । विद्वान् । अपारयत् ॥१७

उत अपि च "अस्नातारा अस्नातारौ ययातिशापादनभिषिक्तौ "त्या त्यौ तौ प्रसिद्धौ “तुर्वशायदू तुर्वशनामानं यदुनामकं च राजानौ “शचीपतिः कर्मणां पालकः । यद्वा शचीन्द्रस्य भार्या । तस्याः पतिर्भर्ता "विद्वान् सकलमपि जानन् “इन्द्रः "अपारयत् अभिषेकार्हावकरोत् ।

उ॒त त्या स॒द्य आर्या॑ स॒रयो॑रिंद्र पा॒रतः॑ ।

अर्णा॑चि॒त्ररं॑थावधीः ॥१८

उ॒त । त्या । स॒द्यः । आर्या॑ । स॒रयोः॑ । इ॒न्द्र॒ । पा॒रतः॑ ।

अर्णा॑चि॒त्ररं॑था । अ॒व॒धी॒ः ॥१८

उत । त्या । सद्यः । आर्या । सरयोः । इन्द्र । पारतः ।

अर्णाचित्ररथा । अवधीः ॥१८

“उत अपि च "सद्यः सपदि हे “इन्द्र त्वं “त्या त्यौ तौ "आर्या आर्यौ आर्यत्वाभिमानिनौ सन्तावपि । इन्द्रविषयभक्तिश्रद्धारहितावित्यर्थः । "सरयोः सरय्वा नद्याः “पारतः पारे तीरे वसन्तौ “अर्णाचित्ररथा अर्णनामकं चित्ररथनामकं च राजानौ “अवधीः अहिंसीः ।।

अनु॒ द्वा जं॑हि॒ता नं॑यो॒ऽधं श्रो॒णं चं॑ वृत्रहन् ।

न तत्तें सु॒म्नमष्टं॑वे ॥१९

अनुं । द्वा । ज॒हि॒ता । न॒यः॒ । अ॒न्धम् । श्रो॒णम् । च॒ । वृ॒त्र॒ऽह॒न् ।

न । तत् । ते॒ । सु॒म्नम् । अष्टं॑वे ॥१९

अनु । द्वा । जहिता । नयः । अन्धम् । श्रोणम् । च ।
वृत्रऽहन् ।

न । तत् । ते । सुम्नम् । अष्टवे ॥१९

हे "वृत्रहन् वृत्रस्य हिंसकेन्द्र त्वं "जहिता जहितौ सर्वैर्बन्धुभिस्त्यक्तौ "अन्धं चक्षुर्हीनमेकं “श्रोणं “च पङ्गुमपरं च "द्वा एतौ द्वौ “अनु "नयः अन्धपङ्गुत्वपरिहारेण अनुनीतवानसि । हे इन्द्र "ते त्वया दत्तं "तत् "सुम्नं सुखम् "अष्टवे व्याप्तुं कोऽपि "न । प्रभवतीति शेषः ॥

श॒तमं॑श्म॒न्मयी॑नां पु॒रामिंद्रो॒ व्यां॑स्यत् ।

दिवो॑दासाय दा॒शुषे॑ ॥२०

श॒तम् । अ॒श्म॒न्ऽमयी॑नाम् । पु॒राम् । इन्द्रः॑ । वि । आ॒स्य॒त्
।

दिवः॑ऽदासाय । दा॒शुषे॑ ॥२०

शतम् । अश्मन्ऽमयीनाम् । पुराम् । इन्द्रः । वि । आस्यत्
।

दिवःऽदासाय । दाशुषे ॥२०

“इन्द्रः "अश्मन्मयीनां पाषाणैर्निर्मितानां "पुरां शम्बरस्य संबन्धिनां नगराणां “शतं शतसंख्याकं “दिवोदासाय एतन्नामकाय "दाशुषे हविर्दत्तवते यजमानाय “व्यास्यत् व्यक्षिपत् ॥ ॥ २२ ॥

अस्वा॑पयद्द॒भीत॑ये स॒हस्रा॑ त्रिं॒शत॒ं हथैः॑ ।

दा॒साना॒मिंद्रों मा॒ययां ॥२१

अस्वांपयत् । द॒भीतंये । स॒हस्रां । त्रिं॒शतंम् । हथैः ।

दा॒सानांम् । इन्द्रः । मा॒ययां ॥२१

अस्वापयत् । दभीतये । सहस्रा । त्रिंशतम् । हथैः ।

दासानाम् । इन्द्रः । मायया ॥२१

"इन्द्रो "मायया स्वकीयया शक्त्या "दासानां लोकानामुपक्षपयितॄणां राक्षसादीनां "त्रिंशतं त्रिंशत्संख्याकानि "सहस्रा सहस्राणि “दभीतये दभीतिनामकस्यार्थाय "हथैः हननसाधनैरायुधैः “अस्वापयत् अवधीत् ॥

स घेदु॒तासिं वृत्रहन्त्समा॒न इं॑द्र॒ गोपंतिः ।

यस्ता विश्वांनि चिच्युषे ॥२२

सः । घ । इत् । उत । असि । वृत्रऽहन् । समानः । इन्द्र । गोऽपंतिः ।

यः । ता । विश्वांनि । चिच्युषे ॥२२

सः । घ । इत् । उत । असि । वृत्रऽहन् । समानः । इन्द्र । गोऽपतिः ।

यः । ता । विश्वानि । चिच्युषे ॥२२

“उत अपि च हे "इन्द्र "यः त्वं "ता तानि "विश्वानि समस्तान् शत्रून् 'चिच्युषे प्राच्यावयः । हे "वृत्रहन् वृत्राणां शत्रूणां हिंसकेन्द्र “गोपतिः गवां पालकः "सः त्वं "समानः सर्वेषां यजमानानां समः सन् प्रख्यातः असि । "घेत् इति पूरणौ ॥

उ॒त नू॒नं यदिं॑द्रि॒यं क॑रि॒ष्या इं॑द्र॒ पौंस्यं॑ ।

अ॒द्या नकि॒ष्टदा मिंनत् ॥२३

उ॒त । नू॒नम् । यत् । इ॒न्द्रि॒यम् । क॒रि॒ष्याः । इ॒न्द्र॒ । पौंस्यं॑म् ।

अ॒द्य । नकिः॑ । तत् । आ । मि॒न॒त् ॥२३

उत । नूनम् । यत् । इन्द्रियम् । करिष्याः । इन्द्र । पौंस्यम् ।

अद्य । नकिः । तत् । आ । मिनत् ॥२३

“उत अपि च हे "इन्द्र "यत् “पौंस्यं त्वदीयं बलम् "इन्द्रियं सामर्थ्योपेतं "नूनं "करिष्याः कृतवानसि खलु । "अद्य

अद्यतनः कश्चित् "तत् बलं "नकिः “आ “मिनत् न हिंस्यात् ।।

वा॒मंवा॑मं त आदुरे दे॒वो द॑दात्वर्य॒मा ।

वा॒मं पू॒षा वा॒मं भगो॑ वा॒मं दे॒वः करू॑ळती ॥२४

व॒मम्ऽवा॑मम् । ते॒ । आ॒ऽदु॒रे॒ । दे॒वः । द॒दा॒तु॒ । अ॒र्य॒मा ।

वा॒मम् । पू॒षा । वा॒मम् । भगः॑ । वा॒मम् । दे॒वः । करू॑ळती ॥२४

वममम्ऽवामम् । ते । आऽदुरे । देवः । ददातु । अर्यमा ।

वामम् । पूषा । वामम् । भगः । वामम् । देवः । करूळती ॥२४

हे "आदुरे शत्रूणाम् आदारयितरिन्द्र "ते तव "वामंवामं यद्यत् वननीयं संभजनीयं धनमस्ति लोके तद्वामं वसु "अर्यमा अरीणां नियमयिता एतन्नामकः "देवो "ददातु प्रयच्छतु। तथा "करूळती कृत्तदन्तः "पूषा पोषकः "देवः "वामं धनं ददातु । तथा "भगः अपि "वामं धनं ददातु । ननु करूळतीत्येतत् संनिहितत्वाद्भग इत्यनेन संबन्धनीयम् । अथवा अर्यमादीनां त्रयाणामपि विशेषणत्वेन भाव्यम् । कथं पूष्णो विशेषणं स्यादिति साकाङ्क्षत्वात् । न । सांनिध्याकाङ्क्षयोः सद्भावेऽपि योग्यतामन्तरेण अन्वयायोगात् । तस्मात् पूषा प्रपिष्टभागोऽदन्तको हि' (तै. सं. २. ६. ८. ५) इत्यादिश्रुतिषु पूष्ण एवादन्तकत्वेन प्रसिद्धेः व्यवहितस्यापि तस्यैव विशेषणत्वं युक्तम् । वामं बननीयं भवति' (निरु. ६. ३१) इत्यादि निरुक्तमत्र द्रष्टव्यम् ॥ ॥ २३ ॥

# ऋग्वेदः सूक्तं ४.३१



दे. इन्द्रः। गायत्री, ३ पादनिचृत्

अग्निष्टोमे चातुर्विंशिकेहनि च माध्यंदिने सवने मैत्रावरुणसय कया नः इत्याद्स्तृचः स्तोत्रियः(आश्व.श्रौ. ७.७)। वरुणप्रघासेषु कायस्य हविषः अनुवाक्या( आश्व.श्रौ. २.१७)

---

कया नश्चित्र आ भुवदूती सदावृधः सखा ।

कया शचिष्ठया वृता ॥१॥

कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदन्धसः ।

दृळ्हा चिदारुजे वसु ॥२॥

अभी षु णः सखीनामविता जरितृणाम् ।

शतं भवास्यूतिभिः ॥३॥

अभी न आ ववृत्स्व चक्रं न वृत्तमर्वतः ।

नियुद्भिश्चर्षणीनाम् ॥४॥

प्रवता हि क्रतूनामा हा पदेव गच्छसि ।

अभक्षि सूर्ये सचा ॥५॥

सं यत्त इन्द्र मन्यवः सं चक्राणि दधन्विरे ।

अध त्वे अध सूर्ये ॥६॥

उत स्मा हि त्वामाहुरिन्मघवानं शचीपते ।

दातारमविदीधयुम् ॥७॥

उत स्मा सद्य इत्परि शशमानाय सुन्वते ।

पुरू चिन्मंहसे वसु ॥८॥

नहि ष्मा ते शतं चन राधो वरन्त आमुरः ।

न च्यौत्नानि करिष्यतः ॥९॥

अस्माँ अवन्तु ते शतमस्मान्सहस्रमूतयः ।

अस्मान्विश्वा अभिष्टयः ॥१०॥

अस्माँ इहा वृणीष्व सख्याय स्वस्तये ।

महो राये दिवित्मते ॥११॥

अस्माँ अविड्ढि विश्वहेन्द्र राया परीणसा ।

अस्मान्विश्वाभिरूतिभिः ॥१२॥

अस्मभ्यं ताँ अपा वृधि व्रजाँ अस्तेव गोमतः ।

नवाभिरिन्द्रोतिभिः ॥१३॥

अस्माकं धृष्णुया रथो द्युमाँ इन्द्रानपच्युतः ।

गव्युरश्वयुरीयते ॥१४॥

अस्माकमुत्तमं कृधि श्रवो देवेषु सूर्य ।

वर्षिष्ठं द्यामिवोपरि ॥१५॥

## सायणभाष्यम्

‘ कया नः' इति पञ्चदशर्चं दशमं सूक्तं वामदेवस्यार्षमैन्द्रं गायत्रम् । “ अभी षु णः' इत्येषा पादनिचृन्नाम गायत्री ' त्रयः सप्तकाः पादनिचृत्' (अनु. ४. ४ ) इति तल्लक्षणयुक्तत्वात् । तथा चानुक्रमणिका- ‘कया पञ्चोनाभी षु पादनिचृत्' इति । सूक्तविनियोगो लैङ्गिकः । अग्निष्टोमे चातुर्विंशिकेऽहनि च माध्यंदिने सवने मैत्रावरुणस्य ‘कया नः' इत्याद्यस्तृचः स्तोत्रियः । सूत्रितं

च--- ‘ होत्रकाणां कया नश्चित्र आ भुवत् ' ( आश्व. श्रौ. ७. ४ ) इति । वरुणप्रघासेषु कायस्य हविषः अनुवाक्या ‘कया नः' इत्येषा । तथा च सूत्रितं-- कया नश्चित्र आ भुवद्धिरण्यगर्भः समवर्तताग्रे' ( आश्व. श्रौ. २. १७) इति ॥

कयां नश्चि॒त्र आ भुंवदू॒ती स॒दावृंध॒ः सखां ।

कया॒ शचिंष्ठया वृ॒ता ॥१

कयां । न॒ः । चि॒त्रः । आ । भु॒व॒त् । ऊ॒ती । स॒दाऽवृंधः । सखां ।

कयां । शचिंष्ठया । वृ॒ता ॥१

कया । नः । चित्रः । आ । भुवत् । ऊती । सदाऽवृधः । सखा ।

कया । शचिष्ठया । वृता ॥१

“सदावृधः सदा वर्धमानः "चित्रः चायनीयः पूजनीयः "सखा मित्रभूत इन्द्रः “कया "उती ऊत्या तर्पणेन "नः अस्मान् “आ “भुवत् आभिमुख्येन भवेत् । "शचिष्ठया प्रज्ञावत्तमया प्रज्ञासहितमनुष्ठीयमानेन "कया “वृता केन वर्तनेन कर्मणा चाभिमुखो भवेत् ॥

कस्त्वां स॒त्यो मदां॑ना॒ं मंहिं॑ष्ठो मत्स॒दंधंसः ।

दृ॒ळ्हा चिंदा॒रुजे॒ वसुं ॥२

कः । त्वा॒ । स॒त्यः । मदा॑नाम् । मंहि॑ष्ठः । म॒त्स॒त् ।
अन्ध॑सः ।

दृ॒ळ्हा । चि॒त् । आ॒ऽरुजे॑ । वसु॑ ॥२

कः । त्वा । सत्यः । मदानाम् । मंहिष्ठः । मत्सत् ।
अन्धसः ।

दृळ्हा । चित् । आऽरुजे । वसु ॥२

“मंहिष्ठः पूजनीयः “सत्यः सत्यभूतः “मदानां मादयितॄणां मध्ये “कः मदकरः “अन्धसः सोमस्य रसः “दृळ्हा “चित् दृढान्यपि "वसु वसूनि शत्रूणां धनानि "आरुजे आ समन्तात् भङ्क्तुं हे इन्द्र “त्वा त्वां “मत्सत् मादयेत् ॥

अ॒भी षु ण॒: सखी॑नामवि॒ता ज॑रितॄ॒णां ।

श॒तं भ॑वास्यू॒तिभि॑: ॥३

अ॒भि । सु । न॒: । सखी॑नाम् । अ॒वि॒ता । ज॒रि॒तॄ॒णाम् ।

श॒तम् । भ॒वा॒सि॒ । ऊ॒तिऽभि॑: ॥३

अभि । सु । नः । सखीनाम् । अविता । जरितॄणाम् ।

शतम् । भवासि । ऊतिऽभिः ॥३

हे इन्द्र त्वं “सखीनां समानख्यातीनां “जरितॄणां स्तोतॄणाम् “अविता रक्षिता त्वं “शतं शतेन बह्वीभिः "ऊतिभिः

रक्षाभिः सह “नः अस्माकं "सु सुष्ठु “अभि “भवासि अभिमुखो भव ॥

अ॒भी न॒ आ व॑वृत्स्व च॒क्रं न वृ॒त्तमर्व॑तः ।

नि॒युद्भि॑श्चर्षणी॒नां ॥४

अ॒भि । न॒ः । आ । व॒वृ॒त्स्व॒ । च॒क्रम् । न । वृ॒त्तम् । अर्व॑तः ।

नि॒युत्ऽभि॑ः । च॒र्ष॒णी॒नाम् ॥४

अभि । नः । आ । ववृत्स्व । चक्रम् । न । वृत्तम् । अर्वतः ।

नियुत्ऽभिः । चर्षणीनाम् ॥४

हे इन्द्र त्वं “वृत्तं “चक्रं “न वर्तमानं चक्रमिव “अर्वतः उपगन्तॄन् “नः अस्मान् “चर्षणीनाम् अस्मदीयानां मनुष्याणां “नियुद्भिः स्तुतिभिः "अभि “आ “ववृत्स्व अभ्यावर्तस्व ॥

प्र॒वता॒ हि क्रतूं॒ना॒मा हां प॒देव॒ गच्छंसि ।

अभां॑क्षि॒ सूर्ये॒ सचां ॥५

प्र॒ऽवतां । हि । क्रतूंनाम् । आ । ह॒ । प॒दाऽइंव । गच्छंसि ।

अभां॑क्षि । सूर्ये॑ । सचां ॥५

प्रऽवता । हि । क्रतूनाम् । आ । ह । पदाऽइव । गच्छसि ।

अभक्षि । सूर्ये । सचा ॥५

हे इन्द्र त्वं “क्रतूनां कर्मणां यजमानानां संबन्धिनः “प्रवता प्रवतः प्रवणान् देशान् "पदेव पदानि स्वकीयानि स्थानानीव “आ “गच्छसि “हि आगतो भवसि खलु। “ह इति पूरणः । हे इन्द्र त्वामहं “सूर्ये सूर्येण "सचा सह “अभक्षि भजे ॥ ॥ २४ ॥

सं यत्तं इंद्र म॒न्यव॒: सं च॒क्राणिं दधन्वि॒रे ।

अध॒ त्वे अध॒ सूर्ये॑ ॥६

सम् । यत् । ते॒ । इ॒न्द्र॒ । म॒न्यवः॑ । सम् । च॒क्राणि॑ ।
द॒ध॒न्वि॒रे ।

अध॑ । त्वे इति॑ । अध॑ । सूर्ये॑ ॥६

सम् । यत् । ते । इन्द्र । मन्यवः । सम् । चक्राणि ।
दधन्विरे ।

अध । त्वे इति । अध । सूर्ये ॥६

हे “इन्द्र “ते त्वदर्थं “मन्यवः स्तुतयः “यत् यदा “सं “दधन्विरे अस्माभिरनुमन्यन्ते । “चक्राणि चङ्क्रमणानि कर्माणि च "सं दधन्विरे । “अध तदानीं ताः स्तुतयः तानि कर्माणि च “त्वे त्वयि भवन्ति । “अध तदनन्तरं "सूर्ये च भवन्ति ।।

उ॒त स्मा॒ हि त्वामा॒हुरिन्म॒घवा॑नं शचीपते ।

दाता॑र॒मविं॑दीधयुं ॥७

उ॒त । स्म॒ । हि । त्वाम् । आ॒हुः । इत् । म॒घऽवा॑नम् ।
श॒ची॒ऽप॒ते॒ ।

दाता॑रम् । अविं॑ऽदीधयुम् ॥७

उत । स्म । हि । त्वाम् । आहुः । इत् । मघऽवानम् ।
शचीऽपते ।

दातारम् । अविऽदीधयुम् ॥७

हे “शचीपते कर्मपालकेन्द्र “उत अपि च “मघवानं धनवन्तं “दातारं स्तोतृभ्योऽभीष्टप्रदं त्वा “त्वाम् “अविदीधयुम् । विदीधयुः अदीप्यमानः । न विदीधयुः अविदीधयुः । तं दीप्यमानम् “आहुः “स्म प्रवदन्ति खलु । “हि “इत् इति द्वयं पूरणार्थम् ।।॥३॥

उ॒त स्मां स॒द्य इत्परिं शशमा॒नायं सुन्व॒ते ।

पु॒रू चिंन्मंहसे॒ वसुं ॥८

उ॒त । स्म॒ । स॒द्यः । इत् । परिं । श॒श॒मा॒नायं । सु॒न्व॒ते ।

पु॒रु । चि॒त् । मं॒ह॒से॒ । वसुं ॥८

उत । स्म । सद्यः । इत् । परि । शशमानाय । सुन्वते ।

पुरु । चित् । मंहसे । वसु ॥८

“उत अपि च हे इन्द्र त्वं “सद्य “इत् सद्य एव “शशमानाय स्तुतिं कुर्वते । शशमानः शंसमानः ' ( निरु. ६. ८) इति यास्केनोक्तत्वात् । “सुन्वते सोमाभिषवं कुर्वते यजमानाय “पुरु “चित् पुरूणि बहून्यपि “वसु वसूनि धनानि “परि परितः "मंहसे "स्म प्रयच्छसि खलु ॥

न॒हि ष्मा॑ ते श॒तं च॒न राधो॒ वरं॑त आ॒मुरः॑ ।

न च्यौ॒त्नानिं करिष्य॒तः ॥९

न॒हि । स्म॒ । ते॒ । श॒तम् । च॒न । राधः॑ । वरं॑न्ते । आ॒ऽमुरः॑ ।

न । च्यौ॒त्नानिं । क॒रि॒ष्य॒तः ॥९

नहि । स्म । ते । शतम् । चन । राधः । वरन्ते । आऽमुरः ।

न । च्यौत्नानि । करिष्यतः ॥९

हे इन्द्र "आमुरः बाधका राक्षसादयः "ते त्वदीयं “शतं “चन शतपरिमितमपि “राधः धनं “नहि “वरन्ते “स्म न वारयन्ति खलु । किंच शत्रूणां हिंसनं “करिष्यतः तव “च्यौत्नानि बलानि “न वारयन्ति ।

अ॒स्माँ अ॑वंतु ते श॒तम॒स्मान्त्स॒हस्र॑मू॒तयः॑ ।

अ॒स्मान्विश्वा॑ अ॒भिष्ट॑यः ॥१०

अ॒स्मान् । अ॒व॒न्तु॒ । ते॒ । श॒तम् । अ॒स्मान् । स॒हस्र॑म् । ऊ॒तयः॑ ।

अ॒स्मान् । विश्वाः᳚ । अ॒भिष्ट॑यः ॥१०

अस्मान् । अवन्तु । ते । शतम् । अस्मान् । सहस्रम् । ऊतयः ।

अस्मान् । विश्वाः । अभिष्टयः ॥१०

हे इन्द्र “ते त्वदीयाः “शतं शतसंख्याकाः “ऊतयः रक्षाः “अस्मान् “अवन्तु रक्षन्तु । “सहस्रं सहस्रसंख्याकास्त्वदीया रक्षाः “अस्मान् अवन्तु । “विश्वाः सर्वाणि “अभिष्टयः त्वदीयान्यभिगमनानि "अस्मान् अवन्तु ॥ ॥ २५ ॥

अ॒स्माँ इ॒हा वृ॑णीष्व स॒ख्याय॑ स्व॒स्तये॑ ।

म॒हो रा॒ये दि॒वित्मंते ॥११

अ॒स्मान् । इ॒ह । वृ॒णी॒ष्व॒ । स॒ख्यायं । स्व॒स्तयें ।

म॒हः । रा॒ये । दि॒वित्मंते ॥११

अस्मान् । इह । वृणीष्व । सख्याय । स्वस्तये ।

महः । राये । दिवित्मते ॥११

हे इन्द्र त्वम् “इह अस्मिन् यज्ञे “अस्मान् यजमानान् “सख्याय सखिभावाय “स्वस्तये अविनाशाय च “महः महते "दिवित्मते दीप्तिमते "राये धनाय च "वृणीष्व संभजस्व ॥

अ॒स्माँ अ॑विड्ढि वि॒श्वहें॑द्र॑ रा॒या परी॑णसा ।

अ॒स्मान्विश्वा॑भिरू॒तिभि॑ः ॥१२

अ॒स्मान् । अ॒वि॒ड्ढि॒ । वि॒श्वहा॑ । इन्द्र॑ । रा॒या । परी॑णसा ।

अ॒स्मान् । विश्वा॑भिः । ऊ॒तिऽभि॑ः ॥१२

अस्मान् । अविड्ढि । विश्वहा । इन्द्र । राया । परीणसा ।

अस्मान् । विश्वाभिः । ऊतिऽभिः ॥१२

हे “इन्द्र त्वं “विश्वहा सर्वेष्वहःसु "परीणसा महता “राया धनेन “अस्मान् यजमानान् “अविड्ढि रक्ष । किंच

“विश्वाभिः सर्वाभिः “ऊतिभिः रक्षाभिः “अस्मान् अविड्ढि ॥

अ॒स्मभ्यं॒ ताँ अपा वृधि व्र॒जाँ अस्तेव॒ गोमंतः ।

नवाभिरिंद्रो॒तिभिः ॥१३

अ॒स्मभ्यं॑म् । तान् । अपं । वृ॒धि॒ । व्र॒जान् । अस्तांऽइव । गोऽमंतः ।

नवाभिः । इ॒न्द्र॒ । ऊ॒तिऽभिः ॥१३

अस्मभ्यम् । तान् । अप । वृधि । व्रजान् । अस्ताऽइव । गोऽमतः ।

नवाभिः । इन्द्र । ऊतिऽभिः ॥१३

हे "इन्द्र त्वं "नवाभिः नूतनाभिः “ऊतिभिः रक्षाभिः "अस्तेव क्षेप्ता शूर इव “गोमतः गोभिः युक्तान “तान् प्रसिद्धान् “व्रजान् गोनिवासान् “अस्मभ्यम् "अपा “वृधि उद्घाटय ॥

अ॒स्माकं॑ धृष्णु॒या रथो॑ द्यु॒माँ इं॒द्रान॑पच्युतः ।

ग॒व्युरं॑श्व॒युरीं॑यते ॥१४

अ॒स्माक॑म् । धृ॒ष्णु॒ऽया । रथः॑ । द्यु॒ऽमान् । इ॒न्द्र॒ । अन॑पऽच्युतः ।

ग॒व्युः । अ॒श्व॒ऽयुः । ई॒य॒ते॒ ॥१४

अस्माकम् । धृष्णुऽया । रथः । द्युऽमान् । इन्द्र । अनपऽच्युतः ।

गव्युः । अश्वऽयुः । ईयते ॥१४

हे “इन्द्र “धृष्णुया धृष्णुः शत्रूणां धर्षकः "द्युमान् दीप्तिमान् "अनपच्युतः विनाशरहितः “गव्युः गोमान् “अश्वयुः अश्ववान् “अस्माकम् अस्मत्संबन्धी “रथः “ईयते सर्वत्र गच्छतु । तेन रथेनास्मान् रक्षेत्यर्थः ॥

‘ अस्माकमुत्तमं कृधि ' इत्यनया आदित्यं दृष्ट्वा रथादवरोहेत् । तथा च सूत्रितम्- अस्माकमुत्तमं कृधीत्यादित्यमीक्षमाणो जपित्वावरोहेत् ' ( आश्व. गृ. २. ६. १२ ) इति ।।

अ॒स्माकं॑मुत्त॒मं कृ॑धि॒ श्रवो॑ दे॒वेषु॑ सूर्य ।

वर्षि॑ष्ठं॒ द्यामि॑वो॒परि॑ ॥१५

अ॒स्माक॑म् । उ॒त्ऽत॒मम् । कृ॒धि॒ । श्रवः॑ । दे॒वेषु॑ । सू॒र्य॒ ।

वर्षि॑ष्ठम् । द्याम्ऽइ॑व । उ॒परि॑ ॥१५

अस्माकम् । उत्ऽतमम् । कृधि । श्रवः । देवेषु । सूर्य ।

वर्षिष्ठम् । द्याम्ऽइव । उपरि ॥१५

हे सूर्य सर्वस्य प्रेरकेन्द्र हे आदित्य वा त्वं “देवेषु द्योतमानेषु वह्न्यादिषु मध्ये “अस्माकम् अस्मत्संबन्धि “श्रवः यशः “उत्तमम् उत्कृष्टं “कृधि कुरु । तत्र दृष्टान्तः । “वर्षिष्ठम् अतिशयेन प्रवृद्धं सेचनसमर्थं वा “द्यामिव

द्युलोकं यथा सर्वेषां लोकानाम् “उपरि स्थितमुत्कृष्टमकरोस्तद्वत् ॥ ॥ २६ ॥

**टिप्पणी**

वाचस्सामनी द्वे-महावामदेव्यम्  (ग्रामगेयः)

सर्पसाम कल्माषं वा वामदेव्यम्  (आरण्यकम्)

पञ्चनिधनं वामदेव्यम्  (आरण्यकम्)

वामदेव्यम्  (ऊहगानम्)

# ऋग्वेदः सूक्तं ४.३२


ऋग्वेदः - मण्डल ४

← सूक्तं ४.३१

सूक्तं ४.३२

सूक्तं ४.३३ →

वामदेवो गौतमः


दे. इन्द्रः, २३-२४ इन्द्राश्वौ। गायत्री

आ तू न इन्द्र वृत्रहन्नस्माकमर्धमा गहि ।

महान्महीभिरूतिभिः ॥१॥

भृमिश्चिद्घासि तूतुजिरा चित्र चित्रिणीष्वा ।

चित्रं कृणोष्यूतये ॥२॥

दभ्रेभिश्चिच्छशीयांसं हंसि व्राधन्तमोजसा ।

सखिभिर्ये त्वे सचा ॥३॥

वयमिन्द्र त्वे सचा वयं त्वाभि नोनुमः ।

अस्माँअस्माँ इदुदव ॥४॥

स नश्चित्राभिरद्रिवोऽनवद्याभिरूतिभिः ।

अनाधृष्टाभिरा गहि ॥५॥

भूयामो षु त्वावतः सखाय इन्द्र गोमतः ।

युजो वाजाय घृष्वये ॥६॥

त्वं ह्येक ईशिष इन्द्र वाजस्य गोमतः ।

स नो यन्धि महीमिषम् ॥७॥

न त्वा वरन्ते अन्यथा यद्दित्ससि स्तुतो मघम् ।

स्तोतृभ्य इन्द्र गिर्वणः ॥८॥

अभि त्वा गोतमा गिरानूषत प्र दावने ।

इन्द्र वाजाय घृष्वये ॥९॥

प्र ते वोचाम वीर्या या मन्दसान आरुजः ।

पुरो दासीरभीत्य ॥१०॥

ता ते गृणन्ति वेधसो यानि चकर्थ पौंस्या ।

सुतेष्विन्द्र गिर्वणः ॥११॥

अवीवृधन्त गोतमा इन्द्र त्वे स्तोमवाहसः ।

ऐषु धा वीरवद्यशः ॥१२॥

यच्चिद्धि शश्वतामसीन्द्र साधारणस्त्वम् ।

तं त्वा वयं हवामहे ॥१३॥

अर्वाचीनो वसो भवास्मे सु मत्स्वान्धसः ।

सोमानामिन्द्र सोमपाः ॥१४॥

अस्माकं त्वा मतीनामा स्तोम इन्द्र यच्छतु ।

अर्वागा वर्तया हरी ॥१५॥

पुरोळाशं च नो घसो जोषयासे गिरश्च नः ।

वधूयुरिव योषणाम् ॥१६॥

सहस्रं व्यतीनां युक्तानामिन्द्रमीमहे ।

शतं सोमस्य खार्यः ॥१७॥

सहस्रा ते शता वयं गवामा च्यावयामसि ।

अस्मत्रा राध एतु ते ॥१८॥

दश ते कलशानां हिरण्यानामधीमहि ।

भूरिदा असि वृत्रहन् ॥१९॥

भूरिदा भूरि देहि नो मा दभ्रं भूर्या भर ।

भूरि घेदिन्द्र दित्ससि ॥२०॥

भूरिदा ह्यसि श्रुतः पुरुत्रा शूर वृत्रहन् ।

आ नो भजस्व राधसि ॥२१॥

प्र ते बभ्रू विचक्षण शंसामि गोषणो नपात् ।

माभ्यां गा अनु शिश्रथः ॥२२॥

कनीनकेव विद्रधे नवे द्रुपदे अर्भके ।

बभ्रू यामेषु शोभेते ॥२३॥

अरं म उस्रयाम्णेऽरमनुस्रयाम्णे ।

बभ्रू यामेष्वस्रिधा ॥२४॥

## सायणभाष्यम्

‘ आ तू न इन्द्र' इति चतुर्विंशत्यृचमेकादशं सूक्तं वामदेवस्यार्षं गायत्रमैन्द्रम् । अन्त्ये 'कनीनकेव ' इत्यादिके द्वे इन्द्रस्याश्वदेवताके। तथा चानुक्रान्तम्-’ आ तू नश्चतुर्विंशतिरन्त्याभ्यामिन्द्राश्वौ स्तुतौ ' इति । गतो विनियोगः ॥

आ तू नं इंद्र वृत्रहन्न॒स्माकं॑म॒र्धमा गं॑हि ।

म॒हान्म॒हीभिं॑रू॒तिभिः॑ ॥१

आ । तु । न॒ः । इ॒न्द्र॒ । वृ॒त्र॒ऽह॒न् । अ॒स्माक॑म् । अ॒र्धम् । आ । ग॒हि॒ ।

म॒हान् । म॒हीभि॑ः । ऊ॒तिऽभि॑ः ॥१

आ । तु । नः । इन्द्र । वृत्रऽहन् । अस्माकम् । अर्धम् । आ । गहि ।

महान् । महीभिः । ऊतिऽभिः ॥१

हे “वृत्रहन् वृत्राणां शत्रूणां हिंसक “इन्द्र त्वं “नः अस्मान् प्रति “तु क्षिप्रम् “आ गच्छ । हे इन्द्र “महान् प्रभूतस्त्वं “महीभिः महतीभिः “ऊतिभिः रक्षभिः सह “अस्माकमर्धं समीपम् “आ “गहि आगच्छ ।।

भृमिं॑श्चिद्घासि॒ तूतु॑जि॒रा चि॑त्र चि॒त्रिणी॒ष्वा ।

चि॒त्रं कृ॑णोष्यू॒तये॑ ॥२

भृमि॑ः । चि॒त् । घ॒ । अ॒सि॒ । तूतु॑जिः । आ । चि॒त्र॒ । चि॒त्रिणी॑षु । आ ।

चि॒त्रम् । कृ॒णो॒षि॒ । ऊ॒तये॑ ॥२

भृमिः । चित् । घ । असि । तूतुजिः । आ । चित्र । चित्रिणीषु । आ ।

चित्रम् । कृणोषि । ऊतये ॥२

हे “चित्र चायनीय पूजनीयेन्द्र त्वं “भृमिश्चित् भ्रमणशीलोऽपि “तूतुजिः “धासि अस्मदभीष्टप्रदाता च भवसि । आकारश्चार्थे । “चित्रिणीषु चित्रकर्मयुक्तास्वस्मद्रूपासु प्रजासु “चित्रं चायनीयं धनम् “ऊतये रक्षणाय “आ “कृणोषि आ समन्तात् करोषि । घ इति पूरणः ॥

द॒भ्रेभि॑श्चि॒च्छशी॑यांसं॒ हंसि॒ व्राध॑न्त॒मोज॑सा ।

सखि॑भि॒र्ये त्वे सचा॑ ॥३

द॒भ्रेभिः॑ । चि॒त् । शशी॑यांसम् । हंसि॑ । व्राध॑न्तम् । ओज॑सा ।

सखि॑ऽभिः । ये । त्वे इति॑ । सचा॑ ॥३

दभ्रेभिः । चित् । शशीयांसम् । हंसि । व्राधन्तम् । ओजसा ।

सखिऽभिः । ये । त्वे इति । सचा ॥३

हे इन्द्र त्वं “दभ्रेभिश्चित् अल्पैरपि “सखिभिः यजमानैः सह “शशीयांसम् । ‘शश प्लुतगतौ । उत्प्लवमानं “व्राधन्तं महान्तमपि शत्रुम् “ओजसा बलेन “हंसि नाशयसि । "ये यजमानाः “त्वे त्वयि “सचा संगताः । तैरिति पूर्वेण संबन्धः ॥

व॒यमिं॑द्र॒ त्वे सचा॑ व॒यं त्वा॒भि नो॑नुमः ।

अ॒स्माँअं॑स्मा॒ँ इदुदं॑व ॥४

व॒यम् । इ॒न्द्र॒ । त्वे इति॑ । सचा॑ । व॒यम् । त्वा॒ । अ॒भि ।
नो॒नु॒म॒ः ।

अ॒स्मान्ऽअ॑स्मान् । इत् । उत् । अ॒व॒ ॥४

वयम् । इन्द्र । त्वे इति । सचा । वयम् । त्वा । अभि ।
नोनुमः ।

अस्मान्ऽअस्मान् । इत् । उत् । अव ॥४

हे “इन्द्र “वयं यजमाना: “त्वे त्वयि “सचा संगताः स्मः । “वयं “त्वा त्वाम् “अभि ”नोनुमः अतिशयेनाभिष्टुमः । हे इन्द्र त्वमपि "अस्मानस्मानित् सर्वानस्मानेव "उदव उत्कर्षेण रक्ष ॥

स नं॑श्चि॒त्राभि॑रद्रिवोऽनव॒द्याभि॑रू॒तिभिः॑ ।

अनां॑धृष्टाभि॒रा गं॑हि ॥५

सः । न॒ः । चि॒त्राभिः॑ । अ॒द्रि॒ऽव॒ः । अ॒न॒व॒द्याभिः॑ ।
ऊ॒तिऽभिः॑ ।

अनां॑धृष्टाभिः । आ । ग॒हि॒ ॥५

सः । नः । चित्राभिः । अद्रिऽवः । अनवद्याभिः ।
ऊतिऽभिः ।

अनाधृष्टाभिः । आ । गहि ॥५

हे “अद्रिवः वज्रवन्निन्द्र “सः त्वं “चित्राभिः चायनीयाभिः "अनवद्याभिः अनिन्दिताभिः "अनाधृष्टाभिः शत्रुभिरप्रधर्षितैः “ऊतिभिः रक्षणैः सहितः सन् “नः अस्मान् “आ “गहि आगच्छ ॥ ॥ २७ ॥

भू॒यामो॒ षु त्वावं॑तः॒ सखा॑य इं॒द्र गोमं॑तः ।

युजो॒ वाजा॑य॒ घृष्वं॑ये ॥६

भू॒यामो॒ इति॑ । सु । त्वाऽवं॑तः । सखा॑यः । इ॒न्द्र॒ । गोऽमं॑तः ।

युजः॑ । वाजा॑य । घृष्वं॑ये ॥६

भूयामो इति । सु । त्वाऽवतः । सखायः । इन्द्र । गोऽमतः ।

युजः । वाजाय । घृष्वये ॥६

हे "इन्द्र “त्वावतः त्वत्सदृशस्य “गोमतः गोभिर्युक्तस्य देवस्य संबन्धिनः “सखायः स्तोतारो वयं “घृष्वये महते “वाजाय अन्नाय "युजः संयुक्ताः "सु सुष्ठु "भूयामो भवामैव ॥

त्वं ह्येक॒ ईशिंष॒ इंद्र॒ वाजंस्य॒ गोमंतः ।

स नों यंधि म॒हीमिषं ॥७

त्वम् । हि । एकः॑ । ईशिंषे । इन्द्रं । वाजंस्य । गोऽमंतः ।

सः । न॒ः । य॒न्धि॒ । म॒हीम् । इषंम् ॥७

त्वम् । हि । एकः । ईशिषे । इन्द्र । वाजस्य । गोऽमतः ।

सः । नः । यन्धि । महीम् । इषम् ॥७

हे “इन्द्र “हि यस्मात् कारणात् “त्वम् “एकः एव “गोमतः गोभिर्युक्तस्य “वाजस्य अन्नस्य “ईशिषे प्रभवसि । अतः कारणात् “सः त्वं “नः अस्मभ्यं “महीं महतीम् “इषम् अन्नं “यन्धि प्रयच्छ ।

न त्वां वरंते अ॒न्यथा॒ यद्दित्संसि स्तु॒तो म॒घं ।

स्तो॒तृभ्यं इंद्र गिर्वणः ॥८

न । त्वा॒ । व॒र॒न्ते॒ । अ॒न्यथा॑ । यत् । दित्स॑सि । स्तु॒तः ।
म॒घम् ।

स्तो॒तृऽभ्यः॑ । इ॒न्द्र॒ । गि॒र्व॒ण॒ः ॥८

न । त्वा । वरन्ते । अन्यथा । यत् । दित्ससि । स्तुतः ।
मघम् ।

स्तोतृऽभ्यः । इन्द्र । गिर्वणः ॥८

हे “इन्द्र “गिर्वणः गिरां संभक्तः "स्तुतः अस्माभिः संस्तुतः “यत् यदा “स्तोतृभ्यः अस्मभ्यं “मघं धनं “दित्ससि दातुमिच्छसि । तदा “त्वा त्वाम् “अन्यथा प्रकारान्तरेण “न “वरन्ते न निवारयन्ति । किंतु सर्वेऽप्यनुकूला एव भवन्ति ।

अ॒भि त्वा॒ गोत॑मा गि॒रानू॑षत॒ प्र दा॒वने॑ ।

इंद्र॒ वाजा॑य॒ घृष्व॑ये ॥९

अ॒भि । त्वा॒ । गोत॑माः । गि॒रा । अनू॑षत । प्र । दा॒वने॑ ।

इन्द्र॑ । वाजा॑य । घृष्व॑ये ॥९

अभि । त्वा । गोतमाः । गिरा । अनूषत । प्र । दावने ।

इन्द्र । वाजाय । घृष्वये ॥९

हे 'इन्द्र “त्वा त्वाम् "अभि लक्षीकृत्य “गोतमाः एतन्नामका ऋषयः “गिरा स्तुतिरूपया वाचा “दावने धनदानार्थं “प्र

“अनूषत प्रकर्षेण स्तुवन्ति । “घृष्वये महते “वाजाय अन्नाय प्रस्तुवन्ति ॥

प्र तें वोचाम वी॒र्या॒३॒ या मंदसा॒न आरुंजः ।

पुरो॒ दासीं॑र॒भीत्यं ॥१०

प्र । ते॒ । वो॒चा॒म॒ । वी॒र्या॑ । याः । म॒न्द॒सा॒नः । आ । अरु॑जः ।

पुरः॑ । दासीः॑ । अ॒भि॒ऽइत्यं ॥१०

प्र । ते । वोचाम । वीर्या । याः । मन्दसानः । आ । अरुजः ।

पुरः । दासीः । अभिऽइत्य ॥१०

हे इन्द्र “मन्दसानः - सोमेन मोदमानस्त्वं “दासीः क्षेप्तुरसुरस्य स्वभूताः “याः “पुरः यानि नगराणि "अभीत्य अभिगम्य “आ “अरुजः आ समन्तात् अभाङ्क्षीः । हे इन्द्र “ते त्वदीयानि तत्रत्यानि “वीर्या वीर्याणि वयं स्तोतारः “प्र “वोचाम प्रकर्षेण वदाम ॥ ॥ २८ ॥

ता तें गृणंति वे॒धसो॒ यानिं च॒कर्थ॒ पौंस्यां ।

सु॒तेष्विंद्र गिर्वणः ॥११

ता । ते॒ । गृ॒ण॒न्ति॒ । वे॒धसः॑ । यानिं । च॒कर्थं । पौंस्यां ।

सु॒तेषुं । इ॒न्द्र॒ । गि॒र्व॒णः॒ ॥११

ता । ते । गृणन्ति । वेधसः । यानि । चकर्थ । पौंस्या ।

सुतेषु । इन्द्र । गिर्वणः ॥११

हे “इन्द्र “गिर्वणः गिरां स्तुतिरूपाणां वाचां संभक्ता त्वं “यानि “पौंस्या पौंस्यानि बलानि “चकर्थ कृतवानसि । हे इन्द्र "वेधसः प्राज्ञाः “सुतेषु अभिषुतेषु सोमेषु “ते त्वदीयानि “ता तानि बलानि “गृणन्ति कीर्तयन्ति ॥

अवींवृधंत॒ गोतं॑मा॒ इंद्र॒ त्वे स्तोमं॑वाहसः ।

ऐषुं धा वी॒रव॒द्यशः॑ ॥१२

अवींवृधन्त । गोतं॑माः । इन्द्रं । त्वे इतिं । स्तोमं॑ऽवाहसः ।

आ । ए॒षु॒ । धाः॒ । वी॒रऽवं॑त् । यशः॑ ॥१२

अवीवृधन्त । गोतमाः । इन्द्र । त्वे इति । स्तोमऽवाहसः ।

आ । एषु । धाः । वीरऽवत् । यशः ॥१२

“स्तोमवाहसः स्तोमानां स्तोत्राणां वोढारः “गोतमाः ऋषयो हे “इन्द्र “त्वे त्वाम् “अवीवृधन्त स्तोत्रैर्वर्धयन्ति । त्वम् “एषु गोतमेषु "वीरवत् पुत्रपौत्रादियुक्तं “यशः अन्नम् “आ “धाः निधेहि ॥

यच्चि॒द्धि शश्वं॑ता॒मसींद्र॒ साधां॑रण॒स्त्वं ।

तं त्वां॑ व॒यं हं॑वामहे ॥१३

यत् । चि॒त् । हि । शश्व॑ताम् । असि॑ । इन्द्र॑ । साधा॑रणः । त्वम् ।

तम् । त्वा॒ । व॒यम् । ह॒वा॒म॒हे॒ ॥१३

यत् । चित् । हि । शश्वताम् । असि । इन्द्र । साधारणः । त्वम् ।

तम् । त्वा । वयम् । हवामहे ॥१३

हे “इन्द्र “त्वं “यच्चिद्धि यद्यपि खलु “शश्वतां बहूनां सर्वेषां यजमानानां “साधारणः “असि सामान्यो भवसि । तथापि "तम् एव “त्वा त्वां “वयं स्तोतारः "हवामहे आह्वयामः ॥

अ॒र्वा॒ची॒नो व॑सो भवा॒स्मे सु म॒त्स्वांध॑सः ।

सोमा॑नामिंद्र सोमपाः ॥१४

अ॒र्वा॒ची॒नः । व॒सो॒ इति॑ । भ॒व॒ । अ॒स्मे इति॑ । सु । म॒त्स्व॒ । अन्ध॑सः ।

सोमा॑नाम् । इ॒न्द्र॒ । सो॒म॒ऽपाः॒ ॥१४

अर्वाचीनः । वसो इति । भव । अस्मे इति । सु । मत्स्व । अन्धसः ।

सोमानाम् । इन्द्र । सोमऽपाः ॥१४

हे “वसो यज्ञनिवासक इन्द्र त्वम् “अस्मे अस्मासु यजमानेषु “अर्वाचीनः अभिमुखः “भव । तथा हे "सोमपाः सोमानां पातः “इन्द्र त्वं “सोमानाम् “अन्धसः अन्नेन “सु सुष्ठु “मत्स्व माद्य ॥

अ॒स्माकं॑ त्वा मती॒नामा स्तोम॑ इंद्र यच्छतु ।

अ॒र्वागा व॑र्तया॒ हरीं॑ ॥१५

अ॒स्माक॑म् । त्वा॒ । म॒ती॒नाम् । आ । स्तोम॑ः । इ॒न्द्र॒ । य॒च्छ॒तु॒ ।

अ॒र्वाक् । आ । व॒र्त॒य॒ । हरी॒ इति॑ ॥१५

अस्माकम् । त्वा । मतीनाम् । आ । स्तोमः । इन्द्र । यच्छतु ।

अर्वाक् । आ । वर्तय । हरी इति ॥१५

“मतीनां स्तोतॄणाम् ॥ मन्यतेः कर्तरि क्तिच् ॥ "अस्माकं संबन्धि “स्तोमः स्तोत्रं हे "इन्द्र “त्वा त्वाम् "आ "यच्छतु अस्मासु नियच्छतु । त्वमपि “हरी त्वदीयावश्वौ “अर्वाक् अस्मदभिमुखं यथा भवति तथा “आ “वर्तय परिवर्तनं कुरु ॥

पु॒रो॒ळाशं॑ च नो॒ घसो॑ जो॒षयां॑से॒ गिर॑श्च नः ।

व॒धू॒युरि॑व॒ योष॑णां ॥१६

पु॒रो॒ळाश॑म् । च॒ । न॒ः । घस॑ः । जो॒षयां॑से । गिर॑ः । च॒ । न॒ः ।

व॒धू॒युः॑ऽइ॑व । योष॑णाम् ॥१६

पुरोळाशम् । च । नः । घसः । जोषयासे । गिरः । च । नः ।

वधूयुःऽइव । योषणाम् ॥१६

हे इन्द्र त्वं “नः अस्मदीयं “पुरोळाशं “च पुरोडाशरूपमन्नं च “घसः अद्धि । तथा “नः अस्मदीयाः “गिरश्च स्तुतिरूपा वाचश्च “जोषयासे सेवस्व । तत्र दृष्टान्तः । “वधूयुरिव । स्त्रीकामो यथा “योषणां स्त्रीणां गिरः सेवते तद्वत् ॥ ॥ २९ ॥

स॒हस्र॒ं व्यतींनां यु॒क्ताना॒मिंद्रंमीमहे ।

श॒तं सोमंस्य खा॒र्यः॑ ॥१७

स॒हस्रं॑म् । व्यती॑नाम् । यु॒क्ताना॑म् । इन्द्रं॑म् । ई॒म॒हे॒ ।

श॒तम् । सोमं॑स्य । खा॒र्यः॑ ॥१७

सहस्रम् । व्यतीनाम् । युक्तानाम् । इन्द्रम् । ईमहे ।

शतम् । सोमस्य । खार्यः ॥१७

वयं स्तोतारः “इन्द्रं परमैश्वर्ययुक्तं "युक्तानां शिक्षितानां “व्यतीनां गमनवतामश्वानां “सहस्रं सहस्रसंख्याकम् “ईमहे याचामहे । तथा “सोमस्य अभिषुतसोमस्य “शतं शतसंख्याकाः “खार्यः खारीः ईमहे द्रोणकलशान् याचामहे। अत्र मानविशेषवाचिना खारीशब्देन द्रोणकलश उपलक्ष्यते । अपरिमितद्रोणकलशान् बहून् यज्ञान् याचामह इत्यर्थः ॥

स॒हस्रा॑ ते श॒ता व॒यं गवा॒मा च्या॑वयामसि ।

अ॒स्म॒त्रा राध॑ एतु ते ॥१८

स॒हस्रा॑ । ते॒ । श॒ता । व॒यम् । गवा॑म् । आ । च्य॒व॒या॒म॒सि॒ ।

अ॒स्म॒ऽत्रा । राध॑ः । ए॒तु॒ । ते॒ ॥१८

सहस्रा । ते । शता । वयम् । गवाम् । आ । च्यवयामसि ।

अस्मऽत्रा । राधः । एतु । ते ॥१८

हे इन्द्र "ते त्वदीयानि “गवां “सहस्रा सहस्रसंख्याकानि “शता शतसंख्याकानि च “आ “च्यावयामसि

आच्यावयामः । अस्मदभिमुखं कुर्मः। तथा “अस्मत्रा अस्मासु त्वदीयं “राधः धनं “ते त्वत्तः “एतु आगच्छतु ।।

दशं ते क॒लशांना॒ं हिरंण्यानामधीमहि ।

भू॒रि॒दा अंसि वृत्रहन् ॥१९

दशं । ते॒ । क॒लशांनाम् । हिरंण्यानाम् । अ॒धी॒म॒हि॒ ।

भू॒रि॒ऽदाः । अ॒सि॒ । वृ॒त्र॒ऽह॒न् ॥१९

दश । ते । कलशानाम् । हिरण्यानाम् । अधीमहि ।

भूरिऽदाः । असि । वृत्रऽहन् ॥१९

हे इन्द्र “ते त्वत्तः “कलशानां कुम्भानाम् । कुम्भपरिमितानामिति यावत् । “हिरण्यानां हितरमणीयानां धनानां “दश दशसंख्याकानि “अधीमहि धारयामः । हे “वृत्रहन् वृत्राणां शत्रूणां हिंसकेन्द्र त्वं “भूरिदाः “असि बहुप्रदो भवसि ॥

भूरिंदा भूरिं देहि नो मा दभ्रं भूर्या भंर ।

भूरि घेदिंद्र दित्ससि ॥२०

भूरिंऽदाः । भूरिं । देहि । नः । मा । दभ्रम् । भूरिं । आ । भर ।

भूरिं । घ । इत् । इन्द्र । दित्ससि ॥२०

भूरिऽदाः । भूरि । देहि । नः । मा । दभ्रम् । भूरि । आ । भर ।

भूरि । घ । इत् । इन्द्र । दित्ससि ॥२०

हे "इन्द्र "भूरिदाः बहुप्रदस्त्वं "भूरि बहु धनं "नः अस्मभ्यं "देहि प्रयच्छ । किंतु "दभ्रम् अल्पं धनं "मा प्रयच्छ । "भूरि बहुलं धनमस्मभ्यम् "आ "भर आहर । किंच "भूरि "इत् अदभ्रमेव धनं "दित्ससि "घ अस्मभ्यं दातुमिच्छसि खलु ॥

भूरिदा ह्यसिं श्रुतः पुंरुत्रा शूंर वृत्रहन् ।

आ नों भजस्व राधंसि ॥२१

भूरि॒ऽदाः । हि । असिं । श्रु॒तः । पु॒रु॒ऽत्रा । शू॒र॒ । वृ॒त्र॒ऽह॒न् ।

आ । न॒ः । भ॒ज॒स्व॒ । राधंसि ॥२१

भूरिऽदाः । हि । असि । श्रुतः । पुरुऽत्रा । शूर । वृत्रऽहन् ।

आ । नः । भजस्व । राधसि ॥२१

हे “वृत्रहन् वृत्रस्य हिंसक “शूर विक्रान्तेन्द्र "भूरिदाः बहुप्रदस्त्वं “पुरुत्रा पुरुषु बहुषु यजमानेषु "श्रुतः “असि “हि विख्यातो भवसि खलु । “राधसि धने "नः अस्मान् "आ "भजस्व ॥ समन्तात् भागिनः कुरु ।।

प्र तें ब॒भ्रू विंचक्षण॒ शंसांमि गोषणो नपात् ।

माभ्या॒ं गा अनु॑ शिश्रथः ॥२२

प्र । ते॒ । ब॒भ्रू इति॑ । वि॒ऽच॒क्ष॒ण॒ । शंसा॑मि । गो॒ऽस॒न॒ः । न॒पा॒त् ।

मा । आ॒भ्या॒म् । गाः । अनु॑ । शि॒श्र॒थ॒ः ॥२२

प्र । ते । बभ्रू इति । विऽचक्षण । शंसामि । गोऽसनः । नपात् ।

मा । आभ्याम् । गाः । अनु । शिश्रथः ॥२२

हे “विचक्षण प्राज्ञेन्द्र “ते त्वदीयौ “बभ्रू बभ्रुवर्णावश्वौ “प्र “शंसामि प्रकर्षेण स्तौमि । हे “गोसनः गवां सनितः हे “नपात् न पातयितः स्तोतॄनविनाशयितः । किंतु पालयितरित्यर्थः । हे इन्द्र त्वम् “आभ्यां

त्वदीयाभ्यामश्वाभ्यां “गा “अनु अस्मदीया गा लक्षीकृत्य “मा “शिश्रथः विनष्टा मा कार्षीः । गावोऽश्वदर्शनात् विश्लिष्यन्ते । तन्मा भूदित्यर्थः ॥

क॒नी॒न॒केव॑ विद्र॒धे नवे॑ द्रुप॒दे अ॑र्भ॒के ।

ब॒भ्रू यामे॑षु शोभेते ॥२३

क॒नी॒न॒काऽइ॑व । वि॒द्र॒धे । नवे॑ । द्रु॒ऽप॒दे । अ॒र्भ॒के ।

ब॒भ्रू इति॑ । यामे॑षु । शो॒भे॒ते॒ इति॑ ॥२३

कनीनकाऽइव । विद्रधे । नवे । द्रुऽपदे । अर्भके ।

बभ्रू इति । यामेषु । शोभेते इति ॥२३

“विद्रधे विदृढे व्यूढे “नवे नवजाते “अर्भके अल्पके “द्रुपदे दुमाख्यस्थाने स्थिते “कनीनकेव कमनीये शालभञ्जिके इव हे इन्द्र “बभ्रू बभ्रुवर्णौ त्वदीयावश्वौ “यामेषु यज्ञेषु “शोभेते कान्तियुक्तौ भवतः ॥ ‘ कनीनके कन्यके । कन्या कमनीया भवति क्वेयं नेतव्येति वा कमनेनानीयत इति बा कनतेर्वा स्यात् कान्तिकर्मणः ' ( निरु. ४. १५) इत्यादि निरुक्तम् ।।

अरं॑ म उ॒स्रया॒म्णेऽर॒मनुं॑स्रयाम्णे ।

ब॒भ्रू यामें॑ष्व॒स्रिधां॑ ॥२४

अरं॑म् । मे॒ । उ॒स्रऽयां॑म्ने । अरं॑म् । अनुं॑स्रऽयाम्ने ।

ब॒भ्रू इतिं॑ । यामें॑षु । अ॒स्रिधां॑ ॥२४

अरम् । मे । उस्रऽयाम्ने । अरम् । अनुस्रऽयाम्ने ।

बभ्रू इति । यामेषु । अस्रिधा ॥२४

हे इन्द्र “अस्रिधा अस्रिधावहिंसकौ "बभ्रू बभ्रुवर्णौ त्वदीयावश्वौ “यामेषु गमनेषु प्राप्तेषु सत्सु “उस्रयाम्णे । उस्राभ्यामनडुद्भ्यां युक्तेन रथेन यातीत्युस्रयामा । तस्मै “मे मह्यम् "अरम् अलं पर्याप्तकारिणौ भवताम् । अनुस्रयाम्णे पद्भ्यामेव गच्छते मह्यम् "अरं पर्याप्तकारिणौ भवताम् ।। ॥ ३० ॥ ॥ ३ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।

पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ।।

इति
श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्क
भूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये
वेदार्थप्रकाशे ऋक्संहिताभाष्ये तृतीयाष्टके षष्ठोऽध्यायः
समाप्तः ।।

# ऋग्वेदः सूक्तं ४.३३



## दे. ऋभवः। त्रिष्टुप्

---

प्र ऋभुभ्यो दूतमिव वाचमिष्य उपस्तिरे श्वैतरीं धेनुमीळे ।

ये वातजूतास्तरणिभिरेवैः परि द्यां सद्यो अपसो बभूवुः ॥१॥

यदारमक्रन्नृभवः पितृभ्यां परिविष्टी वेषणा दंसनाभिः ।

आदिद्देवानामुप सख्यमायन्धीरासः पुष्टिमवहन्मनायै ॥२॥

पुनर्ये चक्रुः पितरा युवाना सना यूपेव जरणा शयाना ।

ते वाजो विभ्वाँ ऋभुरिन्द्रवन्तो मधुप्सरसो नोऽवन्तु यज्ञम् ॥३॥

यत्संवत्समृभवो गामरक्षन्यत्संवत्समृभवो मा अपिंशन् ।

यत्संवत्समभरन्भासो अस्यास्ताभिः शमीभिरमृतत्वमाशुः ॥४॥

ज्येष्ठ आह चमसा द्वा करेति कनीयान्त्रीन्कृणवामेत्याह ।

कनिष्ठ आह चतुरस्करेति त्वष्ट ऋभवस्तत्पनयद्वचो वः ॥५॥

सत्यमूचुर्नर एवा हि चक्रुरनु स्वधामृभवो जग्मुरेताम् ।

विभ्राजमानाँश्चमसाँ अहेवावेनत्त्वष्टा चतुरो ददृश्वान् ॥६॥

द्वादश द्यून्यदगोह्यस्यातिथ्ये रणन्नृभवः ससन्तः ।

सुक्षेत्राकृण्वन्ननयन्त सिन्धून्धन्वातिष्ठन्नोषधीर्निम्नमापः ॥७॥

रथं ये चक्रुः सुवृतं नरेष्ठां ये धेनुं विश्वजुवं विश्वरूपाम् ।

त आ तक्षन्त्वृभवो रयिं नः स्ववसः स्वपसः सुहस्ताः ॥८॥

अपो ह्येषामजुषन्त देवा अभि क्रत्वा मनसा दीध्यानाः ।

वाजो देवानामभवत्सुकर्मेन्द्रस्य ऋभुक्षा वरुणस्य विभ्वा ॥९॥

ये हरी मेधयोक्था मदन्त इन्द्राय चक्रुः सुयुजा ये अश्वा ।

ते रायस्पोषं द्रविणान्यस्मे धत्त ऋभवः क्षेमयन्तो न मित्रम् ॥१०॥

इदाह्नः पीतिमुत वो मदं धुर्न ऋते श्रान्तस्य सख्याय देवाः ।

ते नूनमस्मे ऋभवो वसूनि तृतीये अस्मिन्सवने दधात ॥११॥

## सायणभाष्यम्

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।

निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

चतुर्थेऽनुवाके त्रयोदश सूक्तानि । तत्र ‘प्र ऋभुभ्यः'
इत्येकादशर्चं प्रथमं सूक्तं वामदेवस्यार्षं त्रैष्टुभम् ।
तुह्यादिपरिभाषया इदमादि सूक्तपञ्चकमृभुदेवताकम् ।
अत्रानुक्रमणिका - ' प्र ऋभुभ्य एकादशार्भवं वा ' इति ।
व्यूढे दशरात्रे चतुर्थेऽहनि वैश्वदेवशस्त्रे
आर्भवनिविद्धानीयमिदम् । तथा च सूत्रितं- प्र ऋभुभ्यः प्र
शुक्रैत्विति वैश्वदेवम् ' ( आश्व. श्रौ. ८. ८) इति ॥

प्र ऋ॒भुभ्यों दू॒तमिंव॒ वाचंमिष्य उप॒स्तिरे॒ श्वैतंरीं धे॒नुमींळे ।

ये वातंजूतास्त॒रणिंभि॒रेवै॒ः परि॒ द्यां स॒द्यो अ॒पसों बभू॒वुः
॥१

प्र । ऋ॒भुऽभ्यः॑ । दू॒तम्ऽइ॑व । वाच॑म् । इ॒ष्ये॒ । उ॒प॒ऽस्तिरे॑ । श्वैत॑रीम् । धे॒नुम् । ई॒ळे॒ ।

ये । वात॑ऽजूताः । त॒रणि॑ऽभिः । एवैः॑ । परि॑ । द्याम् । स॒द्यः । अ॒पसः॑ । ब॒भू॒वुः ॥१

प्र । ऋभुऽभ्यः । दूतम्ऽइव । वाचम् । इष्ये । उपऽस्तिरे । श्वैतरीम् । धेनुम् । ईळे ।

ये । वातऽजूताः । तरणिऽभिः । एवैः । परि । द्याम् । सद्यः । अपसः । बभूवुः ॥१

तत्र ऋभूणां पूर्वं मनुष्याणामेव सतां तपसा देवत्वप्राप्तिः 'आर्भवं शंसत्यृभवो वै देवेभ्यः' ( ऐ. ब्रा. ३. ३०) इत्यत्र ब्राह्मणे स्पष्टमाम्नाता । केचन ऋभवो नाम सूर्यर३मय इत्याचक्षते । अहं यजमानः "ऋभुभ्यः उरुभासमानेभ्य

एतन्नामकेभ्यो देवेभ्यः “वाचं स्तुतिरूपां “प्र “इष्ये प्रेरयामि । किमिव । “दूतमिव । यथा दूतं स्वकार्यं प्रति प्रेषयन्ति तद्वत् । किंच “उपस्तिरे सोमोपस्तरणाय “श्वैतरीं पयोयुक्तां श्वेततरां वा “धेनुमीळे याचामि ऋभून् । "ये ऋभवः "वातजूताः वातसमानगतयः “अपसः जगदुपकारिकर्माणः सन्तः “तरणिभिः तारकैः “एवैः गमनशीलैरश्वैः “द्याम् अन्तरिक्षं “सद्यः तदानीमेव “परि “बभूवुः परिभवन्ति सर्वतो व्याप्नुवन्ति । अथ रश्मय एव ऋभव इत्युक्तत्वादादित्यं वा रश्मयः परितो व्याप्नुवन्ति ॥

य॒दार॒मक्रं॒न्नृ॒भवः॒ः पि॒तृभ्यां॒ परिं॑विष्टी वे॒षणा॑ दं॒सना॑भिः ।

आदिद्दे॒वाना॒मुप॑ स॒ख्यमा॑य॒न्धीरा॑सः पु॒ष्टिम॑वहन्म॒नायै॑ ॥२

य॒दा । अर॑म् । अक्र॑न् । ऋ॒भवः॑ । पि॒तृऽभ्या॑म् । परि॑ऽविष्टी । वे॒षणा॑ । दं॒सना॑भिः ।

आत् । इत् । दे॒वाना॑म् । उप॑ । स॒ख्यम् । आ॒य॒न् । धीरा॑सः । पु॒ष्टिम् । अ॒व॒ह॒न् । म॒नायै॑ ॥२

यदा । अरम् । अक्रन् । ऋभवः । पितृऽभ्याम् । परिऽविष्टी । वेषणा । दंसनाभिः ।

आत् । इत् । देवानाम् । उप । सख्यम् । आयन् । धीरासः । पुष्टिम् । अवहन् । मनायै ॥२

"यदा यस्मिन् काले “ऋभवः “पितृभ्यां मातापितृभ्यां “परिविष्टी परिवेषणेन परिचर्यया "वेषणा वेषणेन व्याप्त्या । यद्वा वेषेण जरद्रूपयोर्युवत्वकरणेन "दंसनाभिः अन्यैश्चमसनिर्माणादिकर्मभिः "अरम् अत्यर्थम् “अक्रन्

“आदित् अनन्तरमेव “देवानाम् इन्द्रादीनां “सख्यं सखित्वं समानख्यानत्वं देवतात्वम् “उप आयन् आगमन् । “ युवशा कर्त्वा' ( ऋ. सं. १.१६१. ३ ) इति देवत्वप्राप्तेरेकान्तत्वेन देवैरुक्तत्वादिति भावः । किंच “धीरासः धीरा बुद्धिमन्तस्तेषां “पुष्टिं गवादिविषयां “मनायै मतिकृते यजमानाय “अवहन वहन्ति धारयन्ति । यद्वा । सविषयां पुष्टिं मनायै मनसे प्रकृष्टमनस्कत्वायावहन् ।

पुन॒र्ये च॒क्रुः पि॒तरा॒ युवा॑ना॒ सना॒ यूपे॑व जर॒णा शया॑ना ।

ते वाजो॒ विभ्वाँ ऋ॒भुरिन्द्र॑वन्तो॒ मधु॑प्सरसो नोऽवन्तु य॒ज्ञम् ॥३

पुनः॑ । ये । च॒क्रुः । पि॒तरा॑ । युवा॑ना । सना॑ । यूपा॑ऽइव । ज॒र॒णा । शया॑ना ।

ते । वाजः॑ । विऽभ्वा॑ । ऋ॒भुः । इन्द्र॑ऽवन्तः । मधु॑ऽप्सरसः । नः॒ । अ॒व॒न्तु॒ । य॒ज्ञम् ॥३

पुनः । ये । चक्रुः । पितरा । युवाना । सना । यूपाऽइव । जरणा । शयाना ।

ते । वाजः । विऽभ्वा । ऋभुः । इन्द्रऽवन्तः । मधुऽप्सरसः । नः । अवन्तु । यज्ञम् ॥३

“ये ऋभवः “पितरा मातापितरौ "यूपेव छिन्नस्थाणू इव "जरणा जीर्णौ “शयाना शयानौ “पुनः “सना सदा “युवाना युवानौ “चक्रुः नित्यतरुणावकुर्वन् । “ते “वाजो “विभ्वा “ऋभुः च एतन्नामकास्त्रयः सुधन्वन आङ्गिरसस्य पुत्रा

ऋभवः ”इन्द्रवन्तः अनुग्राहकेणेन्द्रेण तद्वन्तः “मधुप्सरसः मधुरस्य सोमरसस्य भक्षयितारः मनोहररूपा वा “नः अस्मदीयं “यज्ञम् “अवन्तु रक्षन्तु गच्छन्तु वा ।

यत्सं॒वत्सं॑मृ॒भवो॒ गामर॑क्ष॒न्यत्सं॒वत्सं॑मृ॒भवो॒ मा अपिं॑शन् ।

यत्सं॒वत्स॒मभं॑र॒न्भासों अस्या॒स्ताभि॒ः
शमीं॑भिरमृत॒त्वमां॑शुः ॥४

यत् । स॒म्ऽवत्सं॑म् । ऋ॒भवः॑ । गाम् । अरं॑क्षन् । यत् ।
स॒म्ऽवत्सं॑म् । ऋ॒भवः॑ । माः । अपिं॑शन् ।

यत् । स॒म्ऽवत्सं॑म् । अ॒भं॑रन् । भासः॑ । अ॒स्याः॒ । ताभिः॑ ।
शमीं॑भिः । अ॒मृ॒त॒ऽत्वम् । आ॒शुः ॥४

यत् । सम्ऽवत्सम् । ऋभवः । गाम् । अरक्षन् । यत् । सम्ऽवत्सम् । ऋभवः । माः । अपिंशन् ।

यत् । सम्ऽवत्सम् । अभरन् । भासः । अस्याः । ताभिः । शमीभिः । अमृतऽत्वम् । आशुः ॥४

“संवत्सम् । संवसन्ति भूतान्यस्मिन्निति संवत्सः संवत्सरः। संवत्सरपर्यन्तम् “ऋभवो “गां मृताम् “अरक्षन् अपालयन् । स्वसामर्थ्यादिति “यत् यदेतत्कर्मास्ति । तथा "संवत्सं संवत्सरम् “ऋभवो “माः तस्या एवं गोर्मांसम् “अपिंशन् अवयवानकुर्वन्निति “यत् । किंच “संवत्सं संवत्सरपर्यन्तम् “अस्याः "भासः “अभरन् दीप्तीः अवयवशोभा अकुर्वन्निति “यत् “ताभिः “शमीभिः मृताया गोर्नवीकरणविषयैः कर्मभिः "अमृतत्वमाशुः देवत्वं प्राप्ताः । ‘ धेनुः कर्त्वा ' इति देवत्वप्राप्तिसाधनत्वेन देवैः

प्रतिश्रुतत्वात् । यद्वा । अत्र संवत्समित्येतत् वत्सेन सहेति व्याख्येयम् ।

ज्ये॒ष्ठ आ॑ह चम॒सा द्वा क॒रेति॒ कनी॑या॒न्त्रीन्कृ॑णवा॒मेत्या॑ह ।

क॒नि॒ष्ठ आ॑ह च॒तुर॑स्क॒रेति॒ त्वष्ट॑ ऋभव॒स्तत्प॑नय॒द्वचो॑ वः ॥ ५

ज्ये॒ष्ठः । आ॒ह॒ । च॒म॒सा । द्वा । क॒र॒ । इति॑ । कनी॑यान् । त्रीन् । कृ॒ण॒वा॒म॒ । इति॑ । आ॒ह॒ ।

क॒नि॒ष्ठः । आ॒ह॒ । च॒तुरः॑ । क॒र॒ । इति॑ । त्वष्टा॑ । ऋ॒भ॒वः॒ । तत् । प॒न॒य॒त् । वचः॑ । वः॒ ॥५

ज्येष्ठः । आह । चमसा । द्वा । कर । इति । कनीयान् । त्रीन् । कृणवाम । इति । आह ।

कनिष्ठः । आह । चतुरः । कर । इति । त्वष्टा । ऋभवः । तत् । पनयत् । वचः । वः ॥५

' एकं चमसं चतुरस्कृणोतन ' ( ऋ. सं. १. १६१. २ ) इति यदा देवदूतोऽग्निर्ऋभूनाह देवत्वप्राप्त्युक्थेन तदा तेषु मध्ये देवत्वप्राप्त्युत्कः एकः “ज्येष्ठः ऋभुरितरौ “आह । किमिति । उच्यते । “चमसा “द्वा “करेति । एकमेव सन्तं द्वौ कृणवामेति । “कनीयान् तदनन्तरो विभ्वा “त्रीन् “कृणवाम करवाम “इत्याह । तदवरः “कनिष्ठः वाजः “चतुरस्कर चतुर्धा करवाम “इति “आह “तत् एव चतुष्करणरूपं हे “ऋभवः “त्वष्टा युष्मद्गुरुः “वः “वचः

युष्मद्वचनं “पनयत् अस्तौत् । अङ्गीचकार इत्यर्थः ॥ ॥ १ ॥

स॒त्यमू॑चु॒र्नर॑ ए॒वा हि च॒क्रुरनु॑ स्व॒धामृ॒भवो॑ जग्मु॒रे॒ताम् ।

वि॒भ्राज॑मानाँश्चम॒साँ अहे॒वावे॑न॒त्त्वष्टा॑ च॒तुरो॑ दद॒॒श्वान् ॥६

स॒त्यम् । ऊ॒चु॒ः । नर॑ः । ए॒व । हि । च॒क्रुः । अनु॑ । स्व॒धाम् । ऋ॒भव॑ः । ज॒ग्मु॒ः । ए॒ताम् ।

वि॒ऽभ्राज॑मानान् । च॒म॒सान् । अहा॑ऽइव । अवे॑नत् । त्वष्टा॑ । च॒तुर॑ः । द॒दृ॒श्वान् ॥६

सत्यम् । ऊचुः । नरः । एव । हि । चक्रुः । अनु । स्वधाम् । ऋभवः । जग्मुः । एताम् ।

विऽभ्राजमानान् । चमसान् । अहाऽइव । अवेनत् । त्वष्टा । चतुरः । ददृश्वान् ॥६

“नरः मनुष्यरूपा ऋभवः "सत्यमूचुः सत्यमेवाब्रुवन् । “हि यस्मादेते “एव एवं “चक्रुः चतुरोऽकुर्वन् । यथोक्तं तथैव कृतत्वात् इत्यभिप्रायः । “अनु चतुर्धाकरणानन्तरम् "एतां तृतीयसवनगतां “स्वधां सोमाख्यममृतम् “ऋभवो “जग्मुः । ‘एकं चमसं चतुरस्कृणोतन, साकं देवैर्यज्ञियासो भविष्यथ' (ऋ. सं. १.१६१. २) इति श्रुतत्वात् । अथ “त्वष्टा देवः “विभ्राजमानान् "अहेव अहानीव दीप्यमानान् “चमसान् “चतुरो “ददृश्वान् दृष्टवान् सन् "अवेनत् अकामयत॥ अङ्गीचकारेत्यर्थः ॥

द्वादंश॒ द्यून्यदगोंह्यस्याति॒थ्ये रणंन्नृभवंः स॒सन्तंः ।

सु॒क्षेत्रां॑कृण्व॒न्ननं॑यन्त॒ सिन्धू॒न्धन्वाति॑ष्ठ॒न्नोषं॑धीर्नि॒म्नमाप॑ः ॥७

द्वाद॑श । द्यून् । यत् । अगो॑ह्यस्य । आ॒ति॒थ्ये । रणं॑न् । ऋ॒भवः॑ । स॒सन्तः॑ ।

सु॒ऽक्षेत्रां॑ । अ॒कृ॒ण्व॒न् । अनं॑यन्त । सिन्धू॑न् । धन्वं॑ । आ । अ॒ति॒ष्ठ॒न् । ओषं॑धीः । नि॒म्नम् । आप॑ः ॥७

द्वादश । द्यून् । यत् । अगोह्यस्य । आतिथ्ये । रणन् । ऋभवः । ससन्तः ।

सुऽक्षेत्रा । अकृण्वन् । अनयन्त । सिन्धून् । धन्व । आ । अतिष्ठन् । ओषधीः । निम्नम् । आपः ॥७

तत्र रश्मय एव ऋभव इत्युक्तत्वात् तद्रूपेण स्तूयन्ते । “यत् यदा “द्वादश “द्यून् दिवसान् । आर्द्रादिद्वादशवृष्टिनक्षत्राणीत्यर्थः । "अगोह्यस्य अगोप्यस्यादित्यस्य गृहे “आतिथ्ये । अकस्मादागतोऽतिथिः । तदुचितं सत्काररूपं कर्म आतिथ्यम् । तदर्थं “ससन्तः स्वपन्तः सुखेन निवसन्तः “ऋभवः “रणन् रमन्ते । ‘ अगोह्यस्य यदसस्तना गृहे ' ( ऋ. सं. १. १६१. ११.) इत्युक्तम् । तदानीं “सुक्षेत्राकृण्वन् । अकृष्टानि शून्यानि क्षेत्राणि वृष्ट्या सस्यादिसमृद्धान्यकुर्वन् । सिन्धून् नदीः “अनयन्त प्रैरयन् । तस्मिन् काले “ओषधीः ओषधयः “धन्वं निरुदकस्थानमाश्रित्य “आतिष्ठन् । “निम्नं नीचस्थानम् “आपः अतिष्ठन् । ' उद्वत्स्वस्मा अकृणोतना तृणं निवत्स्वपः ' ( ऋ. सं. १. १६१. ११) इत्युक्तम् ॥

रथं॒ ये च॒क्रुः सु॒वृतं॑ नरे॒ष्ठां ये धे॒नुं वि॑श्व॒जुवं॑ वि॒श्वरू॑पाम् ।

त आ त॑क्षन्त्वृ॒भवो॑ र॒यिं न॒ः स्ववं॑स॒ः स्वपं॑सः सु॒हस्ता॑ः ॥८

रथं॑म् । ये । च॒क्रुः । सु॒ऽवृतं॑म् । न॒रे॒ऽस्थाम् । ये । धे॒नुम् । वि॒श्व॒ऽजुवं॑म् । वि॒श्वऽरू॑पाम् ।

ते । आ । त॒क्ष॒न्तु॒ । ऋ॒भवः॑ । र॒यिम् । न॒ः । सु॒ऽअवं॑सः । सु॒ऽअपं॑सः । सु॒ऽहस्ताः॑ ॥८

रथम् । ये । चक्रुः । सुऽवृतम् । नरेऽस्थाम् । ये । धेनुम् । विश्वऽजुवम् । विश्वऽरूपाम् ।

ते । आ । तक्षन्तु । ऋभवः । रयिम् । नः । सुऽअवसः । सुऽअपसः । सुऽहस्ताः ॥८

"ये ऋभवः “सुवृतं सुचक्रं सुष्ठु वर्तमानं वा “नरेष्ठां नेतरि चक्रे वर्तमानं “रथं “चक्रुः । “ये च “विश्वजुवं विश्वस्य प्रेरयित्रीं “विश्वरूपां बहुरूपामेतन्नामिकां वा “धेनुं गां चक्रुः अकुर्वन् । बृहस्पतिर्विश्वरूपामुपाजत' ( ऋ. सं. १. १६१. ६ ) इति ह्युक्तम् । “ते महान्तः “ऋभवः “नः अस्माकं “रयिं धनम् "आ “तक्षन्तु सर्वतो निष्पादयन्तु । कीदृशास्त ऋभवः । “स्वपसः सुकर्माणः “स्ववसः शोभनान्नोपेताः सुरक्षणा वा "सुहस्ताः शोभनहस्ताः कुशलहस्ताः ॥

अपो॒ ह्ये॑षा॒मजु॑षन्त दे॒वा अ॒भि क्रत्वा॒ मन॑सा॒ दीध्या॑नाः ।

वाजो॑ दे॒वाना॑मभवत्सु॒कर्मेन्द्र॑स्य ऋभु॒क्षा वरु॑णस्य॒ विभ्वा॑ ॥९

अप॑ः । हि । ए॒षा॒म् । अजु॑षन्त । दे॒वाः । अ॒भि । क्रत्वा॑ । मन॑सा । दीध्या॑नाः ।

वाज॑ः । दे॒वाना॑म् । अ॒भ॒व॒त् । सु॒ऽकर्मा॑ । इन्द्र॑स्य । ऋ॒भु॒क्षाः । वरु॑णस्य । वि॒ऽभ्वा॑ ॥९

अपः । हि । एषाम् । अजुषन्त । देवाः । अभि । क्रत्वा । मनसा । दीध्यानाः ।

वाजः । देवानाम् । अभवत् । सुऽकर्मा । इन्द्रस्य । ऋभुक्षाः । वरुणस्य । विऽभ्वा ॥९

“एषाम् ऋभूणाम् "अपः अश्वरथनिर्माणादिरूपं कर्म “देवाः इन्द्रादयः "अजुषन्त असेवन्त । ‘ इन्द्रो हरी युयुजे अश्विना रथम् '(ऋ. सं. १.१६१.६) इत्यादिमन्त्रोक्त प्रकारेण स्वीकृतवन्त इत्यर्थः । कीदृशास्ते। “क्रत्वा वरप्रदानरूपेण कर्मणा "मनसा शोभनेन चित्तेनानुग्रहयुक्तेन “अभि "दीध्यानाः दीप्यमानाः । देवानाम् अनुग्रहेण किं लब्धमित्याह । “सुकर्मा शोभनव्यापारः “वाजः कनीयान् “देवानां सर्वेषां संबन्धी “अभवत् । तथा “इन्द्रस्य संबन्धी “ऋभुक्षाः ऋभुज्येष्ठः । “विभ्वा मध्यमः “वरुणस्य संबन्ध्यभवत् । “हि पूरणः ॥

ये हरीं मे॒धयो॒क्था मदं॑न्त॒ इन्द्रा॑य च॒क्रुः सु॒युजा॒ ये अश्वा॑ ।

ते रा॒यस्पोषं॒ द्रविं॑णान्य॒स्मे ध॒त्त ऋं॑भवः क्षेम॒यन्तो॒ न मि॒त्रम्
॥१०

ये । हरी॒ इतिं॑ । मे॒धयां॑ । उ॒क्था । मदं॑न्तः । इन्द्रां॑य । च॒क्रुः
। सु॒ऽयुजां॑ । ये । अश्वां॑ ।

ते । रा॒यः । पोषं॑म् । द्रविं॑णानि । अ॒स्मे इतिं॑ । ध॒त्त ।
ऋ॒भ॒व॒ः । क्षे॒म॒ऽयन्तः॑ । न । मि॒त्रम् ॥१०

ये । हरी इति । मेधया । उक्था । मदन्तः । इन्द्राय । चक्रुः
। सुऽयुजा । ये । अश्वा ।

ते । रायः । पोषम् । द्रविणानि । अस्मे इति । धत्त ।
ऋभवः । क्षेमऽयन्तः । न । मित्रम् ॥१०

"ये ऋभवः "हरी अश्वौ “मेधया प्रज्ञया “उक्था उक्थैः स्तुतिभिः "मदन्तः हर्षयन्तः “चक्रुः । “ये च तौ "सुयुजा सुयुजौ सुयोजनावश्वौ “इन्द्राय इन्द्रार्थं चक्रुः अकुर्वन् । हे “ऋभवः “ते यूयं “रायस्पोषं धनपुष्टिं “द्रविणानि गवादिधनानि च सुखानि वा “अस्मे अस्मासु “धत्त धारयत । किमिव । “क्षेमयन्तः क्षेममिच्छन्तः “मित्रं “न मित्रमिव । अत्र यद्यप्येक एव ऋभुनामा तत्संबन्धात् इतरेऽप्यृभव उच्यन्ते प्राणभृन्न्यायेन ॥

इ॒दाह्नः॑ पी॒तिमु॒त वो॒ मदं॑ धु॒र्न ऋ॒ते श्रा॒न्तस्य॑ स॒ख्याय॑ दे॒वाः ।

ते नू॒नम॒स्मे ऋ॑भवो॒ वसू॑नि तृ॒तीये॑ अ॒स्मिन्सव॑ने दधात ॥ ११

इ॒दा । अह्नः॑ । पी॒तिम् । उ॒त । व॒ः । मद॑म् । धु॒ः । न । ऋ॒ते । श्रा॒न्तस्य॑ । स॒ख्याय॑ । दे॒वाः ।

ते । नू॒नम् । अ॒स्मे इति॑ । ऋ॒भ॒व॒ः । वसू॑नि । तृ॒तीये॑ । अ॒स्मिन् । सव॑ने । द॒धा॒त॒ ॥११

इदा । अह्नः । पीतिम् । उत । वः । मदम् । धुः । न । ऋते । श्रान्तस्य । सख्याय । देवाः ।

ते । नूनम् । अस्मे इति । ऋभवः । वसूनि । तृतीये । अस्मिन् । सवने । दधात ॥११

“इदा इदानीं चमसादिनिर्माणानन्तरम् “अह्नः सुत्याहसंबन्धिनस्तृतीये सवने “पीतिं सोमपानम् “उत अपि च "मदं तज्जनितं “वः युष्माकं “धुः ददुर्देवाः । “श्रान्तस्य श्रान्तात्तपोयुक्तात् "ऋते “सख्याय सखित्वाय

“न भवन्ति “देवाः । यत एते श्रान्ता अतो ददुरित्यर्थः । हे “ऋभवः “ते महान्तो यूयं "नूनं निश्चयम् “अस्मे अस्मासु “अस्मिन् “तृतीये “सवने “वसूनि धनानि “दधात धारयत ॥ ॥ २ ॥

**टिप्पणी**

ऋभु उपरि टिप्पणी

४.३३.४

यत्सं॒वत्सं॑मृ॒भवो॒ गामरं॑क्ष॒न्यत्सं॒वत्सं॑मृ॒भवो॒ मा अपिं॑शन् ।

यत्सं॒वत्स॒मभं॑र॒न्भासो॑ अस्या॒स्ताभि॒ः
शमी॑भिरमृत॒त्वमा॑शुः ॥४

शम्योपरि टिप्पणी

४.३३.९ वाजो देवानामभवत्सुकर्मेन्द्रस्य ऋभुक्षा
वरुणस्य विभ्वा ॥९॥

वाजोपरि टिप्पणी

# ऋग्वेदः सूक्तं ४.३४



वामदेवो गौतमः

## दे. ऋभवः। त्रिष्टुप्

ऋभुर्विभ्वा वाज इन्द्रो नो अच्छेमं यज्ञं रत्नधेयोप यात ।

इदा हि वो धिषणा देव्यह्नामधात्पीतिं सं मदा अग्मता वः ॥१॥

विदानासो जन्मनो वाजरत्ना उत ऋतुभिरृभवो मादयध्वम् ।

सं वो मदा अग्मत सं पुरंधिः सुवीरामस्मे रयिमेरयध्वम् ॥२॥

अयं वो यज्ञ ऋभवोऽकारि यमा मनुष्वत्प्रदिवो दधिध्वे ।

प्र वोऽच्छा जुजुषाणासो अस्थुरभूत विश्वे अग्रियोत वाजाः ॥३॥

अभूदु वो विधते रत्नधेयमिदा नरो दाशुषे मर्त्याय ।

पिबत वाजा ऋभवो ददे वो महि तृतीयं सवनं मदाय ॥४॥

आ वाजा यातोप न ऋभुक्षा महो नरो द्रविणसो गृणानाः ।

आ वः पीतयोऽभिपित्वे अह्नामिमा अस्तं नवस्व इव ग्मन् ॥५॥

आ नपातः शवसो यातनोपेमं यज्ञं नमसा हूयमानाः ।

सजोषसः सूरयो यस्य च स्थ मध्वः पात रत्नधा इन्द्रवन्तः ॥६॥

सजोषा इन्द्र वरुणेन सोमं सजोषाः पाहि गिर्वणो मरुद्भिः ।

अग्रेपाभिरृतुपाभिः सजोषा ग्नास्पत्नीभी रत्नधाभिः सजोषाः ॥७॥

सजोषस आदित्यैर्मादयध्वं सजोषस ऋभवः पर्वतेभिः ।

सजोषसो दैव्येना सवित्रा सजोषसः सिन्धुभी रत्नधेभिः ॥८॥

ये अश्विना ये पितरा य ऊती धेनुं ततक्षुरृभवो ये अश्वा ।

ये अंसत्रा य ऋधग्रोदसी ये विभ्वो नरः स्वपत्यानि चक्रुः ॥९॥

ये गोमन्तं वाजवन्तं सुवीरं रयिं धत्थ वसुमन्तं पुरुक्षुम् ।

ते अग्रेपा ऋभवो मन्दसाना अस्मे धत्त ये च रातिं गृणन्ति ॥१०॥

नापाभूत न वोऽतीतृषामानिःशस्ता ऋभवो यज्ञे अस्मिन् ।

समिन्द्रेण मदथ सं मरुद्भिः सं राजभी रत्नधेयाय देवाः ॥११॥

## सायणभाष्यम्

‘ऋभुर्विभ्वा' इत्येकादशर्चं द्वितीयं सूक्तं वामदेवस्यार्षं त्रैष्टुभमार्भवम् । “ ऋभुर्विभ्वा' इत्यनुक्रमणिका । व्यूढे दशरात्रे पञ्चमेऽहनि वैश्वदेवशस्त्रे आर्भवनिविद्धानीयमिदम् । 'ऋभुर्विभ्वा स्तुषे जनम् ' ( आश्व. श्रौ. ८. ८) इति सूत्रितत्वात् ॥

ऋ॒भुर्विभ्वा॒ वाज॒ इन्द्रो॑ नो॒ अच्छे॒मं य॒ज्ञं र॑त्न॒धेयोप॑ यात ।

इ॒दा हि वो॑ धि॒षणा॑ दे॒व्यह्ना॒मधा॑त्पी॒तिं सं मदा॑ अग्मता वः ॥१

ऋ॒भुः । वि॒ऽभ्वा॑ । वाजः॑ । इन्द्रः॑ । न॒ः । अच्छ॑ । इ॒मम् । य॒ज्ञम् । र॒त्न॒ऽधेया॑ । उप॑ । या॒त॒ ।

इ॒दा । हि । व॒ः । धि॒षणा॑ । दे॒वी । अह्ना॑म् । अधा॑त् । पी॒तिम् । सम् । मदाः॑ । अ॒ग्म॒त॒ । व॒ः ॥१

ऋभुः । विऽभ्वा । वाजः । इन्द्रः । नः । अच्छ । इमम् । यज्ञम् । रत्नऽधेया । उप । यात ।

इदा । हि । वः । धिषणा । देवी । अह्नाम् । अधात् । पीतिम् । सम् । मदाः । अग्मत । वः ॥१

“ऋभुर्विभ्वा “वाज “इन्द्रः चैते देवाः “नः अस्मदीयम् “इमं “यज्ञम् "अच्छ अभिमुखं “रत्नधेया अस्मभ्यं रत्नधानाय “उप "यात उपगच्छत । ननु इन्द्रः सोमस्वामित्वात् आगच्छतु कथमेतेषां यज्ञप्राप्तिरिति चेत् । उच्यते । “इदा “हि इदानीं खलु “वः युष्माकं “धिषणा वाक् “देवी प्रजापतेः संबन्धिनी “अह्नां सोमाभिषवसंबन्धिनां “पीतिं सोमपानम् अधात् । ‘स प्रजापतिरब्रवीत्सवितारं तव वा इमेऽन्तेवासास्त्वमेवैभिः संपिबस्व ' (ऐ. ब्रा.३.३०) इति ब्राह्मणम् । यस्मादेवं तस्मात् “मदाः च "वः युष्मान् “सम् “अग्मत संगताः । यद्वा । वो मदा देवैः संगताः ॥

वि॒दा॒नासो॒ जन्म॑नो वाजरत्ना उ॒त ऋ॒तुभि॑रृभवो मादयध्वम् ।

सं वो॒ मदा॒ अग्म॑त॒ सं पुरं॑धिः सु॒वीरा॑म॒स्मे र॒यिमेर॑यध्वम् ॥ २

वि॒दा॒नास॑ः । जन्म॑नः । वा॒ज॒ऽर॒त्ना॒ः । उ॒त । ऋ॒तुऽभि॑ः । ऋ॒भ॒व॒ः । मा॒द॒य॒ध्व॒म् ।

सम् । व॒ः । मदा॑ः । अग्म॑त । सम् । पुर॑म्ऽधिः । सु॒ऽवीरा॑म् । अ॒स्मे इति॑ । र॒यिम् । आ । ई॒र॒य॒ध्व॒म् ॥२

विदानासः । जन्मनः । वाजऽरत्नाः । उत । ऋतुऽभिः । ऋभवः । मादयध्वम् ।

सम् । वः । मदाः । अग्मत । सम् । पुरम्ऽधिः । सुऽवीराम् । अस्मे इति । रयिम् । आ । ईरयध्वम् ॥२

हे "वाजरत्नाः सोमलक्षणेनान्नेन राजमानाः “ऋभवः यूयं “जन्मनः जननस्य देवत्वलक्षणस्य देवत्वप्राप्तिं “विदानासः जानन्तः । यद्वा विदानासः सोमप्राप्तिं जानन्तो जन्मनः पूर्वं मनुष्यजन्मवन्तश्च सन्तः । उतशब्दश्चार्थे । “ऋतुभिः देवैः सह "मादयध्वम् । “वः युष्मान् “मदाः सोमपानजनिताः “सम् “अग्मत संगताः । “पुरंधिः स्तुतिरपि “सम् अग्मत । ते यूयम् “अस्मे अस्माकं “सुवीरां शोभनैर्वीरैः पुत्रैः उपेतां “रयिं धनम् “एरयध्वं प्रेरयत ॥

अ॒यं वों य॒ज्ञ ऋंभवोऽकारि॒ यमा मंनु॒ष्वत्प्र॒दिवों दधि॒ध्वे ।

प्र वोऽच्छा॑ जुजुषा॒णासो॑ अस्थु॒रभू॑त॒ विश्वे॑ अग्रि॒योत वा॑जाः ॥३

अ॒यम् । व॒ः । य॒ज्ञः । ऋ॒भ॒व॒ः । अ॒का॒रि॒ । यम् । आ । म॒नु॒ष्वत् । प्र॒ऽदिव॑ः । द॒धि॒ध्वे ।

प्र । व॒ः । अच्छ॑ । जु॒जु॒षा॒णास॑ः । अ॒स्थु॒ः । अभू॑त । विश्वे॑ । अ॒ग्रि॒या । उ॒त । वा॒जा॒ः ॥३

अयम् । वः । यज्ञः । ऋभवः । अकारि । यम् । आ । मनुष्वत् । प्रऽदिवः । दधिध्वे ।

प्र । वः । अच्छ । जुजुषाणासः । अस्थुः । अभूत । विश्वे । अग्रिया । उत । वाजाः ॥३

हे “ऋभवः “वः युष्मदर्थम् “अयं “यज्ञः “अकारि । “यं यज्ञं “मनुष्वत् मनुष्यवत् “प्रदिवः प्रकर्षेण द्योतमानाः सन्तः “आ “दधिध्वे धारयत जठरे । तदर्थं “वः युष्मान् “अच्छ आभिमुख्येन “जुजुषाणासः सेवमानाः सोमाः “प्र “अस्थुः प्रतिष्ठन्ते । “उत अपि च धारयित्वा च हे “वाजाः ऋभवः “विश्वे यूयम् “अग्रिया अग्रार्हा अग्रत्वसंपादिनो वा “अभूत भवथ॥

अभूंदु वो विध॒ते रंत्न॒धेयंमि॒दा नंरो दा॒शुषे॒ मर्त्यांय ।

पिबंत वाजा ऋभवो द॒दे वो॒ महिं तृ॒तीयं॒ सवंनं॒ मदांय ॥४

अभूंत् । ऊ॒ं इतिं । व॒ः । वि॒ध॒ते । र॒त्न॒ऽधेयंम् । इ॒दा । न॒र॒ः । दा॒शुषें । मर्त्यांय ।

पिबंत । वा॒जा॒ः । ऋ॒भ॒व॒ः । द॒दे । व॒ः । महिं । तृ॒तीयंम् । सवंनम् । मदाय ॥४

अभूत् । ऊं इति । वः । विधते । रत्नऽधेयम् । इदा । नरः । दाशुषे । मर्त्याय ।

पिबत । वाजाः । ऋभवः । ददे । वः । महि । तृतीयम् । सवनम् । मदाय ॥४

हे “नरः नेतार ऋभवः “वः युष्माकमनुग्रहात् “इदा इदानीं तृतीये सवने “रत्नधेयं दातव्यं रत्नं “विधते । विधतिः परिचरणकर्मा । स्तुत्या परिचरते "दाशुषे हविर्दत्तवते “मर्त्याय यजमानाय मह्यम् “अभूत् भवतु । तदर्थं हे "वाजाः “ऋभवः। एतदद्वयं विभ्वनामकस्याप्युपलक्षणम् । इतरापेक्षया प्रत्येकं बहुवचनम् । यूयं “पिबत । तदर्थं

“वः “ददे । किम् । “महि महत्प्रभूतं “तृतीयं “सवनम् । तत्संबन्धिनं सोममित्यर्थः । किमर्थम् । “मदाय हर्षाय तृप्तये वा ॥

आ वा॑जा या॒तोप॑ न ऋभुक्षा म॒हो न॑रो॒ द्रवि॑णसो गृणा॒नाः ।

आ व॑ः पी॒तयो॑ऽभिपि॒त्वे अह्ना॑मि॒मा अस्तं॑ नव॒स्व॑ इव ग्मन् ॥५

आ । वा॒जा॒ः । या॒त॒ । उप॑ । न॒ः । ऋ॒भु॒क्षा॒ः । म॒हः । न॒र॒ः । द्रवि॑णसः । गृ॒णा॒नाः ।

आ । व॒ः । पी॒तय॑ः । अ॒भि॒ऽपि॒त्वे । अह्ना॑म् । इ॒माः । अस्त॑म् । न॒व॒स्व॑ःऽइव । ग्म॒न् ॥५

आ । वाजाः । यात । उप । नः । ऋभुक्षाः । महः । नरः । द्रविणसः । गृणानाः ।

आ । वः । पीतयः । अभिऽपित्वे । अह्नाम् । इमाः । अस्तम् । नवस्वःऽइव । ग्मन् ॥५

हे "वाजाः “ऋभुक्षाः "नरः नेतारो यूयं “नः अस्मान् “उप “आ "यात । किं कुर्वन्तः । “महः महतः “द्रविणसः धनस्य ॥ कर्मणि षष्ठ्यौ ॥ महत् द्रविणं “गृणानाः स्तुवन्तः । किंच "अह्नाम् “अभिपित्वे अभिपतने समाप्तौ । तृतीये सवने इत्यर्थः । "वः युष्मान् “इमाः "पीतयः पानानि “आ “ग्मन् आगच्छन्ति । तत्र दृष्टान्तः । “अस्तम् । गृहनामैतत् । गृहं “नवस्वः नवप्रसवा गावः “इव ॥ ॥ ३ ॥

आ नंपातः शवसो यात॒नोपे॒मं य॒ज्ञं नमंसा हू॒यमांनाः ।

स॒जोषंसः सूरयो॒ यस्यं च॒ स्थ मध्वंः पात रत्न॒धा
इन्द्रंवन्तः ॥६

आ । न॒पा॒तः॒ । श॒व॒सः॒ । या॒त॒न॒ । उपं । इ॒मम् । य॒ज्ञम् ।
नमंसा । हू॒यमांनाः ।

स॒ऽजोषंसः । सू॒र॒यः॒ । यस्यं । च॒ । स्थ । मध्वंः । पा॒त॒ ।
र॒त्न॒ऽधाः । इन्द्रंऽवन्तः ॥६

आ । नपातः । शवसः । यातन । उप । इमम् । यज्ञम् ।
नमसा । हूयमानाः ।

सऽजोषसः । सूरयः । यस्य । च । स्थ । मध्वः । पात । रत्नऽधाः । इन्द्रऽवन्तः ॥६

हे “शवसः “नपातः बलस्य न पातयितारस्तस्य पुत्रा वा । बलवन्त इत्यर्थः । यूयं “नमसा स्तोत्रेण “हूयमानाः आकारिताः सन्तः “इमं “यज्ञम् “उप “आ “यातन उपागच्छत । कीदृशा यूयम् । “सजोषसः इन्द्रेण सह प्रीताः "सूरयः मेधाविनः । इन्द्रस्य चैषां च कः प्रसङ्ग इत्युच्यते । “यस्य “च "स्थ । चेति प्रसिद्धौ । यस्येन्द्रस्य संबन्धिनो यूयं भवथ तदुचिताश्वनिर्माणात् इत्यभिप्रायः । यस्मादेवं तस्मात् “इन्द्रवन्तः प्रीतेन इन्द्रेण तद्वन्तः “रत्नधाः रमणीयधनानां दातारो यूयं “मध्वः मधुरं सोमं “पात पिबत ॥

स॒जोषा॑ इन्द्र॒ वरु॑णेन॒ सोमं॑ स॒जोषा॑ः पाहि गिर्वणो म॒रुद्भि॑ः ।

अ॒ग्ने॒पाभि॑रृतु॒पाभि॑ः स॒जोषा॒ ग्नास्पत्नी॑भी रत्न॒धाभि॑ः स॒जोषा॑ः ॥७

स॒ऽजोषा॑ः । इ॒न्द्र॒ । वरु॑णेन । सोम॑म् । स॒ऽजोषा॑ः । पा॒हि॒ । गि॒र्व॒ण॒ः । म॒रुत्ऽभि॑ः ।

अ॒ग्ने॒ऽपाभि॑ः । ऋ॒तु॒ऽपाभि॑ः । स॒ऽजोषा॑ः । ग्नाःऽपत्नी॑भिः । र॒त्न॒ऽधाभि॑ः । स॒ऽजोषा॑ः ॥७

सऽजोषाः । इन्द्र । वरुणेन । सोमम् । सऽजोषाः । पाहि । गिर्वणः । मरुत्ऽभिः ।

अग्रेऽपाभिः । ऋतुऽपाभिः । सऽजोषाः । ग्नाःपत्नीभिः । रत्नऽधाभिः । सऽजोषाः ॥७

हे "इन्द्र त्वं “वरुणेन रात्र्याभिमानिदेवेन “सजोषाः समानप्रीतिः सन् "सोमं “पाहि पिब । हे “गिर्वणः गीर्भिर्वननीय संभजनीयेन्द्र त्वं “मरुद्भिः “सजोषाः संगतः सन् सोमं “पाहि पिब ।। किंच “अग्रेपाभिः प्रथमपातृभिः “ऋतुपाभिः ऋतुयाजदेवैश्च “ग्नाः पत्नीभिः । स्त्रीणां पालयित्र्यो देव्यो ग्नाः पत्न्यः । ताभिः । ‘ मेना ग्ना इति स्त्रीणाम् ' ( निरु. ३. २१ ) इति निरुक्तम् । “रत्नधाभिः रमणीयधनदातृभिर्ऋभुभिः सह पिब । यद्वा । एतत् ग्नाः पत्नीभिरित्यस्य विशेषणम् । ताभिर्वा "सजोषाः सोमं पिब ॥

स॒जोषं॑स आदि॒त्यैर्मा॑दयध्वं स॒जोषं॑स ऋभव॒ः पर्वं॑तेभिः ।

स॒जोषं॑सो॒ दैव्ये॑ना सवि॒त्रा स॒जोषं॑स॒ः सिन्धुं॑भी
रत्न॒धेभिं॑ः ॥८

स॒ऽजोषं॑सः । आ॒दि॒त्यैः । मा॒द॒य॒ध्व॒म् । स॒ऽजोषं॑सः ।
ऋ॒भ॒व॒ः । पर्वं॑तेभिः ।

स॒ऽजोषं॑सः । दैव्ये॑न । स॒वि॒त्रा । स॒ऽजोषं॑सः । सिन्धुं॑ऽभिः
। र॒त्न॒ऽधेभिः॑ ॥८

सऽजोषसः । आदित्यैः । मादयध्वम् । सऽजोषसः ।
ऋभवः । पर्वतेभिः ।

सऽजोषसः । दैव्येन । सवित्रा । सऽजोषसः । सिन्धुऽभिः । रत्नऽधेभिः ॥८

हे “ऋभवः “आदित्यैः “सजोषसः संगता यूयं “मादयध्वम् । तथा “पर्वतेभिः पर्ववद्भिः पर्वण्यर्च्यमानैर्देवविशेषैः “सजोषसः मादयध्वम् । तथा च “दैव्येन देवेभ्यो हितेन “सवित्रा “सजोषसः “रत्नधेभिः रत्नानां दातृभिः “सिन्धुभिः स्यन्दनस्वभावैर्नद्यभिमानिदेवैश्च “सजोषसः मादयध्वम् ॥

ये अ॒श्विना॒ ये पि॒तरा॒ य ऊ॒ती धे॒नुं त॑त॒क्षुर्ऋ॒भवो॒ ये अश्वा॑ ।

ये अंस॑त्रा॒ य ऋ॑ध॒ग्रोद॑सी॒ ये विभ्वो॒ नर॑ः स्वप॒त्यानि॑ च॒क्रुः ॥९

ये । अ॒श्विना॑ । ये । पि॒तरा॑ । ये । ऊ॒ती । धे॒नुम् । त॒त॒क्षुः । ऋ॒भवः॑ । ये । अश्वा॑ ।

ये । अंस॑त्रा । ये । ऋध॑क् । रोद॑सी॒ इति॑ । ये । विऽभ्वः॑ । नरः॑ । सु॒ऽअ॒प॒त्यानि॑ । च॒क्रुः ॥९

ये । अश्विना । ये । पितरा । ये । ऊती । धेनुम् । ततक्षुः । ऋभवः । ये । अश्वा ।

ये । अंसत्रा । ये । ऋधक् । रोदसी इति । ये । विऽभ्वः । नरः । सुऽअपत्यानि । चक्रुः ॥९

"ये “ऋभवः “अश्विना अश्विनौ “ऊती ऊत्या क्रियया रथनिर्माणरूपया अप्रीणयन् । “ये च “पितरा पितरौ “ततक्षुः तक्षणेन समपादयन् जीर्णौ सन्तावूती ऊत्या युवानौ “चक्रुः । “ये च “धेनुं ततक्षुः मृतायाः

पुनर्नवीकरणेन । “ये च "अश्वा अश्वौ ततक्षुः । ‘ निश्चर्मणो गामरिणीत धीतिभिर्या जरन्ता युवशा ताकृणोतन ' (ऋ. सं.१. १६१.७) इत्याद्युक्तम् । "ये च "अंसत्रा अंसत्राणि कवचानि देवेभ्यश्चक्रुः । “ये च "रोदसी द्यावापृथिव्यौ “ऋधक् पृथक् चक्रुः । एवमुक्तप्रकारेण "ये “विभ्वः व्याप्ता ऋभवः “नरः नेतारः “स्वपत्यानि स्वपतनसाधनानि तत्प्राप्तिसाधनानि वा कर्माणि चक्रुः । तेऽग्रेपाः' इत्युत्तरत्र संबन्धः ॥

ये गोम॑न्तं॒ वाज॑वन्तं सु॒वीरं॑ र॒यिं ध॒त्थ वसु॑मन्तं पुरु॒क्षुम् ।

ते अ॑ग्रे॒पा ऋ॑भवो मन्दसा॒ना अ॒स्मे ध॑त्त॒ ये च॑ रा॒तिं गृ॒णन्ति॑ ॥१०

ये । गोऽमं॑न्तम् । वाजं॑ऽवन्तम् । सु॒ऽवीरं॑म् । र॒यिम् । ध॒त्थ । वसुं॑ऽमन्तम् । पु॒रु॒ऽक्षुम् ।

ते । अ॒ग्रे॒ऽपाः । ऋ॒भ॒वः॒ । म॒न्द॒सा॒नाः । अ॒स्मे इति॑ । ध॒त्त॒ । ये । च॒ । रा॒तिम् । गृ॒णन्ति॑ ॥१०

ये । गोऽमन्तम् । वाजऽवन्तम् । सुऽवीरम् । रयिम् । धत्थ । वसुऽमन्तम् । पुरुऽक्षुम् ।

ते । अग्रेऽपाः । ऋभवः । मन्दसानाः । अस्मे इति । धत्त । ये । च । रातिम् । गृणन्ति ॥१०

हे ऋभवः "ये यूयं “गोमन्तं “गोसहितं “वाजवन्तम् अन्नवन्तं “सुवीरं शोभनपुत्रोपेतं "वसुमन्तं निवासयोग्यगृहादिधनोपेतं “पुरुक्षुं बह्वन्नं “रयिं धनं “धत्थ धारयथ मह्यं दातुम्। हे “ऋभवः “ते यूयम् “अग्रेपाः प्रथमं

पातारः “मन्दसानाः माद्यन्तः सन्तः “अस्मे अस्मभ्यं “धत्त दत्त रयिम्। "ये “च यूयं “रातिं दानं दत्तं सोमं वा “गृणन्ति स्तुवन्ति । ते धत्त । यद्वा। ये च रातिं गृणन्ति यजमानाः तेभ्योऽपि धत्त ॥

नापा॑भूत॒ न वो॑ऽतीतृषा॒मानि॑ःशस्ता ऋभवो य॒ज्ञे अ॒स्मिन् ।

समिन्द्रे॑ण॒ मद॑थ॒ सं म॒रुद्भि॒ः सं राज॑भी रत्न॒धेया॑य देवाः ॥११

न । अप॑ । अ॒भू॒त॒ । न । व॒ः । अ॒ती॒तृ॒षा॒म॒ । अनि॑ःऽशस्ताः । ऋ॒भ॒व॒ः । य॒ज्ञे । अ॒स्मिन् ।

सम् । इन्द्रेंण । मदंथ । सम् । म॒रुत्ऽभिः॑ । सम् ।
राजंऽभिः । र॒त्न॒ऽधेयांय । दे॒वा॒ः ॥११

न । अप । अभूत । न । वः । अतीतृषाम । अनिःऽशस्ताः
। ऋभवः । यज्ञे । अस्मिन् ।

सम् । इन्द्रेण । मदथ । सम् । मरुत्ऽभिः । सम् ।
राजऽभिः । रत्नऽधेयाय । देवाः ॥११

हे “ऋभवः यूयं “नापाभूत नापगच्छतः । अपरक्ता न भवत । वयं च “वः युष्मान् "न “अतीतृषाम अत्यन्तं तृषितान् मा करवाम । अतो हे ऋभवः “देवाः “अनिःशस्ताः अनिन्दिताः सन्तः “अस्मिन् “यज्ञे “इन्द्रेण “सं “मदथ “मरुद्भिः “सं मदथ । “राजभिः

राजमानैरन्यैर्देवैः “सं मदथ तृप्ता भवथ । किमर्थम् । “रत्नधेयाय रमणीयाय धनदानाय ॥ ॥ ४ ॥

**टिप्पणी**

४.३४.१ ऋभुर्विभ्वा वाज इन्द्रो नो अच्छेत्यार्भवं वाजो वै पशवः पशुरूपं पञ्चमेऽहनि पञ्चमस्याह्नो रूपम्। ऐब्रा. ५.८

# ऋग्वेदः सूक्तं ४.३५



दे. ऋभवः। त्रिष्टुप्

---

इहोप यात शवसो नपातः सौधन्वना ऋभवो माप भूत ।

अस्मिन्हि वः सवने रत्नधेयं गमन्त्विन्द्रमनु वो मदासः ॥१॥

आगन्नृभूणामिह रत्नधेयमभूत्सोमस्य सुषुतस्य पीतिः ।

सुकृत्यया यत्स्वपस्यया चँ एकं विचक्र चमसं चतुर्धा ॥२॥

व्यकृणोत चमसं चतुर्धा सखे वि शिक्षेत्यब्रवीत ।

अथैत वाजा अमृतस्य पन्थां गणं देवानामृभवः सुहस्ताः ॥३॥

किम्मयः स्विच्चमस एष आस यं काव्येन चतुरो विचक्र ।

अथा सुनुध्वं सवनं मदाय पात ऋभवो मधुनः सोम्यस्य ॥४॥

शच्याकर्त पितरा युवाना शच्याकर्त चमसं देवपानम् ।

शच्या हरी धनुतरावतष्टेन्द्रवाहावृभवो वाजरत्नाः ॥५॥

यो वः सुनोत्यभिपित्वे अह्नां तीव्रं वाजासः सवनं मदाय ।

तस्मै रयिमृभवः सर्ववीरमा तक्षत वृषणो मन्दसानाः ॥६॥

प्रातः सुतमपिबो हर्यश्व माध्यंदिनं सवनं केवलं ते ।

समृभुभिः पिबस्व रत्नधेभिः सखीँर्याँ इन्द्र चकृषे सुकृत्या ॥७॥

ये देवासो अभवता सुकृत्या श्येना इवेदधि दिवि निषेद ।

ते रत्नं धात शवसो नपातः सौधन्वना अभवतामृतासः ॥८॥

यत्तृतीयं सवनं रत्नधेयमकृणुध्वं स्वपस्या सुहस्ताः ।

तदृभवः परिषिक्तं व एतत्सं मदेभिरिन्द्रियेभिः पिबध्वम् ॥९॥

## सायणभाष्यम्

‘ इहोप यात ' इति नवर्चं तृतीयं सूक्तं वामदेवस्यार्षं त्रैष्टुभमार्भवम् । इहोप नव ' इत्यनुक्रमणिका । तृतीयसवने मैत्रावरुणस्येदमुन्नीयमानसूक्तम् । सूत्रितं च - ‘ आ त्वा वहन्त्वसवि देवमिहोप यातेत्यनुसवनम् ' ( आश्व. श्रौ. ५. ५) इति ।।

इ॒होपं यात शवसो नपात॒ः सौधंन्वना ऋभवो॒ मापं भूत ।

अ॒स्मिन्हि व॒ः सव॑ने रत्न॒धेय॑ं गम॒न्त्विन्द्र॒मनु॑ वो॒ मदा॑सः ॥
१

इ॒ह । उप॑ । या॒त॒ । श॒व॒स॒ः । न॒पा॒त॒ः । सौध॑न्वनाः ।
ऋ॒भ॒व॒ः । मा । अप॑ । भू॒त॒ ।

अ॒स्मिन् । हि । व॒ः । सव॑ने । र॒त्न॒ऽधेय॑म् । गम॑न्तु । इन्द्र॑म्
। अनु॑ । व॒ः । मदा॑सः ॥१

इह । उप । यात । शवसः । नपातः । सौधन्वनाः ।
ऋभवः । मा । अप । भूत ।

अस्मिन् । हि । वः । सवने । रत्नऽधेयम् । गमन्तु । इन्द्रम्
। अनु । वः । मदासः ॥१

हे "शवसो “नपातः बलस्य पुत्रास्तस्य न पातयितारो वा हे “सौधन्वनाः सुधन्वनः पुत्राः हे “ऋभवः यूयम् “इहोप “यात अस्मिन् तृतीयसवने उपगच्छत । “माप “भूत अपगता न भवत । “अस्मिन् “सवने “रत्नधेयं रमणीयधनस्य दातारम् “इन्द्रमनु अनुसृत्य “वः युष्मान् "मदासः मदकराः सोमाः “गमन्तु गच्छन्तु । अन्विति क्रियया वा संबध्यते । इन्द्रं युष्मांश्चान्वागच्छन्तु इत्यर्थः । “हि पूरणः ॥

आगंन्नृभू॒णामि॒ह रंत्न॒धेय॒मभू॒त्सोमंस्य॒ सुषुंतस्य पी॒तिः ।

सु॒कृ॒त्यया॒ यत्स्वंप॒स्ययां च॒ँ एकं विच॒क्र चंम॒सं चंतु॒र्धा ॥२

आ । अ॒ग॒न् । ऋ॒भू॒णाम् । इ॒ह । र॒त्न॒ऽधेय॑म् । अभू॑त् । सोम॑स्य । सुऽसु॑तस्य । पी॒तिः ।

सु॒ऽकृ॒त्यया॑ । यत् । सु॒ऽअ॒प॒स्यया॑ । च॒ । एक॑म् । वि॒ऽच॒क्र । च॒म॒सम् । च॒तुः॒ऽधा ॥२

आ । अगन् । ऋभूणाम् । इह । रत्नऽधेयम् । अभूत् । सोमस्य । सुऽसुतस्य । पीतिः ।

सुऽकृत्यया । यत् । सुऽअपस्यया । च । एकम् । विऽचक्र । चमसम् । चतुःऽधा ॥२

“ऋभूणां युष्माकम् “इह तृतीयसवने “रत्नधेयं रत्नदानम् “आगन् आगच्छतु मह्यम् । यद्वा । युष्माकमेव सोमाख्यं रत्नमागन्। यस्मात् “सोमस्य “सुषुतस्य “पीतिः पानम् “अभूत् प्रजापतिना लब्धमित्यर्थः । तदपि कुत इति चेत् ।

उच्यते । “यत् यस्मात् “सुकृत्यया शोभनहस्तव्यापारेण “स्वपस्यया शोभनरथनिर्माणादिकर्मेच्छया “च “एकं सन्तं "चमसं “चतुर्धा “विचक्र कृतवन्तः ॥

व्यंकृणोत चम॒सं चंतु॒र्धा सखे॒ वि शि॒क्षेत्यंब्रवीत ।

अथैंत वाजा अ॒मृतंस्य॒ पन्थां ग॒णं दे॒वानांमृभवः सुहस्ताः ॥३

वि । अ॒कृ॒णो॒त॒ । च॒म॒सम् । च॒तुः॒ऽधा । सखें । वि । शि॒क्ष॒ । इतिं । अ॒ब्र॒वी॒त॒ ।

अथं । ऐ॒त॒ । वा॒जाः॒ । अ॒मृतंस्य । पन्थांम् । ग॒णम् । दे॒वानांम् । ऋ॒भ॒वः॒ । सु॒ऽह॒स्ताः॒ ॥३

वि । अकृणोत । चमसम् । चतुःऽधा । सखे । वि । शिक्ष । इति । अब्रवीत ।

अथ । ऐत । वाजाः । अमृतस्य । पन्थाम् । गणम् । देवानाम् । ऋभवः । सुऽहस्ताः ॥३

हे ऋभवो यूयं “चमसं “चतुर्धा “व्यकृणोत व्यकुरुत । कृत्वा च हे “सखे हे सखिभूताग्ने “वि “शिक्ष अनुगृहाण सोमपानम् “इत्यब्रवीत अवदत यूयम् । “अथ सोऽग्निर्युष्मानवादीत् खलु । किमिति । हे “वाजाः “ऋभवः “सुहस्ताः कुशलहस्ता यूयम् “अमृतस्य “अमरणधर्मकस्य स्वर्गस्य “पन्थां पन्थानम् “ऐत गच्छत । किं तदमृतमिति । “देवानाम् इन्द्रादीनां “गणं संघातमैत ॥

कि॒म्मयः॑ स्वि॒च्चम॒स ए॒ष आ॑स॒ यं काव्ये॑न च॒तुरो॑ विच॒क्र ।

अथा॑ सुनु॒ध्व॒ सव॑न॒ मदा॑य पा॒त ऋ॑भवो॒ मधु॑नः सो॒म्यस्य॑ ॥ ४

कि॒म्ऽमयः॑ । स्वि॒त् । च॒म॒सः । ए॒षः । आ॒स॒ । यम् । काव्ये॑न । च॒तुरः॑ । वि॒ऽच॒क्र ।

अथ॑ । सु॒नु॒ध्व॒म् । सव॑नम् । मदा॑य । पा॒त । ऋ॒भ॒वः॒ । मधु॑नः । सो॒म्यस्य॑ ॥४

किम्ऽमयः । स्वित् । चमसः । एषः । आस । यम् । काव्येन । चतुरः । विऽचक्र ।

अथ । सुनुध्वम् । सवनम् । मदाय । पात । ऋभवः ।
मधुनः । सोम्यस्य ॥४

“किंमयः “स्वित् किमात्मकः “एषः “चमसः “आस । स्वित् प्रश्ने । "यं चमसमेकं सन्तं "काव्येन कवीनां मेधाविनां संबन्धिना कर्मणा कौशलेन "चतुरो “विचक्र कृतवन्तः । “अथ अधुना “सवनम् । सूयते इति सवनः सोमः । तं “मदाय हर्षाय “सुनुध्वं हे ऋत्विजः । हे “ऋभवः यूयं च "सोम्यस्य सोमसंबन्धिनं “मधुनः मधुररसं “पात पिबत ॥

शच्यांकर्त पि॒तरा॒ युवा॑ना॒ शच्यांकर्त चम॒सं दे॑व॒पानं॑म् ।

शच्या॒ हरी॒ धनुं॑तरावतष्टेन्द्र॒वाहा॑वृभवो वाजरत्नाः ॥५

शच्या॑ । अ॒क॒र्त॒ । पि॒तरा॑ । युवा॑ना । शच्या॑ । अ॒क॒र्त॒ ।
च॒म॒सम् । दे॒व॒ऽपान॑म् ।

शच्या॑ । हरी॒ इति॑ । धनु॑ऽतरौ । अ॒त॒ष्ट॒ । इ॒न्द्र॒ऽवाहौ॑ ।
ऋ॒भ॒व॒ः । वा॒ज॒ऽर॒त्ना॒ः ॥५

शच्या । अकर्त । पितरा । युवाना । शच्या । अकर्त ।
चमसम् । देवऽपानम् ।

शच्या । हरी इति । धनुऽतरौ । अतष्ट । इन्द्रऽवाहौ ।
ऋभवः । वाजऽरत्नाः ॥५

हे “वाजरत्नाः रमणीयसोमान्ना हे “ऋभवः यूयं “शच्या कर्मणा “पितरा मातापितरौ । “युवाना युवानो “अकर्त अकुरुत । तथा “शच्या “चमसं “देवपानं देवपानार्हम् “अकर्त चतुर्धाकुरुतेत्यर्थः। “शच्या “हरी अश्वौ “अतष्ट

तक्षणेन संपादितवन्तः । कीदृशौ हरी । “धनुतरौ शीघ्रं गन्तृतरौ इन्द्रवाहौ इन्द्रवोढारौ ॥ ॥ ५ ॥

यो वंः सुनोत्यंभिपित्वे अह्नां तीव्रं वांजासः सवंनं मदांय ।

तस्मैं रयिमृंभवः सर्ववीरमा तंक्षत वृषणो मन्दसानाः ॥६

यः । वः । सुनोतिं । अभिऽपित्वे । अह्नांम् । तीव्रम् । वाजासः । सवंनम् । मदांय ।

तस्मैं । रयिम् । ऋभवः । सर्वऽवीरम् । आ । तक्षत । वृषणः । मन्दसानाः ॥६

यः । वः । सुनोति । अभिऽपित्वे । अह्नाम् । तीव्रम् । वाजासः । सवनम् । मदाय ।

तस्मै । रयिम् । ऋभवः । सर्वऽवीरम् । आ । तक्षत । वृषणः । मन्दसानाः ॥६

हे "ऋभवः "वाजासः अन्नवन्तः “वः युष्मभ्यं “यः यजमानः “अह्नाम् "अभिपित्वे अभिपतने। तृतीयसवने इत्यर्थः । तस्मिन् “तीव्रं रसवत्तरं “सवनम् । सूयते इति सवनः सोमः । तं “मदाय "सुनोति “तस्मै “सर्ववीरं बहुपुत्रोपेतं “रयिं धनं हे “वृषणः फलवर्षितारः “मन्दसानाः मोदमानाः सन्तः “आ “तक्षत संपादयतेत्यर्थः ॥

प्रा॒तः सु॒तमं॑पिबो हर्यश्व॒ माध्यं॑दिनं॒ सव॑नं॒ केव॑लं ते ।

समृ॒भुभिं॑ः पिबस्व रत्न॒धेभि॒ः सखीँ॒र्याँ इं॑न्द्र चकृ॒षे सुं॑कृ॒त्या ॥७

प्रा॒तरितिं । सु॒तम् । अ॒पि॒बः॒ । ह॒रि॒ऽअ॒श्व॒ । माध्यं॑न्दिनम् । सव॑नम् । केव॑लम् । ते॒ ।

सम् । ऋ॒भुऽभिः॑ । पि॒ब॒स्व॒ । र॒त्न॒ऽधेभिः॑ । सखीं॑न् । यान् । इ॒न्द्र॒ । च॒कृ॒षे । सु॒ऽकृ॒त्या ॥७

प्रातरिति । सुतम् । अपिबः । हरिऽअश्व । माध्यन्दिनम् । सवनम् । केवलम् । ते ।

सम् । ऋभुऽभिः । पिबस्व । रत्नऽधेभिः । सखीन् । यान् । इन्द्र । चकृषे । सुऽकृत्या ॥७

हे “हर्यश्व हरितवर्णाश्वोपेतेन्द्र “प्रातः प्रातःसवने “सुतम् अभिषुतं सोमम् “अपिबः पिबस्व । “माध्यंदिनं “सवनं "केवलं “ते परं तवैव नान्येषाम् । सवनद्वयस्य पृथगभिधानात्तृतीयसवनं परिशिष्यते । तृतीयसवने “रत्नधेभिः रमणीयदानैः “ऋभुभिः “सं “पिबस्व । हे “इन्द्र “यान् ऋभून् “सुकृत्या शोभनकर्मणा “सखीन् “चकृषे अकरोः ॥

ये दे॒वासो॒ अभ॑वता सुकृ॒त्या श्ये॒ना इ॒वेदधि॑ दि॒वि नि॑षे॒द ।

ते रत्नं धात शवसो नपात॒ः सौधंन्वना॒ अभंवता॒मृतांसः ॥८

ये । दे॒वासः॑ । अभंवत । सु॒ऽकृ॒त्या । श्ये॒नाःऽइंव । इत् । अधिं । दि॒वि । नि॒ऽसे॒द ।

ते । रत्नंम् । धा॒त॒ । श॒व॒स॒ः । न॒पा॒त॒ः । सौधंन्वनाः । अभंवत । अ॒मृतांसः ॥८

ये । देवासः । अभवत । सुऽकृत्या । श्येनाःऽइव । इत् । अधि । दिवि । निऽसेद ।

ते । रत्नम् । धात । शवसः । नपातः । सौधन्वनाः । अभवत । अमृतासः ॥८

हे ऋभवः "ये यूयं “सुकृत्या शोभनकर्मणा “देवासः देवाः “अभवत अभूत । “श्येनाइवेत् शंसनीयगतयो गृध्रविशेषा इव “दिवि द्युलोके “अधि “निषेद अधिनिषण्णाः हे "शवसो "नपातः बलवन्तः “ते यूयं “रत्नं धनं “धात प्रयच्छत । हे “सौधन्वनाः सुधन्वनः पुत्राः “अमृतासः अमृता देवाः “अभवत ।।

यत्तृतीयं सवनं रत्नधेयमकृणुध्वं स्वपस्या सुहस्ताः ।

तदृभवः परिषिक्तं व एतत्सं मदेभिरिन्द्रियेभिः
पिबध्वम् ॥९

यत् । तृतीयम् । सवनम् । रत्नऽधेयम् । अकृणुध्वम् ।
सुऽअपस्या । सुऽहस्ताः ।

तत् । ऋ॒भ॒व॒: । परिं॑ऽसिक्तम् । व॒: । ए॒तत् । सम् ।
मदें॑भिः । इ॒न्द्रि॒येभिः॑ । पि॒ब॒ध्व॒म् ॥९

यत् । तृतीयम् । सवनम् । रत्नऽधेयम् । अकृणुध्वम् ।
सुऽअपस्या । सुऽहस्ताः ।

तत् । ऋभवः । परिऽसिक्तम् । वः । एतत् । सम् ।
मदेभिः । इन्द्रियेभिः । पिबध्वम् ॥९

हे “सुहस्ताः शोभनहस्ताः “ऋभवः “रत्नधेयं
रमणीयसोमदानवत् “यत्तृतीयं “सवनम् “अकृणुध्वं
प्रसाधितवन्तः । “स्वपस्या शोभनकर्मेच्छया “तत् “एतत्
सवनं सवनगतं सोमद्रव्यं “परिषिक्तं परिषेचनवत् “वः
युष्माकं संबन्धिभिः “मदेभिः माद्यद्भिः “इन्द्रियेभिः
इन्द्रियैः “सं “पिबध्वम् । यद्यपि वदनमेव पानसाधनं

तथापि चक्षुःश्रोत्रादीनामपि दर्शनश्रवणादिना तृप्तिसद्भावात् पातृत्वमुपचर्यते ॥ ॥ ६ ॥

# ऋग्वेदः सूक्तं ४.३६



वामदेवो गौतमः ।

दे. ऋभवः। जगती, ९ त्रिष्टुप्

---

अनश्वो जातो अनभीशुरुक्थ्यो रथस्त्रिचक्रः परि वर्तते रजः ।

महत्तद्वो देव्यस्य प्रवाचनं द्यामृभवः पृथिवीं यच्च पुष्यथ ॥१॥

रथं ये चक्रुः सुवृतं सुचेतसोऽविह्वरन्तं मनसस्परि ध्यया ।

ताँ ऊ न्वस्य सवनस्य पीतय आ वो वाजा ऋभवो वेदयामसि ॥२॥

तद्वो वाजा ऋभवः सुप्रवाचनं देवेषु विभ्वो अभवन्महित्वनम् ।

जिव्री यत्सन्ता पितरा सनाजुरा पुनर्युवाना चरथाय तक्षथ ॥३॥

एकं वि चक्र चमसं चतुर्वयं निश्चर्मणो गामरिणीत धीतिभिः ।

अथा देवेष्वमृतत्वमानश श्रुष्टी वाजा ऋभवस्तद्व उक्थ्यम् ॥४॥

ऋभुतो रयिः प्रथमश्रवस्तमो वाजश्रुतासो यमजीजनन्नरः ।

विभ्वतष्टो विदथेषु प्रवाच्यो यं देवासोऽवथा स विचर्षणिः ॥५॥

स वाज्यर्वा स ऋषिर्वचस्यया स शूरो अस्ता पृतनासु दुष्टरः ।

स रायस्पोषं स सुवीर्यं दधे यं वाजो विभ्वाँ ऋभवो यमाविषुः ॥६॥

श्रेष्ठं वः पेशो अधि धायि दर्शतं स्तोमो वाजा ऋभवस्तं जुजुष्टन ।

धीरासो हि ष्ठा कवयो विपश्चितस्तान्व एना ब्रह्मणा वेदयामसि ॥७॥

यूयमस्मभ्यं धिषणाभ्यस्परि विद्वांसो विश्वा नर्याणि भोजना ।

द्युमन्तं वाजं वृषशुष्ममुत्तममा नो रयिमृभवस्तक्षता वयः ॥८॥

इह प्रजामिह रयिं रराणा इह श्रवो वीरवत्तक्षता नः ।

येन वयं चितयेमात्यन्यान्तं वाजं चित्रमृभवो ददा नः ॥९॥

## सायणभाष्यम्

‘ अनश्वो जातः' इति नवर्चं चतुर्थं सूक्तमार्भवम् । ऋषिर्वामदेवः। अन्त्या त्रिष्टुप् शिष्टास्त्रिष्टुबन्तपरिभाषया जगत्यः । अनश्वोऽन्त्या त्रिष्टुप् ' इत्यनुक्रमणिका । आभिप्लविके तृतीयेऽहनि वैश्वदेवशस्त्रे आर्भवनिविद्धानीयमिदम् । तथा च सूत्रितम् - अनश्वो जातः परावतो य इति वैश्वदेवम् ' ( आश्व. श्रौ. ७. ७ ) इति ॥

अ॒न॒श्वो जा॒तो अ॑नभी॒शुरु॒क्थ्यो॒३॒॑ रथ॑स्त्रिच॒क्रः परि॑ वर्तते॒ रज॑ः ।

म॒हत्तद्वों दे॒व्य॑स्य प्र॒वाच॑नं॒ द्यामृ॑भवः पृथि॒वीं यच्च॒ पुष्य॑थ ॥१

अ॒न॒श्वः । जा॒तः । अ॒न॒भी॒शुः । उ॒क्थ्य॑ः । रथ॑ः । त्रि॒ऽच॒क्रः । परि॑ । व॒र्त॒ते॒ । रज॑ः ।

म॒हत् । तत् । व॒ः । दे॒व्य॑स्य । प्र॒ऽवाच॑नम् । द्याम् । ऋ॒भ॒व॒ः । पृ॒थि॒वीम् । यत् । च॒ । पुष्य॑थ ॥१

अनश्वः । जातः । अनभीशुः । उक्थ्यः । रथः । त्रिऽचक्रः । परि । वर्तते । रजः ।

महत् । तत् । वः । देव्यस्य । प्रऽवाचनम् । द्याम् । ऋभवः । पृथिवीम् । यत् । च । पुष्यथ ॥१

हे “ऋभवः अश्विनोः संबन्धी युष्मद्दत्तः “रथः “अनश्वो "जातः वाहनाश्वनिरपेक्षः संपन्नः । तथा “अनभीशुः प्रग्रहरहितः “उक्थ्यः स्तुत्यः “त्रिचक्रः चक्रत्रययुक्तः सन् “रजः अन्तरिक्षं “परि “वर्तते परिभ्रमति । "महत् प्रभूतं “तत् रथनिर्माणाख्यं कर्म “वः युष्माकं “देव्यस्य देवत्वस्य “प्रवाचनं प्रवक्तृ प्रख्यापकम् । “यच्च येन कर्मणा “द्यां “पृथिवीं च “पुष्यथ पुष्टां कुरुथ ॥

रथं॒ ये च॒क्रुः सु॒वृतं॑ सु॒चेत॒सोऽवि॑ह्वरन्तं॒ मन॑स॒स्परि॒ ध्यया॑ ।

ताँ ऊ॒ न्व१॒॑स्य सव॑नस्य पी॒तय॒ आ वो॑ वाजा ऋभवो वेदयामसि ॥२

रथ॑म् । ये । च॒क्रुः । सु॒ऽवृत॑म् । सु॒ऽचेत॑सः । अवि॑ऽह्वरन्तम् । मन॑सः । परि॑ । ध्यया॑ ।

तान् । ऊ॒ँ इति॑ । नु । अ॒स्य । सव॑नस्य । पी॒तये॑ । आ । व॒ः । वा॒जा॒ः । ऋ॒भ॒व॒ः । वे॒द॒या॒म॒सि॒ ॥२

रथम् । ये । चक्रुः । सुऽवृतम् । सुऽचेतसः । अविऽह्वरन्तम् । मनसः । परि । ध्यया ।

तान् । ऊँ इति । नु । अस्य । सवनस्य । पीतये । आ । वः । वाजाः । ऋभवः । वेदयामसि ॥२

“सुचेतसः शोभनचित्ताः "ये ऋभवः “सुवृतं सुवर्तनचक्रम् “अविह्वरन्तम् अकुटिलं “रथं “मनसः “परि “ध्यया मनसो ध्यानेनाप्रयत्नेन “नु “क्षिप्रं “चक्रुः “तान् । उशब्द एवार्थे । तानेव “अस्य “सवनस्य “पीतये एतं सोमं पातुं हे "वाजाः हे "ऋभवः ”वः युष्मान् “आ "वेदयामसि आवेदयामः ॥

तद्वों वाजा ऋभवः सुप्रवाच॒नं दे॒वेषुं विभ्वो अभवन्महित्व॒नम् ।

जिव्री॒ यत्सन्तां पि॒तरां सना॒जुरा॒ पुन॒र्युवांना च॒रथांय॒ तक्षंथ ॥३

तत् । व॒ः । वा॒जा॒ः । ऋ॒भ॒व॒ः । सु॒ऽप्र॒वा॒च॒नम् । दे॒वेषुं । वि॒ऽभ्व॒ः । अ॒भ॒व॒त् । म॒हि॒ऽत्व॒नम् ।

जिव्री॒ इतिं । यत् । सन्तां । पि॒तरां । स॒ना॒ऽजुरां । पुनः॑ । युवांना । च॒रथांय । तक्षंथ ॥३

तत् । वः । वाजाः । ऋभवः । सुऽप्रवाचनम् । देवेषु । विऽभ्वः । अभवत् । महिऽत्वनम् ।

जिव्री इति । यत् । सन्ता । पितरा । सनाऽजुरा । पुनः । युवाना । चरथाय । तक्षथ ॥३

हे "वाजाः “ऋभवः हे “विभ्वः विभवः । इतरापेक्षया परस्परं बहुवचनमित्युक्तम् । “वः युष्माकं “तत् “महित्वनं महत्त्वं माहात्म्यं “देवेषु मध्ये “सुप्रवाचनं प्रवाच्यम् “अभवत् । तदित्युक्तं यदित्याह। “जिव्री वृद्धौ “सन्ता सन्तौ “सनाजुरा सदा जीर्णौ सन्तौ “पितरा पितरौ

“पुनर्युवाना नित्यतरुणौ “चरथाय यथेच्छं संचरणाय “तक्षथ संपादितवन्तः ॥

एकं॒ वि चं॑क्र च॒म॒सं चतु॑र्वयं॒ निश्चर्म॑णो॒ गाम॑रिणीत धी॒तिभिं॑ः ।

अथा॑ दे॒वेष्वं॑मृत॒त्वमा॑नश श्रु॒ष्टी वां॑जा ऋभव॒स्तद्वं॑ उ॒क्थ्यं॑म् ॥४

एकं॑म् । वि । च॒क्र॒ । च॒म॒सम् । चतुः॑ऽवयम् । निः । चर्म॑णः । गाम् । अ॒रि॒णी॒त॒ । धी॒तिऽभिः॑ ।

अथं॑ । दे॒वेषुं॑ । अ॒मृ॒त॒ऽत्वम् । आ॒न॒श॒ । श्रु॒ष्टी । वा॒जा॒ः । ऋ॒भ॒व॒ः । तत् । व॒ः । उ॒क्थ्यं॑म् ॥४

एकम् । वि । चक्र । चमसम् । चतुःऽवयम् । निः । चर्मणः । गाम् । अरिणीत । धीतिऽभिः ।

अथ । देवेषु । अमृतऽत्वम् । आनश । श्रुष्टी । वाजाः । ऋभवः । तत् । वः । उक्थ्यम् ॥४

हे ऋभवः “एकं “चमसम् एकमेव सन्तं पानसाधनं चमसं “चतुर्वयम् । वयाः शाखाः । चतुःशाखं चतुरवयवं “वि “चक्र व्यकुरुत । तथा “धीतिभिः कर्मभिः “चर्मणः नूतनां “गां “निः “अरिणीत समस्कुरुत । निरित्येष समित्येतस्य स्थाने । “अथ अतः कारणात् “देवेषु मध्ये “अमृतत्वमानश प्राप्नुत । हे “वाजाः हे “ऋभवः “तत् तादृशं “वः युष्माकं कर्म । “श्रुष्टी इति क्षिप्रनामैतत् । क्षिप्रम् “उक्थ्यं स्तुत्यं भवति ॥

ऋ॒भु॒तो र॒यिः प्रंथ॒मश्रंवस्तमो॒ वाजंश्रुतासो॒
यमजींजन॒न्नरं॑ः ।

वि॒भ्व॒त॒ष्टो वि॒दथेंषु प्र॒वाच्यो॒ यं देंवा॒सोऽवंथा॒ स विचंर्षणिः
॥५

ऋ॒भु॒तः । र॒यिः । प्र॒थ॒मश्रंवःऽतमः । वाजंऽश्रुतासः । यम् ।
अजींजनन् । नरः॑ ।

वि॒भ्व॒ऽत॒ष्टः । वि॒दथेंषु । प्र॒ऽवाच्यः॑ । यम् । दे॒वा॒सः॒ ।
अवंथ । सः । विऽचंर्षणिः ॥५

ऋभुतः । रयिः । प्रथमश्रवःऽतमः । वाजऽश्रुतासः । यम् ।
अजीजनन् । नरः ।

विभ्वऽतष्टः । विदथेषु । प्रऽवाच्यः । यम् । देवासः । अवथ । सः । विऽचर्षणिः ॥५

“ऋभुतः ऋभूणां सकाशात् "प्रथमश्रवस्तमः प्रथमं मुख्यमतिशयितं श्रवः अन्नं यशो वा यस्य धनस्य तत् “रयिः धनम् । अस्माकं भवत्विति शेषः । “वाजश्रुतासः वाजैः अन्नैः सह विख्याताः “नरः नेतारः ऋभवः “यं रयिम् “अजीजनन् उत्पादितवन्तः । “विभ्वतष्टः विभ्वभिर्ऋभुभिस्तष्टः तक्षणसंपन्नश्चमसोऽश्विनो रथो वा “विदथेषु यज्ञेषु “प्रवाच्यः प्रकर्षेण स्तुत्यः । हे “देवासः द्योतमानाः यूयं “यं रथं चमसं वा “अवथ रक्षथ । “स “विचर्षणिः विविधं द्रष्टा भवति द्रष्टव्यो भवतीत्यर्थः ॥ ॥ ७ ॥

स वा॒ज्यर्वा॒ स ऋषि॑र्वच॒स्यया॒ स शूरो॒ अस्ता॒ पृत॑नासु
दु॒ष्टर॑ः ।

स रा॒यस्पोषं॒ स सु॒वीर्यँ॑ दधे॒ यं वाजो॒ विभ्वाँ॑ ऋ॒भवो॒
यमावि॑षुः ॥६

सः । वा॒जी । अर्वा॑ । सः । ऋषि॑ः । व॒च॒स्यया॑ । सः । शूर॑ः
। अस्ता॑ । पृत॑नासु । दु॒स्तर॑ः ।

सः । रा॒यः । पोष॑म् । सः । सु॒ऽवीर्य॑म् । द॒धे॒ । यम् । वाज॑ः
। विऽभ्वा॑ । ऋ॒भव॑ः । यम् । आवि॑षुः ॥६

सः । वाजी । अर्वा । सः । ऋषिः । वचस्यया । सः । शूरः
। अस्ता । पृतनासु । दुस्तरः ।

सः । रायः । पोषम् । सः । सुऽवीर्यम् । दधे । यम् । वाजः । विऽभ्वा । ऋभवः । यम् । आविषुः ॥६

“स “वाजी वेजनवान् बलवान् सन् “अर्वा अरणकुशलो भवति । “स “ऋषिः अतीन्द्रियज्ञानी सन् “वचस्यया स्तुत्या युक्तो भवति । “स “शरः विक्रान्तः सन् “अस्ता क्षेप्ता शत्रूणां भवति । स्वयं च “पृतनासु संग्रामेषु “दुष्टरः नाभिभाव्यो भवति । “सः एव “रायस्पोषं धनपुष्टिं “दधे धत्ते । “स “सुवीर्यं सुवीरत्वं दधे धत्ते । “यं मनुष्यं “वाजो “विभ्वा “ऋभवः च “आविषुः अरक्षन् । स एवमेवं भवतीति । अन्त्यस्य बहुवन्निर्देशस्त्रयाणाम् ऋभुव्यवहारप्राचुर्याभिप्रायः॥

श्रेष्ठं॑ व॒ः पेशो॒ अधि॑ धायि दर्श॒तं स्तोमो॑ वाजा ऋभव॒स्तं

जुंजुष्टन ।

धीरांसो हि ष्ठा कवयों विपश्चितस्तान्वं एना ब्रह्मणा वेंदयामसि ॥७

श्रेष्ठंम् । वः । पेशः । अधिं । धायि । दर्शतम् । स्तोमः । वाजाः । ऋभवः । तम् । जुजुष्टन ।

धीरांसः । हि । स्थ । कवयः । विपःऽचितः । तान् । वः । एना । ब्रह्मंणा । आ । वेदयामसि ॥७

श्रेष्ठम् । वः । पेशः । अधि । धायि । दर्शतम् । स्तोमः । वाजाः । ऋभवः । तम् । जुजुष्टन ।

धीरासः । हि । स्थ । कवयः । विपःऽचितः । तान् । वः । एना । ब्रह्मणा । आ । वेदयामसि ॥७

“श्रेष्ठम् अत्युत्कृष्टमत एव “दर्शतं दर्शनीयं “वः युष्माकं “पेशः रूपम् “अधि “धायि अधिनिहितम् । अतस्तदुचितो यः “स्तोमः स्तोत्रमस्मत्कृतमस्ति हे “वाजा “ऋभवस्तं स्तोमं स्तोत्रं "जुजुष्टन सेवध्वम् । ये यूयं “धीरासो “हि धीमन्तः प्रसिद्धाः “कवयः मेधाविनः “विपश्चितः ज्ञानवन्तः “स्थ भवत “तान्वः युष्मान् “एना एनेन “ब्रह्मणा मन्त्रेण शस्त्रात्मकेन “आ “वेदयामसि । अथवोक्तलक्षणाः विपश्चितः स्तोतारो यान् । स्तुवन्तीति शेषः । तान् ब्रह्मणा आ वेदयामसि प्रज्ञापयामः ॥

यूयम॒स्मभ्यं॑ धि॒षणा॑भ्य॒स्परिं वि॒द्वांसो॒ विश्वा॒ नर्या॑णि॒ भोजं॑ना ।

द्यु॒मन्त॒ं वाज॒ं वृष॑शुष्ममुत्त॒ममा नो॑ र॒यिमृ॑भवस्तक्ष॒ता वय॑ः ॥८

यू॒यम् । अ॒स्मभ्य॑म् । धि॒षणा॑भ्यः । परि॑ । वि॒द्वांस॑ः । विश्वा॑ । नर्या॑णि । भोज॑ना ।

द्यु॒ऽमन्त॑म् । वाज॑म् । वृष॑ऽशुष्मम् । उ॒त्ऽत॒मम् । आ । न॒ः । र॒यिम् । ऋ॒भ॒व॒ः । त॒क्ष॒त॒ । आ । वय॑ः ॥८

यूयम् । अस्मभ्यम् । धिषणाभ्यः । परि । विद्वांसः । विश्वा । नर्याणि । भोजना ।

द्युऽमन्तम् । वाजम् । वृषऽशुष्मम् । उत्ऽतमम् । आ । नः । रयिम् । ऋभवः । तक्षत । आ । वयः ॥८

हे ऋभवः “यूयमस्मभ्यं “धिषणाभ्यस्परि स्तुतिभ्यो निमित्तभूताभ्यः । परीति पञ्चम्यर्थानुवादी । यद्वा । अस्मन्मतिभ्योऽधिकानि “नर्याणि नृभ्यो हितानि “विश्वा सर्वाणि “भोजना भोग्यानि “विद्वांसः जानन्तः सन्तः “आ “तक्षत संपादयत। किं च “द्युमन्तं दीप्तिमन्तं हिरण्यादिरूपं “वाजं बलवन्तं “वृषशुष्मं सेक्तॄणां बलवतां शोषकम् “उत्तमं “रयिं “नः अस्माकं “वयः अन्नं च “आ तक्षत हे “ऋभवः ॥

इ॒ह प्र॒जामि॒ह र॒यिं ररा॑णा इ॒ह श्रवो॑ वी॒रव॑त्तक्षता नः ।

येन॑ व॒यं चि॒तये॒मात्य॒न्यान्तं वाजं॑ चि॒त्रमृ॑भवो ददा नः ॥९

इ॒ह । प्र॒ऽजाम् । इ॒ह । र॒यिम् । ररा॑णाः । इ॒ह । श्रवः॑ ।
वी॒रऽव॑त् । त॒क्ष॒त॒ । न॒ः ।

येन॑ । व॒यम् । चि॒तये॑म । अति॑ । अ॒न्यान् । तम् । वाज॑म् ।
चि॒त्रम् । ऋ॒भ॒व॒ः । द॒द॒ । न॒ः ॥९

इह । प्रऽजाम् । इह । रयिम् । रराणाः । इह । श्रवः ।
वीरऽवत् । तक्षत । नः ।

येन । वयम् । चितयेम । अति । अन्यान् । तम् । वाजम् ।
चित्रम् । ऋभवः । दद । नः ॥९

“नः अस्माकम् “इह यज्ञे “रराणाः रममाणाः “प्रजां
पुत्रपौत्रादिरूपां “तक्षत संपादयत । “इह एव यज्ञे “रयिं च
तक्षत । “इह एव यज्ञे “श्रवः यशः “वीरवत्
वीरैर्भृत्यादिभिरुपेतं तक्षत । किंच “वयं “येन वाजेन

“अन्यान् अस्मत्समानान् “अति “चितयेम अतिक्रम्य ज्ञायेमहि । “तं “चित्रं चायनीयं “वाजम् अन्नं हे “ऋभवः “नः “दद अस्मभ्यं दत्त ॥ ॥ ८ ॥

# ऋग्वेदः सूक्तं ४.३७



## दे. ऋभवः। त्रिष्टुप्, ५-८ अनुष्टुप् ।

उप नो वाजा अध्वरमृभुक्षा देवा यात पथिभिर्देवयानैः ।

यथा यज्ञं मनुषो विक्ष्वासु दधिध्वे रण्वाः सुदिनेष्वह्नाम् ॥१॥

ते वो हृदे मनसे सन्तु यज्ञा जुष्टासो अद्य घृतनिर्णिजो गुः ।

प्र वः सुतासो हरयन्त पूर्णाः क्रत्वे दक्षाय हर्षयन्त पीताः ॥२॥

त्र्युदायं देवहितं यथा व स्तोमो वाजा ऋभुक्षणो ददे वः ।

जुह्वे मनुष्वदुपरासु विक्षु युष्मे सचा बृहद्दिवेषु सोमम् ॥३॥

पीवोअश्वाः शुचद्रथा हि भूतायःशिप्रा वाजिनः सुनिष्काः ।

इन्द्रस्य सूनो शवसो नपातोऽनु वश्चेत्यग्रियं मदाय ॥४॥

ऋभुमृभुक्षणो रयिं वाजे वाजिन्तमं युजम् ।

इन्द्रस्वन्तं हवामहे सदासातममश्विनम् ॥५॥

सेदृभवो यमवथ यूयमिन्द्रश्च मर्त्यम् ।

स धीभिरस्तु सनिता मेधसाता सो अर्वता ॥६॥

वि नो वाजा ऋभुक्षणः पथश्चितन यष्टवे ।

अस्मभ्यं सूरय स्तुता विश्वा आशास्तरीषणि ॥७॥

तं नो वाजा ऋभुक्षण इन्द्र नासत्या रयिम् ।

समश्वं चर्षणिभ्य आ पुरु शस्त मघत्तये ॥८॥

## सायणभाष्यम्

‘उप नो वाजाः' इत्यष्टर्चं पञ्चमं सूक्तं वामदेवस्यार्षमार्भवं त्रैष्टुभम्। पञ्चम्याद्याश्चतस्रोऽनुष्टुभः । तथा चानुक्रान्तम्- उप नोऽष्टौ चतुरनुष्टुबन्तम्' इति । व्यूढे दशरात्रे षष्ठेऽहनि वैश्वदेवशस्त्रे आद्याः चतस्रः शस्याः । ‘ उप नो वाजा इति त्रयोदशार्भवं चतस्रश्च' (आश्व. श्रौ. ८. ८) इति हि सूत्रितम् ॥

उपं नो वाजा अध्व॒रमृं॑भुक्षा॒ देवां या॒त प॒थिभिं॑र्दे॒व॒यानैः॑ ।

यथां य॒ज्ञं मनुं॑षो वि॒क्ष्वा॒३॒॑सु दंधि॒ध्वे रंण्वाः सु॒दिने॒ष्वह्नां॑म् ॥१

उपं । नः॒ । वा॒जाः॒ । अ॒ध्व॒रम् । ऋ॒भु॒क्षाः॒ । देवाः॑ । या॒त । प॒थिऽभिः॑ । दे॒व॒ऽयानैः॑ ।

यथां । य॒ज्ञम् । मनुंषः । वि॒क्षु । आ॒सु । द॒धि॒ध्वे । र॒ण्वाः॒ । सु॒ऽदिनेंषु । अह्नांम् ॥१

उप । नः । वाजाः । अध्वरम् । ऋभुक्षाः । देवाः । यात । पथिऽभिः । देवऽयानैः ।

यथा । यज्ञम् । मनुषः । विक्षु । आसु । दधिध्वे । रण्वाः । सुऽदिनेषु । अह्नाम् ॥१

हे “वाजाः' हे “ऋभुक्षाः ऋभवो हे “देवाः “नः “अध्वरं यागम् “उप “यात उपगच्छत । “देवयानैः देवैर्गन्तव्यैः “पथिभिः मार्गैः । “यथा येन प्रकारेण “मनुषः मनोः संबन्धिनीषु “आसु “विक्षु प्रजासु यजमानेषु मध्ये हे

“रण्वाः रमणीया ऋभवः "अह्नां “सुदिनेषु सुदिनत्वनिमित्तेषु “यज्ञम् अस्मदीयं “दधिध्वे धारयथ । यथा येन प्रकारेण यज्ञमागत्य सुदिनत्वं कुरुथ तथा यज्ञमायातेति ॥

ते वो॑ हृ॒दे मन॑से सन्तु य॒ज्ञा जुष्टा॑सो अ॒द्य घृ॒तनि॑र्णिजो गुः ।

प्र व॑ः सु॒तासो॑ हरयन्त पू॒र्णाः क्रत्वे॒ दक्षा॑य हर्षयन्त पी॒ताः ॥२

ते । व॒ः । हृ॒दे । मन॑से । स॒न्तु॒ । य॒ज्ञाः । जुष्टा॑सः । अ॒द्य । घृ॒तऽनि॑र्निजः । गु॒ः ।

प्र । व॒ः । सु॒तास॑ः । ह॒र॒य॒न्त॒ । पू॒र्णाः । क्रत्वे॑ । दक्षा॑य । ह॒र्ष॒य॒न्त॒ । पी॒ताः ॥२

ते । वः । हृदे । मनसे । सन्तु । यज्ञाः । जुष्टासः । अद्य । घृतऽनिर्निजः । गुः ।

प्र । वः । सुतासः । हरयन्त । पूर्णाः । क्रत्वे । दक्षाय । हर्षयन्त । पीताः ॥२

“अद्य अस्मिन् यागदिने “ते एते “यज्ञाः यागसाधनाः सोमाः "वो “हृदे युष्मद्धृदयाय “मनसे तत्प्रीतये “सन्तु भवन्तु । अद्यास्मिन् दिने “जुष्टासः पर्याप्ताः सोमाः “घृतनिर्णिजः मिश्रणद्रव्येण दीप्तरूपाः “गुः गच्छन्तु युष्मद्धृदयम् । “सुतासः अभिषुताः सोमाः चमसेषु “पूर्णाः “वः युष्मदर्थं "प्र “हरयन्त प्रह्रियन्ते । यद्वा । हर्यंतेः कान्तिकर्मण इदं रूपम् । प्रकर्षेण वः युष्मान् कामयन्ते । “क्रत्वे क्रतवे कर्मणे “दक्षाय उत्साहाय “पीताः "हर्षयन्त हर्षयन्तु ॥

त्र्युदायं देवहिंतं यथां वः स्तोमों वाजा ऋभुक्षणो ददे वंः ।

जुह्वे मंनुष्वदुपंरासु विक्षु युष्मे सचां बृहद्दिंवेषु सोमंम् ॥३

त्रिऽउदायम् । देवऽहिंतम् । यथां । वः । स्तोमः । वाजाः । ऋभुक्षणः । ददे । वः ।

जुह्वे । मनुष्वत् । उपंरासु । विक्षु । युष्मे इतिं । सचां । बृहत्ऽदिंवेषु । सोमंम् ॥३

त्रिऽउदायम् । देवऽहितम् । यथा । वः । स्तोमः । वाजाः । ऋभुक्षणः । ददे । वः ।

जुह्वे । मनुष्वत् । उपरासु । विक्षु । युष्मे इति । सचा । बृहत्ऽदिवेषु । सोमम् ॥३

“त्र्युदायं त्र्युदयं सवनत्रयगमनोपेतं “देवहितं सोमाख्यमन्नं देवेभ्यो हितं देवैर्वा विहितम् । तृतीयसवनस्थम् इत्यर्थः । तत् "यथा “वः युष्मान् “ददे धारयति । हे "वाजाः हे “ऋभुक्षणः ऋभवो यथा “स्तोमः स्तोत्रं “वः ददे धारयति । “उपरासु । उप देवयजनसमीपे रमन्ते इत्युपराः । तासु “विक्षु प्रजासु "बृहद्दिवेषु प्रभूतदीप्तिषु देवेषु मध्ये "मनुष्वत् मनुरिव "युष्मे युष्मदर्थं “सचा सह अनेकग्रहेषु प्रस्थितं "जुह्वे जुहोमि "सोमम् ॥

पीवोंअश्वाः शु॒चद्रं॑था॒ हि भू॒तायं॑ःशिप्रा वाजिनः सुनि॒ष्काः ।

इन्द्रंस्य सूनो शवसो नपा॒तोऽनुं वश्चेत्यग्रि॒यं मदा॑य ॥४

पीवः॑ऽअश्वाः । शु॒चत्ऽरं॑थाः । हि । भू॒त । अयः॑ऽशिप्राः । वा॒जि॒नः॒ । सु॒ऽनि॒ष्काः ।

इन्द्रंस्य । सू॒नो॒ इतिं । श॒व॒सः॒ । न॒पा॒तः॒ । अनुं । वः॒ । चे॒ति॒ । अ॒ग्रि॒यम् । मदा॑य ॥४

पीवःऽअश्वाः । शुचत्ऽरथाः । हि । भूत । अयःऽशिप्राः । वाजिनः । सुऽनिष्काः ।

इन्द्रस्य । सूनो इति । शवसः । नपातः । अनु । वः । चेति । अग्रियम् । मदाय ॥४

हे “वाजिनः ऋभवः “पीवोअश्वाः पीवानोऽश्वा येषां ते तादृशाः । तथा “शुचद्रथाः दीप्तरथाः "अयःशिप्राः। शिप्रे

हनू नासिके वा '। अयोवत्सारभूतशिप्राः “सुनिष्काः शोभनधनाश्च “भूत भवत । हे “इन्द्रस्य "सूनो सूनवः पुत्रवद्रक्षणीया हे “शवसो “नपातः बलस्य पुत्रा बलिनः “वः युष्मभ्यं “मदाय “अनु “चेति अन्वज्ञायि । देवेषु “अग्रियम् अग्रे भवं तृतीयसवनम् ।।

ऋ॒भुमृ॑भुक्षणो र॒यिं वाजे॑ वा॒जिन्त॑मं॒ युज॑म् ।

इन्द्र॑स्वन्तं हवामहे सदा॒सात॑मम॒श्विन॑म् ॥५

ऋ॒भुम् । ऋ॒भु॒क्ष॒णः॒ । र॒यिम् । वाजे॑ । वा॒जिन्ऽत॑मम् । युज॑म् ।

इन्द्र॑स्वन्तम् । ह॒वा॒म॒हे॒ । स॒दा॒ऽसात॑मम् । अ॒श्विन॑म् ॥५

ऋभुम् । ऋभुक्षणः । रयिम् । वाजे । वाजिन्ऽतमम् । युजम् ।

इन्द्रस्वन्तम् । हवामहे । सदाऽसातमम् । अश्विनम् ॥५

हे “ऋभुक्षणः ऋभवः “ऋभुम् उरुभासमानं “रयिं धनरूपम् । तद्धेतुभूतत्वात् ताच्छब्द्यम् । “वाजे संग्रामे “वाजिन्तमम् अत्यन्तबलवन्तं "युजं परस्परयोगोपेतम् “इन्द्रस्वन्तम् इन्द्रवन्तमिन्द्रियवन्तं “सदासातमं सर्वदा दातृतमम् “अश्विनम् अश्ववन्तं भवतां गणं “हवामहे आह्वयामि ॥ ॥९॥

सेदृंभवो यमवंथ यूयमिन्द्रंश्च मर्त्यम् ।

स धीभिरंस्तु सनिंता मेधसांता सो अर्वंता ॥६

सः । इत् । ऋ॒भ॒व॒ः । यम् । अवंथ । यू॒यम् । इन्द्रः॑ । च॒ ।
मर्त्यं॑म् ।

सः । धी॒भिः । अ॒स्तु॒ । सनिं॑ता । मे॒धऽसां॑ता । सः । अर्वं॑ता
॥६

सः । इत् । ऋभवः । यम् । अवथ । यूयम् । इन्द्रः । च ।
मर्त्यम् ।

सः । धीभिः । अस्तु । सनिता । मेधऽसाता । सः । अर्वता
॥६

हे “ऋभवः "यूयमिन्द्रश्च “यं “मर्त्यम् “अवथ रक्षथ । “सेत्
स एव “अस्तु भवतु । नान्यः श्रेष्ठो भवत्वित्यर्थः । “सः
एव “धीभिः कर्मभिः “सनिता संभक्ता भवतु । “मेधसाता

मेधसातौ यज्ञे “सः एव “अर्वता अरणवताश्वेन युक्तो भवतु ॥

वि नो॑ वाजा ऋभुक्षणः प॒थश्चि॑तन॒ यष्ट॑वे ।

अ॒स्मभ्यं॑ सूरयः स्तु॒ता विश्वा॒ आशा॑स्तरी॒षणि॑ ॥७

वि । न॒ः । वा॒जा॒ः । ऋ॒भु॒क्ष॒ण॒ः । प॒थः । चि॒त॒न॒ । यष्ट॑वे ।

अ॒स्मभ्य॑म् । सू॒र॒य॒ः । स्तु॒ताः । विश्वा॑ः । आशा॑ः । त॒री॒षणि॑ ॥७

वि । नः । वाजाः । ऋभुक्षणः । पथः । चितन । यष्टवे ।

अस्मभ्यम् । सूरयः । स्तुताः । विश्वाः । आशाः । तरीषणि ॥७

हे "वाजाः हे “ऋभुक्षणः ऋभवः “नः अस्माकं “पथः मार्गान् “यष्टवे यष्टुं यज्ञमार्गान् “वि “चितन विचेतयत । प्रज्ञापयतेत्यर्थः । “अस्मभ्यं हे "सूरयः मेधाविनो यूयं “स्तुताः सन्तः “विश्वा “आशाः सर्वा दिशः “तरीषणि तरीतुम् । सामर्थ्यं वितरतेति शेषः ॥

तं नों वाजा ऋभुक्षण इन्द्र नासंत्या रयिम् ।

समश्वं चर्षणिभ्य आ पुरु शंस्त मघत्तंये ॥८

तम् । नः । वाजाः । ऋभुक्षणः । इन्द्रं । नासंत्या । रयिम् ।

सम् । अश्वंम् । च॒र्ष॒णिऽभ्यः॑ । आ । पु॒रु । श॒स्त॒ । म॒घत्तंये ॥८

तम् । नः । वाजाः । ऋभुक्षणः । इन्द्र । नासत्या । रयिम् ।

सम् । अश्वम् । चर्षणिऽभ्यः । आ । पुरु । शस्त । मघत्तये ॥८

अनया स्तुतिमुपसंहृत्य अभिमतमाशास्ते । हे “वाजाः हे “ऋभुक्षणः ऋभवो हे “इन्द्र हे “नासत्या अश्विनौ ते यूयं “नः अस्मभ्यं “चर्षणिभ्यः मनुष्येभ्यः स्तोतृभ्यः “तं “पुरु प्रभूतं “रयिं धनम् “अश्वं च पुरु प्रभूतं “मघत्तये धनदानाय “सम् “आ “शस्त सम्यगाशासनं कुरुत ॥ ॥ १० ॥

# ऋग्वेदः सूक्तं ४.३८

ऋग्वेदः - मण्डल ४
← सूक्तं ४.३७
सूक्तं ४.३८
सूक्तं ४.३९ →

वामदेवो गौतमः ।

## दे. दधिक्रा, १ द्यावापृथिवी। त्रिष्टुप्

उतो हि वां दात्रा सन्ति पूर्वा या पूरुभ्यस्त्रसदस्युर्नितोशे ।

क्षेत्रासां ददथुरुर्वरासां घनं दस्युभ्यो अभिभूतिमुग्रम् ॥१॥

उत वाजिनं पुरुनिष्षिध्वानं दधिक्रामु ददथुर्विश्वकृष्टिम् ।

ऋजिप्यं श्येनं प्रुषितप्सुमाशुं चर्कृत्यमर्यो नृपतिं न शूरम् ॥२॥

यं सीमनु प्रवतेव द्रवन्तं विश्वः पूरुर्मदति हर्षमाणः ।

पड्भिर्गृध्यन्तं मेधयुं न शूरं रथतुरं वातमिव ध्रजन्तम् ॥३॥

यः स्मारुन्धानो गध्या समत्सु सनुतरश्चरति गोषु गच्छन् ।

आविरृजीको विदथा निचिक्यत्तिरो अरतिं पर्याप आयोः ॥४॥

उत स्मैनं वस्त्रमथिं न तायुमनु क्रोशन्ति क्षितयो भरेषु ।

नीचायमानं जसुरिं न श्येनं श्रवश्चाच्छा पशुमच्च यूथम् ॥५॥

उत स्मासु प्रथमः सरिष्यन्नि वेवेति श्रेणिभी रथानाम् ।

स्रजं कृण्वानो जन्यो न शुभ्वा रेणुं रेरिहत्किरणं ददश्वान् ॥६॥

उत स्य वाजी सहुरिरृतावा शुश्रूषमाणस्तन्वा समर्ये ।

तुरं यतीषु तुरयन्नृजिप्योऽधि भ्रुवोः किरते रेणुमृञ्जन् ॥७॥

उत स्मास्य तन्यतोरिव द्योरृघायतो अभियुजो भयन्ते ।

यदा सहस्रमभि षीमयोधीद्दुर्वर्तुः स्मा भवति भीम ऋञ्जन् ॥८॥

उत स्मास्य पनयन्ति जना जूतिं कृष्टिप्रो अभिभूतिमाशोः ।

उतैनमाहुः समिथे वियन्तः परा दधिक्रा असरत्सहस्रैः ॥९॥

आ दधिक्राः शवसा पञ्च कृष्टीः सूर्य इव ज्योतिषापस्ततान ।

सहस्रसाः शतसा वाज्यर्वा पृणक्तु मध्वा समिमा वचांसि ॥१०॥

## सायणभाष्यम्

‘ उतो हि वाम्' इति दशर्चं षष्ठं सूक्तम् । वामदेव ऋषिः । त्रिष्टुप् छन्दः । दधिक्रा देवता । आद्या द्यावापृथिव्या। अत्रानुक्रमणिका – उतो हि दश दाधिक्रं हि द्यावापृथिव्याद्या ' इति । विनियोगो लैङ्गिकः ॥

उ॒तो हि वां॑ दा॒त्रा सन्ति॒ पूर्वा॒ या पू॒रुभ्य॑स्त्र॒सद॑स्युर्नितो॒शे ।

क्षे॒त्रा॒सां दं॑दथुरुर्व॒रा॒सां घ॒नं दस्युं॑भ्यो अ॒भिभूं॑तिमु॒ग्रम् ॥१

उ॒तो इतिं । हि । वा॒म् । दा॒त्रा । सन्तिं । पूर्वा॑ । या ।
पू॒रुऽभ्यः॑ । त्र॒सदं॑स्युः । नि॒ऽतो॒शे ।

क्षे॒त्र॒ऽसाम् । द॒द॒थुः॒ । उ॒र्व॒रा॒ऽसाम् । घ॒नम् । दस्युं॑ऽभ्यः ।
अ॒भिऽभूं॑तिम् । उ॒ग्रम् ॥१

उतो इति । हि । वाम् । दात्रा । सन्ति । पूर्वा । या ।
पूरुऽभ्यः । त्रसदस्युः । निऽतोशे ।

क्षेत्रऽसाम् । ददथुः । उर्वराऽसाम् । घनम् । दस्युऽभ्यः ।
अभिऽभूतिम् । उग्रम् ॥१

“उतो इति पूरणः । अस्या द्यावापृथिव्यत्वादत्र
तद्वाचकशब्दाभावेऽपि ते एव संबोद्धव्ये । हे

द्यावापृथिव्यौ “वां युवाभ्यां सकाशात् “दात्रा दानकर्त्रा पौरुकुत्सेन त्रसदस्युना लब्धानि “पूर्वा पूर्वाणि पुरातनानि पूरकाणि वा धनानि “सन्ति । “या यानि धनानि “पूरुभ्यः अर्थिभ्यो मनुष्येभ्यः “त्रसदस्युः राजा “नितोशे न्यतोशत दत्तवान् । “क्षेत्रसाम् । क्षेत्राणि सर्वा भूमीः सनोतीति क्षेत्रसाः अश्वः । तं “ददथुः । तथा “उर्वरासाम् । उर्वरा सर्वसस्याढ्या भूः । तां सनोतीत्युर्वरासाः पुत्रः । तं ददथुः। “घनं हननार्हम् आयुधं “दस्युभ्यः दस्यूनां वधार्थं च ददथुः । कीदृशमायुधम् । “अभिभूतिम् अभिभवितारम् “उग्रम् उद्गूर्णबलम् । यद्वा । उत्तरार्धमेकं वाक्यम् । दातव्यानि धनान्युक्तलक्षणं पुत्रं च ददथुः । दत्तवत्यौ स्थः । तानि मह्यमपि ददाथाम् इत्यर्थः ।।

उ॒त वा॒जिनं॑ पुरुनि॒ष्षिध्वा॑नं दधि॒क्राम॑ु ददथुर्वि॒श्वकृ॑ष्टिम् ।

ऋ॒जि॒प्यं॑ श्ये॒नं प्रु॑षि॒तप्सु॑मा॒शुं च॒र्कृत्यं॑म॒र्यो नृ॒पति॒ं न शूर॑म्
॥२

उ॒त । वा॒जिन॑म् । पु॒रु॒नि॒ःऽसिध्वा॑नम् । द॒धि॒ऽक्राम् । उ॒ं
इति॑ । द॒द॒थुः॒ । वि॒श्वऽकृ॑ष्टिम् ।

ऋ॒जि॒प्यम् । श्ये॒नम् । प्रु॒षि॒तऽप्सु॑म् । आ॒शुम् । च॒र्कृत्य॑म् ।
अ॒र्यः । नृ॒ऽपति॑म् । न । शूर॑म् ॥२

उत । वाजिनम् । पुरुनिःऽसिध्वानम् । दधिऽक्राम् । ऊं
इति । ददथुः । विश्वऽकृष्टिम् ।

ऋजिप्यम् । श्येनम् । प्रुषितऽप्सुम् । आशुम् । चर्कृत्यम् । अर्यः । नृऽपतिम् । न । शूरम् ॥२

“उत अपि च “वाजिनं गमनवन्तम् । अश्वरूपं वा देवं अग्नेरश्वरूपस्यैव दधिक्राख्यत्वात्। अग्नेस्तद्रूपत्वं ब्राह्मणे समाम्नातं - तानग्निरश्वो भूत्वाभ्यद्रवत् ' इति । “पुरुनिष्षिध्वानं पुरूणां बहूनां शत्रूणां निष्षेद्धारं “दधिक्राम् । दधदन्यं धारयन् क्रामतीति दधिक्राः। तमेतन्नामकं देवम् । उः पूरणः । “विश्वकृष्टिम् । विश्वाः कृष्टयो रक्षणीयाः सेवका वा मनुष्या यस्य तम् । “ऋजिप्यम् । ऋज्वाप्नोति गच्छतीत्यृजिप्यः । तं “श्येनं शंसनीयगमनं “प्रुषितप्सुं दीप्तरूपम् “आशुं व्याप्तं शीघ्रगमनं वा “अर्यः अरेः “चर्कृत्यं कर्तनशीलं "शूरं

“नृपतिं “न राजानमिव स्थितं देवं द्यावापृथिव्यौ "ददथुः धारयतः ॥

यं सी॒मनुं प्र॒वतें॒व द्रवं॑न्तं॒ विश्वः॑ पू॒रुर्मदं॑ति॒ हर्षं॑माणः ।

प॒ड्भिर्गृध्यं॑न्तं मेध॒युं न शूरं॑ रथ॒तुरं॒ वातं॑मिव॒ ध्रजं॑न्तम् ॥३

यम् । सी॒म् । अनुं । प्र॒वतां॑ऽइव । द्रवं॑न्तम् । विश्वः॑ । पू॒रुः । मदं॑ति । हर्षं॑माणः ।

प॒ट्ऽभिः । गृध्यं॑न्तम् । मे॒ध॒ऽयुम् । न । शूरं॑म् । र॒थ॒ऽतुरं॑म् । वातं॑म्ऽइव । ध्रजं॑न्तम् ॥३

यम् । सीम् । अनु । प्रवताऽइव । द्रवन्तम् । विश्वः । पूरुः । मदति । हर्षमाणः ।

पट्ऽभिः । गृध्यन्तम् । मेधऽयुम् । न । शूरम् । रथऽतुरम् । वातम्ऽइव । ध्रजन्तम् ॥३

“यं दधिक्रां “विश्वः “पूरुः सर्वोऽपि मनुष्यः "हर्षमाणः हृष्यन् हर्षयन् वा मदति स्तौति । ते देवं द्यावापृथिव्यौ ददथुरिति संबन्धः । स देवो विशेष्यते । “सीं सर्वतः प्रवतेव प्रवणवता निम्नेन मार्गेणोदकमिवानुक्रमेण “द्रवन्तं गच्छतं पड्भिः पादैः “गृध्यन्तम् अभिकाङ्क्षन्तं दिशो लङ्घितुम् । तत्र दृष्टान्तः । “मेधयुं “न “शूरं । संग्रामेच्छुं शूरमिव । यद्वा । यज्ञक्रमणेच्छुमध्वर्य्वादिकमिव । “रथतुरं रथेन गच्छन्तं “वातमिव “ध्रजन्तं शीघ्रगं वायुमिव । उक्तविशेषविशिष्टान् उदकशूरवायून् यथा सर्वो जनः स्तौति तथा यं देवं स्तौति तं ददथुरित्यर्थः ।।

यः स्मा॑रुन्धा॒नो गध्या॑ स॒मत्सु॒ सनु॑तर॒श्चर॑ति॒ गोषु॒ गच्छ॑न् ।

आ॒विर्ऋ॑जीको वि॒दथा॑ नि॒चिक्य॑त्ति॒रो अ॑र॒तिं पर्याप॑ आ॒योः ॥४

यः । स्म॒ । आ॒ऽरु॒न्धा॒नः । गध्या॑ । स॒मत्ऽसु॑ । सनु॑ऽतरः । चर॑ति । गोषु॑ । गच्छ॑न् ।

आ॒विःऽऋ॑जीकः । वि॒दथा॑ । नि॒ऽचिक्य॑त् । ति॒रः । अ॒र॒तिम् । परि॑ । आप॑ः । आ॒योः ॥४

यः । स्म । आऽरुन्धानः । गध्या । समत्ऽसु । सनुऽतरः । चरति । गोषु । गच्छन् ।

आविःऽऋजीकः । विदथा । निऽचिक्यत् । तिरः ।
अरतिम् । परि । आपः । आयोः ॥४

“यः “स्म यः खलु देवः “गध्या गध्यानि ।' गध्यतिर्मिश्रीभावकर्मा ' ( निरु. ५. १५ ) इति निरुक्तम् । मिश्रयितव्यानि फलानि “समत्सु संग्रामेषु “आरुन्धानः सर्वतो निरोधयन् “सनुतरः संभक्तृतरः “गोषु सर्वासु दिक्षु गोषु वा निमित्तभूतेषु “गच्छन् “आविर्ऋजीकः आविर्भूतसाधन: आविर्भूतमुष्को वा “विदथा विदथानि ज्ञातव्यानि “निचिक्यत् । पश्यतिकर्मैतत् । जानन् “अरतिम् अरमणं दुःखमभिगन्तारम् अरिं वा "परि सर्वतः “तिरः “चरति तिरस्करोति । कस्यारतिमिति । “आपः व्याप्तत्य स्तोतुः “आयोः मनुष्यस्य यजमानस्य ॥

उ॒त स्मै॑नं वस्त्र॒मथिं॒ न ता॒युमनु॑ क्रोशन्ति क्षि॒तयो॒ भरे॑षु ।

नी॒चाय॑माने॒ जसु॑रिं॒ न श्ये॒नं श्रव॒श्चाच्छा॑ पशु॒मच्च॑ यू॒थम् ॥
५

उ॒त । स्म॒ । ए॒न॒म् । व॒स्त्र॒ऽमथि॑म् । न । ता॒युम् । अनु॑ ।
क्रो॒श॒न्ति॒ । क्षि॒तयः॑ । भरे॑षु ।

नी॒चा । अय॑मानम् । जसु॑रिम् । न । श्ये॒नम् । श्रवः॑ । च॒ ।
अच्छ॑ । प॒शु॒ऽमत् । च॒ । यू॒थम् ॥५

उत । स्म । एनम् । वस्त्रऽमथिम् । न । तायुम् । अनु ।
क्रोशन्ति । क्षितयः । भरेषु ।

नीचा । अयमानम् । जसुरिम् । न । श्येनम् । श्रवः । च । अच्छ । पशुऽमत् । च । यूथम् ॥५

"उत “स्म अपि खलु “एनं दधिक्रां “भरेषु संग्रामेषु “वस्त्रमथिं "तायुं “न वस्त्रमाथिनं तस्करमिव । तं दृष्ट्वा “क्षितयः मनुष्या यथा “अनु क्रोशन्ति तद्वद्वैरिणः अनुक्रोशन्ति। किंच “नीचा नीचैः "अयमानं गच्छन्तं “जसुरिं “न “श्येनं क्षुधितं श्येनं पक्षिणमिव । तं यथा दृष्ट्वा पक्षिणः पलायन्ते तद्वत् । “श्रवः अन्नं कीर्तिं वा “पशुमत् “यूथं “च "अच्छ अभिलक्ष्य गच्छन्तमेनमनुक्रोशन्तीति संबन्धः । ‘अपि स्मैनं वस्त्रमथिमिव वस्त्रमाथिनम् ' (निरु. ४. २४ ) इत्यादिनिरुक्तमत्रानुसंधेयम् ॥ ॥ ११ ॥

उ॒त स्मा॑सु प्रथ॒मः स॑रि॒ष्यन्नि वे॑वेति॒ श्रेणि॑भी॒ रथा॑नाम् ।

स्र॒जं कृ॑ण्वा॒नो जन्यो॒ न शुभ्वा॑ रे॒णुं रेरि॑हत्कि॒रणं॑ दद॒श्वान् ॥
६

उ॒त । स्म॒ । आ॒सु॒ । प्र॒थ॒मः । स॒रि॒ष्यन् । नि । वे॒वे॒ति॒ । श्रेणि॑ऽभिः । रथा॑नाम् ।

स्र॒ज॑म् । कृ॒ण्वा॒नः । जन्यः॑ । न । शुभ्वा॑ । रे॒णुम् । रेरि॑हत् । कि॒रण॑म् । द॒द॒श्वान् ॥६

उत । स्म । आसु । प्रथमः । सरिष्यन् । नि । वेवेति । श्रेणिऽभिः । रथानाम् ।

स्रजम् । कृण्वानः । जन्यः । न । शुभ्वा । रेणुम् । रेरिहत् । किरणम् । ददश्वान् ॥६

"उत "स्म अपि च खलु "आसु असुरसेनासु “सरिष्यन् सर्तुमिच्छन् "प्रथमः प्रतमः उत्कृष्टतमो मुख्यः सन् “रथानां "श्रेणिभिः राजिभिर्युक्तः सन् "नि "वेवेति नितरां गच्छति । इतस्ततो धावति । क इवेति । उच्यते । "स्रजम् । सृज्यते उत्पाद्यते रूपमनयेति स्रगलंकृतिः । तां "कृण्वानः कुर्वाणः “जन्यो "न जनेभ्यो हितोऽश्व इव सुभ्वा । सुष्ठु भवतीति सुभ्वा शोभमानः ।। “किरणम् आस्यगतं खलीनं "ददश्वान् दशन् "रेणुं स्वपादघातजनितं "रेरिहत् भृशं लेढि ॥

उ॒त स्य वा॒जी सहु॑रिरृ॒तावा॒ शुश्रू॑षमाणस्त॒न्वा॑ सम॒र्ये ।

तुरं य॒तीषुं तु॒रयं॑न्नृजि॒प्योऽधिं भ्रु॒वोः किं॑रते रे॒णुमृ॒ञ्जन् ॥७

उ॒त । स्यः । वा॒जी । सहुं॑रिः । ऋ॒तऽवां । शुश्रूं॑षमाणः । त॒न्वां । स॒ऽम॒र्ये ।

तुरं॑म् । य॒तीषुं । तु॒रयं॑न् । ऋ॒जि॒प्यः । अधिं । भ्रु॒वोः । कि॒र॒ते॒ । रे॒णुम् । ऋ॒ञ्जन् ॥७

उत । स्यः । वाजी । सहुरिः । ऋतऽवा । शुश्रूषमाणः । तन्वा । सऽमर्ये ।

तुरम् । यतीषु । तुरयन् । ऋजिप्यः । अधि । भ्रुवोः । किरते । रेणुम् । ऋञ्जन् ॥७

“उत अपि च "स्यः सः उक्तलक्षणः “वाजी वेजनवान् गमनवान् "समर्ये समरणे “सहुरिः सहनशीलः शत्रूणाम्

“ऋतावा अन्नवान् "तन्वा स्वावयवेन खुरादिना स्वतनुं "शुश्रूषमाणः "तुरं "यतीषु त्वरगामिनीष्वसुरसेनासु “तुरयन् त्वरयन् “ऋजिप्यः ऋजुगामी "रेणुं धूलिम् “ऋञ्जन् प्रसाधयंस्तमेव रेणुं “भ्रुवोः "अधि उपरि "किरते विक्षिपति ।

उ॒त स्मा॑स्य तन्य॒तोरि॑व॒ द्योर्ऋ॑घाय॒तो अ॑भि॒युजो॑ भयन्ते ।

य॒दा स॒हस्र॑म॒भि षी॒मयो॑धी॒द्दु॒र्वर्तु॑ः स्मा भवति भी॒म ऋ॒ञ्जन् ॥८

उ॒त । स्म॒ । अ॒स्य॒ । त॒न्य॒तोःऽइ॑व । द्योः । ऋ॒घा॒य॒तः । अ॒भि॒ऽयुज॑ः । भ॒य॒न्ते॒ ।

य॒दा । स॒हस्रं॑म् । अ॒भि । सी॒म् । अयों॑धीत् । दु॒ःऽवर्तुः॑ । स्म॒ । भ॒व॒ति॒ । भी॒मः । ऋ॒ञ्जन् ॥८

उत । स्म । अस्य । तन्यतोःऽइव । द्योः । ऋघायतः । अभिऽयुजः । भयन्ते ।

यदा । सहस्रम् । अभि । सीम् । अयोधीत् । दुःऽवर्तुः । स्म । भवति । भीमः । ऋञ्जन् ॥८

“उत "स्म अपि च खलु “द्योः दीप्यमानात् "तन्यतोः शब्दयितुरशनेः “इव “ऋघायतः हिंसतः "अस्य अस्मात् दधिक्रावाख्यात् देवात् "अभियुजः अभियोक्तारोऽसुराः “भयन्ते बिभ्यति । किंचायं यदा "सीं सर्वतः "सहस्रम् “अभि "अयोधीत् संप्रहरेत् । तदा “ऋञ्जन

प्रसाधयन्नात्मानं “भीमः भयहेतुः "दुर्वर्तुः दुर्वारश्च "भवति ॥

उ॒त स्मा॑स्य पनयन्ति॒ जना॑ जू॒तिं कृ॑ष्टि॒प्रो अ॒भिभू॑तिमा॒शोः ।

उ॒तैनं॑माहुः समि॒थे वि॒यन्त॒ः परा॑ दधि॒क्रा अ॑सरत्स॒हस्रैः॑ ॥ ९

उ॒त । स्म॒ । अ॒स्य॒ । प॒न॒य॒न्ति॒ । जना॑ः । जू॒तिम् । कृ॒ष्टि॒ऽप्रः । अ॒भिऽभू॑तिम् । आ॒शोः ।

उ॒त । ए॒न॒म् । आ॒हु॒ः । स॒म्ऽइ॒थे । वि॒ऽयन्तः॑ । परा॑ । द॒धि॒ऽक्राः । अ॒स॒र॒त् । स॒हस्रैः॑ ॥९

उत । स्म । अस्य । पनयन्ति । जनाः । जूतिम् । कृष्टिऽप्रः । अभिऽभूतिम् । आशोः ।

उत । एनम् । आहुः । सम्ऽइथे । विऽयन्तः । परा । दधिऽक्राः । असरत् । सहस्रैः ॥९

“उत "स्म अपि च खलु “अस्य दधिक्राव्णः "अभिभूतिम् अभिभवित्रीं "जूतिं पराभिभूतिं चेत्युभयं वा जनाः "पनयन्ति स्तुवन्ति । कीदृशस्यास्य । "कृष्टिप्रः । कृष्टयो मनुष्याः । तेषां पूरकस्य "आशोः व्याप्तस्य वेगवतो वा । "उत अपि च “एनं "समिथे संग्रामे “वियन्तः विविधं गच्छन्तो जना अयं "दधिक्राः देवः "सहस्रैः अनुचरैः परिवृतः “परा "असरत् इति अस्मान् विहायान्यान् हन्तुं गत इति “आहुः । यद्वा । एनमेवमाहुः । वियन्तः शत्रवः

परा । भवन्तीति शेषः । दधिक्राः सहस्रैरसरत् गच्छतीति ॥

पवित्रेष्टौ ‘आ दधिक्राः' इति दधिक्राव्णो याज्या । तथा च सूत्रितं - दधिक्राव्णो अकारिषमा दधिक्राः शवसा पञ्च कृष्टीः ' ( आश्व. श्रौ. २. १२ ) इति ॥

आ दं॒धि॒क्राः शवं॑सा॒ पञ्च॑ कृ॒ष्टीः सूर्यं॑ इव॒ ज्योतिं॑षा॒पस्तं॑तान ।

स॒ह॒स्र॒साः शं॑त॒सा वा॒ज्यर्वां॑ पृ॒णक्तु॒ मध्वा॒ समि॒मा वचां॑सि ॥१०

आ । द॒धि॒ऽक्राः । शवं॑सा । पञ्च॑ । कृ॒ष्टीः । सूर्यः॑ऽइव । ज्योतिं॑षा । अ॒पः । त॒ता॒न॒ ।

स॒ह॒स्र॒ऽसाः । श॒त॒ऽसाः । वा॒जी । अर्वा॑ । पृ॒णक्तु॑ । मध्वा॑ । सम् । इ॒मा । वचां॑सि ॥१०

आ । दधिऽक्राः । शवसा । पञ्च । कृष्टीः । सूर्यःऽइव । ज्योतिषा । अपः । ततान ।

सहस्रऽसाः । शतऽसाः । वाजी । अर्वा । पृणक्तु । मध्वा । सम् । इमा । वचांसि ॥१०

यः "दधिक्राः देवः "शवसा बलेन "पञ्च “कृष्टीः पञ्च जनान् देवमनुष्यासुररक्षः पितृसंज्ञकान् निषादपञ्चमान् चतुरो वर्णान् वा "सूर्यः ”ज्योतिषा तेजसा यथा जगदावृणोति तद्वत् "अपः उदकानि “आ “ततान आतनोति । "सहस्रसाः “शतसाः शतानां सहस्राणां च दाता “वाजी वेजनवान् "अर्वा अरणकुशलः स देवः

"मध्वा मधुना मधुरेण फलेन “इमा इमान्युक्तानि स्तुतिवचांसि “सं “पृणक्तु संयोजयतु ॥ ॥ १२ ॥

## टिप्पणी

दधिक्रा उपरि शोधलेखः

# ऋग्वेदः सूक्तं ४.३९



## दे. दधिक्राः। त्रिष्टुप्, ६ अनुष्टुप्

आशुं दधिक्रां तमु नु ष्टवाम दिवस्पृथिव्या उत चर्किराम ।

उच्छन्तीर्मामुषसः सूदयन्त्वति विश्वानि दुरितानि पर्षन् ॥१॥

महश्चर्कर्म्यर्वतः क्रतुप्रा दधिक्राव्णः पुरुवारस्य वृष्णः ।

यं पूरुभ्यो दीदिवांसं नाग्निं ददथुर्मित्रावरुणा ततुरिम् ॥२॥

यो अश्वस्य दधिक्राव्णो अकारीत्समिद्धे अग्ना उषसो व्युष्टौ ।

अनागसं तमदितिः कृणोतु स मित्रेण वरुणेना सजोषाः ॥३॥

दधिक्राव्ण इष ऊर्जो महो यदमन्महि मरुतां नाम भद्रम् ।

स्वस्तये वरुणं मित्रमग्निं हवामह इन्द्रं वज्रबाहुम् ॥४॥

इन्द्रमिवेदुभये वि ह्वयन्त उदीराणा यज्ञमुपप्रयन्तः ।

दधिक्रामु सूदनं मर्त्याय ददथुर्मित्रावरुणा नो अश्वम् ॥५॥

दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः ।

सुरभि नो मुखा करत्प्र ण आयूंषि तारिषत् ॥६॥

# सायणभाष्यम्

‘ आशुं दधिक्राम्' इति षड्टचं सप्तमं सूक्तम् । आदितः पञ्च त्रिष्टुभः षष्ठ्यनुष्टुप् । ऋषिर्वामदेवः । पूर्वसूक्ते हीत्युक्तत्वात् एतदपि दाधिक्रम् । तथा चानुक्रान्तम् - ‘ आशुं षळन्त्यानुष्टुप् ' इति । सूक्तविनियोगो लैङ्गिकः ॥

आ॒शुं द॑धि॒क्रां तमु॒ नु ष्ट॑वाम दि॒वस्पृ॑थि॒व्या उ॒त च॑र्किराम ।

उ॒च्छन्ती॒र्मामु॒षस॑ः सूदय॒न्त्वति॒ विश्वा॑नि दु॒रिता॑नि पर्षन् ॥ १

आ॒शुम् । द॒धि॒ऽक्राम् । तम् । ऊं॒ इति॑ । नु । स्त॒वा॒म॒ । दि॒वः । पृ॒थि॒व्याः । उ॒त । च॒र्कि॒रा॒म॒ ।

उ॒च्छन्तीः॑ । माम् । उ॒षसः॑ । सू॒द॒य॒न्तु॒ । अति॑ । विश्वा॑नि । दुः॒ऽइ॒ताति॑ । प॒र्ष॒न् ॥१

आशुम् । दधिऽक्राम् । तम् । ऊं इति । नु । स्तवाम । दिवः । पृथिव्याः । उत । चर्किराम ।

उच्छन्तीः । माम् । उषसः । सूदयन्तु । अति । विश्वानि । दुःऽइतानि । पर्षन् ॥१

“आशुं शीघ्रगामिनं "तमु तमेव "दधिक्रां देवं "नु क्षिप्रं "स्तवाम । "उत अपि च "दिवः “पृथिव्याः च सकाशादस्य घासं “चर्किराम विक्षिपाम । “उच्छन्तीः तमो विवासयन्तीः "उषसः "मां प्रति "सूदयन्तु रक्षन्तु फलानि । 'विश्वानि सर्वाणि दुरितानि “अति “पर्षन् अतिपारयन्तु । अन्यदेवताकेषु मन्त्रेष्वन्यदेवतास्तुतिस्तासां निपातभाक्त्वान्न विरुध्यते ॥

म॒हश्च॑र्क॒र्म्य॑र्व॑तः क्रतु॒प्रा द॑धि॒क्राव्ण॑ः पुरु॒वार॑स्य॒ वृष्ण॑ः ।

यं पू॒रुभ्यो॑ दीदि॒वांस॒ं नाग्निं द॒दथु॑र्मित्रावरुणा॒ ततु॑रिम् ॥२

म॒हः । च॒र्क॒र्मि॒ । अर्व॑तः । क्र॒तु॒ऽप्राः । द॒धि॒ऽक्राव्ण॑ः ।
पु॒रु॒ऽवार॑स्य । वृष्ण॑ः ।

यम् । पू॒रुऽभ्य॑ः । दी॒दि॒ऽवांस॑म् । न । अ॒ग्निम् । द॒दथु॑ः ।
मि॒त्रा॒व॒रु॒णा॒ । ततु॑रिम् ॥२

महः । चर्कर्मि । अर्वतः । क्रतुऽप्राः । दधिऽक्राव्णः ।
पुरुऽवारस्य । वृष्णः ।

यम् । पूरुऽभ्यः । दीदिऽवांसम् । न । अग्निम् । ददथुः ।
मित्रावरुणा । ततुरिम् ॥२

“क्रतुप्राः कर्मणां पूरकोऽहं "महः महतः "अर्वतः अरणवतः "पुरुवारस्य पुरुभिः बहुभिर्वरणीयस्य “वृष्णः वर्षकस्य "दधिक्राव्णः स्तुतिं "चर्कर्मि अत्यर्थं करोमि । हे "मित्रावरुणा मित्रावरुणौ युवां “ततुरिं तारकं "यं "दीदिवांसं "नाग्नि दीप्यमानमग्निमिव स्थितं "पूरुभ्यः मनुष्येभ्यस्तेषामुपकाराय "ददथुः धारयथः ॥

यो अश्वंस्य दधि॒क्राव्णो॒ अकां॑री॒त्समिं॑द्धे अ॒ग्ना उ॒षसो॒ व्युं॑ष्टौ ।

अनां॑गसं॒ तमदिं॑तिः कृणोतु॒ स मि॒त्रेण॒ वरुं॑णेना स॒जोषां॑ः ॥३

यः । अश्वं॑स्य । द॒धि॒ऽक्राव्ण॑ः । अका॑रीत् । सम्ऽइं॑द्धे । अ॒ग्नौ । उ॒षस॑ः । विऽउं॑ष्टौ ।

अना॑गसम् । तम् । अदि॑तिः । कृ॒णो॒तु॒ । सः । मि॒त्रेण॑ । वरु॑णेन । स॒ऽजोषा॑ः ॥३

यः । अश्वस्य । दधिऽक्राव्णः । अकारीत् । सम्ऽइद्धे । अग्नौ । उषसः । विऽउष्टौ ।

अनागसम् । तम् । अदितिः । कृणोतु । सः । मित्रेण । वरुणेन । सऽजोषाः ॥३

"यः यजमानः "अश्वस्य अश्वरूपस्य व्याप्तस्य वा "दधिक्राव्णः स्तुतिम् “उषसो “व्युष्टौ प्रभाते सति "अग्नौ "समिद्धे सति "अकारीत् अकार्षीत् । “मित्रेण “वरुणेन चाहोरात्राभिमाननिदेवाभ्यां सजोषाः समानप्रीतिः

"अदितिः अखण्डनीयो दधिक्राः "तं यजमानम् "अनागसं पापरहितं “कृणोतु करोतु ॥

द॒धि॒क्राव्णं॑ इ॒ष ऊ॒र्जो म॒हो यदम॑न्महि म॒रुतां॒ नाम॑ भ॒द्रम् ।

स्व॒स्तये॒ वरु॑णं मि॒त्रम॒ग्निं॑ हवा॑मह॒ इन्द्रं॒ वज्र॑बाहुम् ॥४

द॒धि॒ऽक्राव्णः॑ । इ॒षः । ऊ॒र्जः । म॒हः । यत् । अम॑न्महि । म॒रुता॑म् । नाम॑ । भ॒द्रम् ।

स्व॒स्तये॑ । वरु॑णम् । मि॒त्रम् । अ॒ग्निम् । हवा॑महे । इन्द्र॑म् । वज्र॑ऽबाहुम् ॥४

दधिऽक्राव्णः । इषः । ऊर्जः । महः । यत् । अमन्महि । मरुताम् । नाम । भद्रम् ।

स्वस्तये । वरुणम् । मित्रम् । अग्निम् । हवामहे । इन्द्रम् । वज्रऽबाहुम् ॥४

“इषः अन्नसाधकस्य “ऊर्जः बलसाधकस्य “महः महतः "दधिक्राव्णः देवस्य “मरुतां स्तोतॄणां स्वभूतं "भद्रं कल्याणं "नाम नामरूपमस्ति "यत् तत् “अमन्महि स्तुमः । किंचात्र निपातभाजो वरुणादींश्च "स्वस्तये क्षेमाय "हवामहे ॥

इन्द्रंमि॒वेदु॒भये॒ वि ह्वंयन्त उ॒दीरांणा य॒ज्ञमुंपप्र॒यन्तंः ।

द॒धि॒क्रामु॒ सूदंन॒ं मर्त्यांय द॒दथुंर्मित्रावरुणा नो॒ अश्वंम् ॥५

इन्द्रंम्ऽइव । इत् । उ॒भयें । वि । ह्व॒य॒न्ते॒ । उ॒त्ऽईरांणाः । य॒ज्ञम् । उ॒प॒ऽप्र॒यन्तंः ।

द॒धि॒ऽक्राम् । ऊं॒ इतिं । सूदंनम् । मर्त्यांय । द॒दथुः॑ । मि॒त्रा॒व॒रु॒णा॒ । न॒ः । अश्वंम् ॥५

इन्द्रम्ऽइव । इत् । उभये । वि । ह्वयन्ते । उत्ऽईराणाः । यज्ञम् । उपऽप्रयन्तः ।

दधिऽक्राम् । ऊं इति । सूदनम् । मर्त्याय । ददथुः । मित्रावरुणा । नः । अश्वम् ॥५

"इन्द्रमिव एनं दधिक्राम् "उदीराणाः युद्धाय उद्योगं कुर्वन्तः "यज्ञमुपप्रयन्तः यज्ञमुपक्रम्य प्रवर्तमानाश्च "उभये “वि “ह्वयन्ते आह्वयन्ति। यं “मर्त्याय मर्त्यस्य "सूदनं प्रेरकम् "अश्वम् अश्वरूप “दधिक्रां देवं हे "मित्रावरुणा मित्रावरुणौ “नः अस्माकमर्थाय “ददथुः धारयथः । तं विह्वयन्ते ।

उभये इत्यत्र स्तोतृशंसितृभेदेन वा उभयविधत्वम् अवगन्तव्यम् ॥

'दधिक्राव्णो अकारिषम् ' इति षष्ठी पवित्रेष्ट्या अनुवाक्या । सूत्रितं च-- ‘दधिक्राव्णो अकारिषमा दधिक्राः शवसा पञ्च कृष्टीः ' ( आश्व. श्रौ. २. १२ ) इति । दधिद्रप्सभक्षणेऽप्येषा । दधिक्राव्णो अकारिषमित्याग्नीध्रीये दधिद्रप्सान् भक्षयन्ति' ( आ. श्रौ. ६. १२ ) इति सूत्रितत्वात् ॥

द॒धि॒क्राव्णो॑ अका॒रिषं॑ जि॒ष्णोरश्व॑स्य वा॒जिन॑ः ।

सु॒र॒भि नो॒ मुखा॑ कर॒त्प्र ण॒ आयूं॑षि तारिषत् ॥६

द॒धि॒ऽक्राव्णः॑ । अ॒का॒रि॒ष॒म् । जि॒ष्णोः । अश्व॑स्य । वा॒जिनः॑ ।

सु॒र॒भि । न॒ः । मुखा॑ । क॒र॒त् । प्र । न॒ः । आयूं॑षि । ता॒रि॒ष॒त् ॥६

दधिऽक्राव्णः । अकारिषम् । जिष्णोः । अश्वस्य । वाजिनः ।

सुरभि । नः । मुखा । करत् । प्र । नः । आयूंषि । तारिषत् ॥६

“दधिक्राव्णः देवस्य स्तुतिम् "अकारिषं करवाणि । "जिष्णोः जयशीलस्य "अश्वस्य व्यापकस्य “वाजिनः वेगवतः । स देवः “नः अस्माकं “मुखा मुखानि चक्षुरादीन्द्रियाणि "सुरभि सुरभीणि “करत् करोतु । "नः

अस्मभ्यम् "आयूंषि “प्र “तारिषत् प्रवर्धयतु ।
प्रपूर्वस्तिरतिर्वर्धनार्थः ॥ ॥१.३॥

# ऋग्वेदः सूक्तं ४.४०



## दे. दधिक्राः, ५ सूर्यः। जगती, १ त्रिष्टुप्

---

दधिक्राव्ण इदु नु चर्किराम विश्वा इन्मामुषसः सूदयन्तु ।

अपामग्नेरुषसः सूर्यस्य बृहस्पतेराङ्गिरसस्य जिष्णोः ॥१॥

सत्वा भरिषो गविषो दुवन्यसच्छ्रवस्यादिष उषसस्तुरण्यसत् ।

सत्यो द्रवो द्रवरः पतंगरो दधिक्रावेषमूर्जं स्वर्जनत् ॥२॥

उत स्मास्य द्रवतस्तुरण्यतः पर्णं न वेरनु वाति प्रगर्धिनः ।

श्येनस्येव ध्रजतो अङ्कसं परि दधिक्राव्णः सहोर्जा तरित्रतः ॥३॥

उत स्य वाजी क्षिपणिं तुरण्यति ग्रीवायां बद्धो अपिकक्ष आसनि ।

क्रतुं दधिक्रा अनु संतवीत्वत्पथामङ्कांस्यन्वापनीफणत् ॥४॥

हंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ।

नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतम् ॥५॥

## सायणभाष्यम्

'दधिक्राव्ण इत्' इति पञ्चर्चमष्टमं सूक्तं वामदेवस्यार्षं दाधिक्रम् । आद्या त्रिष्टुप् शिष्टा जगत्यः । ' हंसः शुचिषत् ' इत्येषा सूर्यदेवताका । तथा चानुक्रमणिका - दधिक्राव्णः

पञ्च चतस्रोऽन्त्या जगत्योऽन्त्या सौरी ' इति ।
सूक्तविनियोगो लैङ्गिकः ॥

द॒धि॒क्राव्ण॒ इदु॒ नु चं॑र्किराम॒ विश्वा॒ इन्मामु॒षसः॑ सूदयन्तु ।
अ॒पाम॒ग्नेरु॒षस॒ः सूर्यं॑स्य॒ बृह॒स्पतें॑राङ्गिर॒सस्यं॑ जि॒ष्णोः ॥१

द॒धि॒ऽक्राव्णः॑ । इत् । उ॒ं इतिं॑ । नु । च॒र्कि॒रा॒म॒ । विश्वा॑ ।
इत् । माम् । उ॒षसः॑ । सू॒द॒य॒न्तु॒ ।

अ॒पाम् । अ॒ग्नेः । उ॒षसः॑ । सूर्यं॑स्य । बृह॒स्पतेः॑ ।
आ॒ङ्गि॒र॒सस्यं॑ । जि॒ष्णोः ॥१

दधिऽक्राव्णः । इत् । ऊं इति । नु । चर्किराम । विश्वा ।
इत् । माम् । उषसः । सूदयन्तु ।

अपाम् । अग्नेः । उषसः । सूर्यस्य । बृहस्पतेः ।
आङ्गिरसस्य । जिष्णोः ॥१

"दधिक्राव्ण “इदु एतन्नामकस्य देवस्यैव स्तुतिं "नु क्षिप्रं "चर्किराम भृशं करवाम । "मां “विश्वा "इत् "उषसः सर्वा अपि ताः "सूदयन्तु कर्मसु प्रेरयन्तु । "अपाम् "अग्नेः "उषसः “सूर्यस्य “बृहस्पतेः “आङ्गिरसस्य “जिष्णोः एतेषां देवतानामहं स्तुतिं करवाणीति शेषः । तासामपि निपातभाक्त्वात् स्तुतिरविरुद्धा ।।

सत्वा॑ भरि॒षो ग॑वि॒षो दु॑वन्य॒सच्छ्र॑व॒स्यादि॒ष
उ॒षस॑स्तुरण्य॒सत् ।

स॒त्यो द्र॒वो द्र॑व॒रः प॑तंग॒रो द॑धि॒क्रावेष॒मूर्जं॒ स्व॑र्जनत् ॥२

सत्वा॑ । भ॒रि॒षः । गो॒ऽइ॒षः । दु॒व॒न्य॒ऽसत् । श्र॒व॒स्यात् ।
इ॒षः । उ॒षसः᳚ । तु॒र॒ण्य॒ऽसत् ।

स॒त्यः । द्र॒वः । द्र॒व॒रः । प॒त॒ङ्ग॒रः । द॒धि॒ऽक्रावा॑ । इषं॑म् ।
ऊर्जं॑म् । स्वः᳚ । ज॒न॒त् ॥२

सत्वा । भरिषः । गोऽइषः । दुवन्यऽसत् । श्रवस्यात् ।
इषः । उषसः । तुरण्यऽसत् ।

सत्यः । द्रवः । द्रवरः । पतङ्गरः । दधिऽक्रावा । इषम् ।
ऊर्जम् । स्वः । जनत् ॥२

“सत्वा गन्ता “भरिषः भरणकुशलः "गविषः गवां प्रेरकः एष्टा वा दुवन्यसत् । दुवः परिचरणमिच्छन्तो दुवन्याः । तेषु सीदतीति दुवन्यसत् । "इषः इष्यमाणायाः "उषसः संबन्धिनि काले इत्यर्थः । यद्वा । इषः एष्टा एषणीयो वा ।

“श्रवस्यात् श्रवस्येत् अन्नमिच्छेत् । किंच “तुरण्यसत्'। त्वरया सीदतीति तुरण्यसत्' । "सत्यः सत्सु तायमानः “द्रवः गन्ता "द्रवरः प्रकृष्टवेगवान् "पतङ्गरः । पतनेनोत्प्लवनेन पतनं पतङ्गः । तद्वान् पतङ्गरः । उक्तलक्षणः "दधिक्रावा देवः "इषम् अन्नम् “ऊर्जं बलं "स्वः स्वर्गं च "जनत् जनयेत् उत्पादयेत् ॥

उ॒त स्मा॑स्य॒ द्रव॑तस्तुरण्य॒तः प॒र्णं न वेरनु॑ वाति प्रग॒र्धिनः॑ ।

श्ये॒नस्ये॑व॒ ध्रज॑तो अङ्क॒सं परि॑ दधि॒क्राव्णः॑ स॒होर्जा तरि॑त्रतः ॥३

उ॒त । स्म॒ । अ॒स्य॒ । द्रव॑तः । तु॒र॒ण्य॒तः । प॒र्णम् । न । वेः । अनु॑ । वा॒ति॒ । प्र॒ऽग॒र्धिनः॑ ।

श्ये॒नस्यं॑ऽइव । ध्रजं॑तः । अ॒ङ्क॒सम् । परिं॑ । द॒धि॒ऽक्राव्णः॑ । स॒ह । ऊ॒र्जा । तरिं॑त्रतः ॥३

उत । स्म । अस्य । द्रवतः । तुरण्यतः । पर्णम् । न । वेः । अनु । वाति । प्रऽगर्धिनः ।

श्येनस्यऽइव । ध्रजतः । अङ्कसम् । परि । दधिऽक्राव्णः । सह । ऊर्जा । तरित्रतः ॥३

“उत "स्म अपि च खलु “द्रवतः गच्छतः “तुरण्यतः त्वरमाणस्य “प्रगर्धिनः प्रकर्षेणाभिकाङ्क्षतः “अस्य "दधिक्राव्णः देवस्य गतिं "वेः गन्तुः पक्षिणः”पर्णं "न गमनं पत्रं वा अनुसृत्य यथा वान्त्यन्ये पक्षिणस्तद्वत् "अनु "वाति सर्वो वेगवान् जनः । सर्वेषामपि शीघ्रगामीत्यर्थः । किंच “ध्रजतः गच्छतः “तरित्रतः तारयतोऽन्यान् ॥

अन्तर्भावितण्यर्थोऽयम् ॥ "श्येनस्येव “अङ्कसं पादाधारम् उरःप्रदेशं वा "परि परितः “ऊर्जा बलेन निमित्तेनान्नार्थं वा "सह एकीभूय । संघेन गच्छन्तीति शेषः ॥

उ॒त स्य वा॒जी क्षिं॑प॒णिं तु॑रण्यति ग्री॒वायां॑ ब॒द्धो अं॑पिक॒क्ष आ॒सनिं ।

क्रतुं॑ दधि॒क्रा अनुं॑ सं॒तवीं॑त्वत्प॒थामङ्का॒स्यन्वा॒पनीं॑फणत् ॥४

उ॒त । स्यः । वा॒जी । क्षि॒प॒णिम् । तु॒र॒ण्य॒ति॒ । ग्री॒वायां॑म् । ब॒द्धः । अ॒पि॒ऽक॒क्षे । आ॒सनिं ।

क्रतु॑म् । द॒धि॒ऽक्राः । अनु॑ । स॒म्ऽतवी॑त्वत् । प॒थाम् । अङ्काँसि । अनु॑ । आ॒ऽपनी॑फणत् ॥४

उत । स्यः । वाजी । क्षिपणिम् । तुरण्यति । ग्रीवायाम् । बद्धः । अपिऽकक्षे । आसनि ।

क्रतुम् । दधिऽक्राः । अनु । सम्ऽतवीत्वत् । पथाम् । अङ्कांसि । अनु । आऽपनीफणत् ॥४

“उत अपि च "स्यः सः "वाजी वेजनवानश्वरूपो देवः “ग्रीवायां गरणसाधनायां कण्ठे "बद्धः “अपिकक्षे कक्षप्रदेशे "आसनि आस्ये च बद्धः । बद्धपल्यङ्कस्योक्तेषु स्थानेषु पाशबन्धाः संभवन्ति । एवं बद्धः सन् “क्षिपणिं क्षेपणम् "अनु तुरण्यति त्वरयति गन्तुम्। किंचायं "दधिक्राः देवः "क्रतुं कर्म प्रज्ञां वा "अनु

अनुसृत्य "संतवीत्वत् प्रवृद्धबलवान सन् “पथां मार्गाणाम् "अङ्कांसि कुटिलानि अनुसृत्य "आपनीफणत् सर्वतो भृशं गच्छति ॥ फणतेर्गत्यर्थस्य यङ्लुकि इदं रूपम् ॥ अपि स वाजी वेजनवान्' (निरु. २.२८ ) इत्यादि निरुक्तमनुसंधेयम् ॥

हं॒सः शु॑चि॒षद्व॑सु॑रन्तरिक्ष॒सद्धोता॑ वेदि॒षदति॑थिर्दुरोण॒सत् ।

नृ॒षद्व॑र॒सदृ॑त॒सद्व्यो॑म॒सद॒ब्जा गो॒जा ऋ॑त॒जा अ॑द्रि॒जा ऋ॒तम् ॥५

हं॒सः । शु॒चि॒ऽसत् । वसुः॑ । अ॒न्त॒रि॒क्ष॒ऽसत् । होता॑ । वे॒दि॒ऽसत् । अति॑थिः । दु॒रो॒ण॒ऽसत् ।

नृ॒ऽसत् । व॒र॒ऽसत् । ऋ॒त॒ऽसत् । व्यो॒म॒ऽसत् । अ॒प्ऽजाः । गो॒ऽजाः । ऋ॒त॒ऽजाः । अ॒द्रि॒ऽजाः । ऋ॒तम् ॥५

हंसः । शुचिऽसत् । वसुः । अन्तरिक्षऽसत् । होता । वेदिऽसत् । अतिथिः । दुरोणऽसत् ।

नृऽसत् । वरऽसत् । ऋतऽसत् । व्योमऽसत् । अप्ऽजाः । गोऽजाः । ऋतऽजाः । अद्रिऽजाः । ऋतम् ॥५

अनया सौर्यर्चा य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुः' (छा. उ. १.६. ६) इत्यादिश्रुत्युक्तो मण्डलाभिमानी देवोऽस्ति यश्च सर्वप्राणिचित्तरूपस्थितः परमात्मा यच्च निरस्तसमस्तौपाधिकं परं ब्रह्म तत्सर्वमेकमेवेति प्रतिपाद्यते ॥ "हंसः । हन्तिर्गत्यर्थः । सर्वत्र सर्वदा गन्ता ' योऽहं सोऽसौ'

इत्यादिश्रुत्युक्तप्रकारेणैकीकृत्योपास्यः परमात्ममन्त्रप्रतिपाद्य आदित्यः। स च शुचौ दीप्ते द्युलोके सीदतीति “शुचिषत्। अथ यदतः परो दिवो ज्योतिर्दीप्यते ' ( छा. उ. ३. १३. ७) इत्यादिश्रुतेः। अनेन द्युस्थानः आदित्यः प्रतिपादितः। स एव मध्यस्थानो वायुरित्याह। "वसुः सर्वस्य वासयिता वायुः। स च "अन्तरिक्षसत् अन्तरिक्षसंचारी। अथ तस्यैव क्षितिस्थानवैदिकाग्निरूपतामाह। “होता देवानामाह्वाता होमनिष्पादको वा "वेदिषत् वेद्यां गार्हपत्यादिरूपेण स्थितः। “अतिथिः अतिथिवत् सर्वदा पूज्योऽग्निः। “दुरोणसत्। दुरोणं गृहनाम। तत्र पाकादिसाधनत्वेन स्थितः। अनेन लौकिकाग्न्यात्मकत्वमुक्तम्। “नृषत्। नृषु मनुष्येषु चैतन्यरूपेण सीदतीति नृषत्। अनेन परमात्मरूपत्वमुक्तम्। पुनरप्यादित्यात्मतामाह। “वरसत्

। वरे वरणीये मण्डले सीदतीति वरसत् आदित्यः । वरं वा एतत्सद्मनां यस्मिन्नेष आसन्नस्तपति (ऐ.ब्रा. ४.२०) इति हि श्रूयते । ऋतं सत्यं ब्रह्म यज्ञो वा । तत्र सीदतीति “ऋतसत् अग्निः । व्योमान्तरिक्षम् । तत्र सीदतीति “व्योमसत् वायुः । इदानीमादित्यतोच्यते । “अब्जाः उदकेषु जातः । उदकमध्ये खल्वयं जायते । "गोजाः गोषु रश्मिषु जातः । ऋतं सत्यम् । सर्वैर्दृश्यत्वेन सत्यजातः। न ह्यसाविन्द्रादिवत् परोक्षो भवति । यद्वा । उदकेषु वैद्युतरूपेण वा वाडवरूपेण वा जातः । 'अद्रिजाः अद्र्यावुदयाचले जातः । एवं महानुभाव आदित्यः “ऋतं सत्यमबाध्यं सर्वाधिष्ठानं ब्रह्मतत्वम् । तद्रूपो ह्यसावेव। आदित्यस्योक्तरूपत्वं 'हंसः शुचिषदित्येष वै हंसः शुचिषत् ' (ऐ. ब्रा. ४. २०) इत्यादिना ब्राह्मणे समाम्नतम्

॥ ॥ १४ ॥

# ऋग्वेदः सूक्तं ४.४१



दे. इन्द्रावरुणौ। त्रिष्टुप्

इन्द्रा को वां वरुणा सुम्नमाप स्तोमो हविष्माँ अमृतो न होता ।

यो वां हृदि क्रतुमाँ अस्मदुक्तः पस्पर्शदिन्द्रावरुणा नमस्वान् ॥१॥

इन्द्रा ह यो वरुणा चक्र आपी देवौ मर्तः सख्याय प्रयस्वान् ।

स हन्ति वृत्रा समिथेषु शत्रूनवोभिर्वा महद्भिः स प्र शृण्वे ॥२॥

इन्द्रा ह रत्नं वरुणा धेष्ठेत्था नृभ्यः शशमानेभ्यस्ता ।

यदी सखाया सख्याय सोमैः सुतेभिः सुप्रयसा मादयैते ॥३॥

इन्द्रा युवं वरुणा दिद्युमस्मिन्नोजिष्ठमुग्रा नि वधिष्टं वज्रम् ।

यो नो दुरेवो वृकतिर्दभीतिस्तस्मिन्मिमाथामभिभूत्योजः ॥४॥

इन्द्रा युवं वरुणा भूतमस्या धियः प्रेतारा वृषभेव धेनोः ।

सा नो दुहीयद्यवसेव गत्वी सहस्रधारा पयसा मही गौः ॥५॥

तोके हिते तनय उर्वरासु सूरो दृशीके वृषणश्च पौंस्ये ।

इन्द्रा नो अत्र वरुणा स्यातामवोभिर्दस्मा परितक्म्यायाम् ॥६॥

युवामिद्ध्यवसे पूर्व्याय परि प्रभूती गविषः स्वापी ।

वृणीमहे सख्याय प्रियाय शूरा मंहिष्ठा पितरेव शम्भू ॥७॥

ता वां धियोऽवसे वाजयन्तीराजिं न जग्मुर्युवयूः सुदानू ।

श्रिये न गाव उप सोममस्थुरिन्द्रं गिरो वरुणं मे मनीषाः ॥८॥

इमा इन्द्रं वरुणं मे मनीषा अग्मन्नुप द्रविणमिच्छमानाः ।

उपेमस्थुर्जोष्टार इव वस्वो रघ्वीरिव श्रवसो भिक्षमाणाः ॥९॥

अश्व्यस्य त्मना रथ्यस्य पुष्टेर्नित्यस्य रायः पतयः स्याम ।

ता चक्राणा ऊतिभिर्नव्यसीभिरस्मत्रा रायो नियुतः सचन्ताम् ॥१०॥

आ नो बृहन्ता बृहतीभिरूती इन्द्र यातं वरुण वाजसातौ ।

यद्दिद्यवः पृतनासु प्रक्रीळान्तस्य वां स्याम सनितार आजेः ॥११॥

**सायणभाष्यम्**

‘इन्द्रा को वाम्' इत्येकादशर्चं नवमं सूक्तं वामदेवस्या त्रैष्टुभमैन्द्रावरुणम् । अत्रानुक्रमणिका ‘ इन्द्रा को वामेकादशैन्द्रावरुणं तु ' इति । अभिप्लविकेधूक्थेषु तृतीयसवने मैत्रावरुणशस्त्रेषु स्तोमवृद्धावावापार्थमेतदादिसूक्तद्वयम् । इन्द्रा को वामिति सूक्ते' (आश्व. श्रौ. ७.९) इति सूत्रितत्वात् ॥

इन्द्रा॒ को वां॑ वरुणा सु॒म्नमा॑प॒ स्तोमो॑ ह॒विष्माँ॑ अ॒मृतो॒ न होता॑ ।

यो वां॑ हृ॒दि क्रतु॑माँ अ॒स्मदु॒क्तः प॒स्पर्श॑दिन्द्रावरुणा॒ नम॑स्वान् ॥१

इन्द्रा॑ । कः । वा॒म् । व॒रु॒णा॒ । सु॒म्नम् । आ॒प॒ । स्तोमः॑ । ह॒विष्मा॑न् । अ॒मृतः॑ । न । होता॑ ।

यः । वा॒म् । हृ॒दि । क्रतु॑ऽमान् । अ॒स्मत् । उ॒क्तः । प॒स्पर्श॑त् । इ॒न्द्रा॒व॒रु॒णा॒ । नम॑स्वान् ॥१

इन्द्रा । कः । वाम् । वरुणा । सुम्नम् । आप । स्तोमः । हविष्मान् । अमृतः । न । होता ।

यः । वाम् । हृदि । क्रतुऽमान् । अस्मत् । उक्तः । पस्पर्शत् । इन्द्रावरुणा । नमस्वान् ॥१

हे "इन्द्रा हे "वरुणा हे इन्द्रावरुणौ । परस्परापेक्षया द्विवचनम् । "वां युवयोः "सुम्नं सुखं "कः “स्तोमो "हविष्मान् हविर्भिरुपेतः सोमाज्यादिप्रदेयद्रव्योपेतं कतमत् स्तोत्रं सुम्नम्न "आप । फलकत्वेन प्राप्नुयादित्यर्थः । यद्वा । हविष्मानित्येतदुत्तरत्र योज्यम् । हविष्मान् हविर्युक्तः "अमृतः अमरणलक्षणः स्वर्गसाधनो “होता अग्निरिव । स यथा तथा "यः स्तोमो हे इन्द्रावरुणौ “वां युवयोः "हृदि हृदये “क्रतुमान् प्रज्ञोपेतः "अस्मत् अस्मत्सकाशात् "उक्तः उदितः "नमस्वान् हविष्मान् नमस्कारोपेतो वा "पस्पर्शत् स्पृशेत् हृदयंगमो भवेत् । स क इति स्तोमप्रशंसा ॥

इन्द्रा॑ ह॒ यो वरु॑णा च॒क्र आ॒पी दे॒वौ मर्तः॑ स॒ख्याय॒ प्रय॑स्वान् ।

स ह॑न्ति वृ॒त्रा स॑मि॒थेषु॒ शत्रू॒नवो॑भिर्वा म॒हद्भिः॒ स प्र शृ॑ण्वे ॥२

इन्द्रा॑ । ह॒ । यः । वरु॑णा । च॒क्रे । आ॒पी इति॑ । दे॒वौ । मर्तः॑ । स॒ख्याय॑ । प्रय॑स्वान् ।

सः । ह॒न्ति॒ । वृ॒त्रा । स॒म्ऽइ॒थेषु॑ । शत्रू॑न् । अवः॑ऽभिः । वा॒ । म॒हत्ऽभिः॑ । सः । प्र । शृ॒ण्वे॒ ॥२

इन्द्रा । ह । यः । वरुणा । चक्रे । आपी इति । देवौ । मर्तः । सख्याय । प्रयस्वान् ।

सः । हन्ति । वृत्रा । सम्ऽइथेषु । शत्रून् । अवःऽभिः । वा । महत्ऽभिः । सः । प्र । शृण्वे ॥२

“इन्द्रा “वरुणा इन्द्रावरुणौ "देवौ । हशब्दः पूरणः प्रसिद्धौ वा । "यः “मर्तः मरणधर्मा “प्रयस्वान् हविर्लक्षणान्नवान् सन् "सख्याय सखित्वाय "आपी बन्धू "चक्रे करोति। "सः मर्तः "वृत्रा आवरकाणि पापानि "हन्ति । तथा “समिथेषु संग्रामेषु "शत्रून् हन्ति । वाशब्दश्चार्थे। "महद्भिः “अवोभिः रक्षणैः "सः नरः “प्र “शृण्वे प्रकृष्टं श्रूयते विख्यातो भवति ।।

इन्द्रा॑ ह॒ रत्नं॒ वरु॑णा॒ धेष्ठे॒त्था नृभ्यः॑ शशमा॒नेभ्य॒स्ता ।

यदी॒ सखा॑या स॒ख्याय॒ सोमैः॑ सु॒तेभिः॑ सुप्र॒यसा॑ मा॒दयै॑ते ॥३

इन्द्रा॑ । ह॒ । रत्न॑म् । वरु॑णा । धेष्ठा॑ । इ॒त्था । नृऽभ्यः॑ । श॒श॒मा॒नेभ्यः॑ । ता ।

यदि॑ । सखा॑या । स॒ख्याय॑ । सोमैः॑ । सु॒तेभिः॑ । सु॒ऽप्र॒यसा॑ । मा॒दयै॑ते॒ इति॑ ॥३

इन्द्रा । ह । रत्नम् । वरुणा । धेष्ठा । इत्था । नृऽभ्यः । शशमानेभ्यः । ता ।

यदि । सखाया । सख्याय । सोमैः । सुतेभिः । सुऽप्रयसा । मादयैते इति ॥३

हे इन्द्रावरुणौ “ता । "ह इति प्रसिद्धौ। तौ खलु देवौ “इत्था इत्थं "नृभ्यः मनुष्येभ्यः “शशमानेभ्यः शंसमानेभ्यः स्तोतृभ्योऽस्मभ्यं “रत्नं रमणीयं धनं “धेष्ठा दातृतमौ । भवत इति शेषः । “यदि “सखाया परस्परं यजमानस्य वा सखिभूतौ “सख्याय सखिकर्मणे सखित्वाय "सुतेभिः अभिषुतैः “सोमैः "सुप्रयसा शोभनसोमान्नवन्तौ “मादयैते माद्येताम् । तर्हि रत्नानां दातारौ भवतः ॥

इन्द्रा॑ यु॒वं व॑रुणा दि॒द्युम॑स्मि॒न्नोजि॑ष्ठमु॒ग्रा॒ नि व॑धिष्ट॒ं वज्र॑म् ।

यो नो॑ दु॒रेवो॑ वृ॒कति॑र्द॒भीति॒स्तस्मि॑न्मिमाथाम॒भिभू॒त्योज॑ः ॥४

इन्द्रा॑ । यु॒वम् । व॒रु॒णा॒ । दि॒द्युम् । अ॒स्मि॒न् । ओजि॑ष्ठम् । उ॒ग्रा॒ । नि । व॒धि॒ष्ट॒म् । वज्र॑म् ।

यः । न॒ः । दु॒ःऽएवः॑ । वृ॒कतिः॑ । द॒भीतिः॑ । तस्मि॑न् । मि॒मा॒था॒म् । अ॒भिऽभू॑ति । ओजः॑ ॥४

इन्द्रा । युवम् । वरुणा । दिद्युम् । अस्मिन् । ओजिष्ठम् । उग्रा । नि । वधिष्टम् । वज्रम् ।

यः । नः । दुःऽएवः । वृकतिः । दभीतिः । तस्मिन् । मिमाथाम् । अभिऽभूति । ओजः ॥४

हे “इन्द्रा इन्द्रौ "वरुणा वरुणौ हे “उग्रा उग्रौ । अत्र सर्वत्र परस्परापेक्षया द्विवचनं ‘ प्र मित्रयोर्वरुणयोः ' (ऋ. सं. ७.६६.१) इतिवत्। यद्वा । छान्दसत्वात् व्यवहितस्यापि आनङ् । “अस्मिन् शत्रौ “दिद्युं दीप्तम् "ओजिष्ठम् अतिशयेन तेजोवत् "वज्रम् आयुधं “नि “वधिष्टम् । वधार्थं प्रेरयतमित्यर्थः ।“यः शत्रुः “नः अस्माकं “दुरेवः दुष्प्रापः “वृकतिः अतिशयेनादाता “दभीतिः हिंसक “तस्मिन् शत्रौ "अभिभूति अभिभावुकम् "ओजः बलं "युवं युवां “मिमाथां कुरुतमित्यर्थः ॥ इन्द्रा युवं वरुणा भूतमस्या धियः प्रेतारा वृषभेवं धेनोः ।

इन्द्रा॑ यु॒वं व॑रुणा भू॒तम॒स्या धि॒यः प्रे॒तारा॑ वृष॒भेव॑ धे॒नोः ।

सा नो॑ दुहीय॒द्यव॑सेव ग॒त्वी स॒हस्र॑धारा॒ पय॑सा म॒ही गौः ॥५

इन्द्रा॑ । यु॒वम् । व॒रु॒णा॒ । भू॒तम् । अ॒स्याः । धि॒यः । प्रे॒तारा॑ । वृ॒ष॒भाऽइ॑व । धे॒नोः ।

सा । न॒ः । दु॒ही॒य॒त् । यव॑साऽइव । ग॒त्वी । स॒हस्र॑ऽधारा । पय॑सा । म॒ही । गौः ॥५

इन्द्रा । युवम् । वरुणा । भूतम् । अस्याः । धियः । प्रेतारा । वृषभाऽइव । धेनोः ।

सा । नः । दुहीयत् । यवसाऽइव । गत्वी । सहस्रऽधारा । पयसा । मही । गौः ॥५

हे "इन्द्रा "वरुणा इन्द्रावरुणौ "युवं युवाम् “अस्या “धियः स्तुत्याः "प्रेतारा प्रीणयितारौ “भूतं भवतम् । "वृषभा सेक्तारौ वृषभौ “धेनोः “इव । “सा स्तुतिरूपा धेनुः “नः अस्माकं “दुहीयत् दुह्येत्। कामान् पूरयेत् । “यवसा तृणादिघासेन' निमित्तेन ”गत्वी गत्वा “पयसा "सहस्रधारा “मही महती “गौः “इव ॥ ॥ १५ ॥

तो॒के हि॒ते तन॑य उ॒र्वरा॑सु॒ सूरो॒ दृशी॑के॒ वृष॑णश्च॒ पौंस्ये॑ ।

इन्द्रा॑ नो॒ अत्र॒ वरु॑णा स्याता॒मवो॑भिर्द॒स्मा परि॑तक्म्यायाम् ॥६

तो॒के । हि॒ते । तन॑ये । उ॒र्वरा॑सु । सूरः॑ । दृशी॑के । वृष॑णः । च॒ । पौंस्ये॑ ।

इन्द्रा॑ । नः॒ । अत्र॑ । वरु॑णा । स्या॒ता॒म् । अवः॑ऽभिः । द॒स्मा । परि॑ऽतक्म्यायाम् ॥६

तोके । हिते । तनये । उर्वरासु । सूरः । दृशीके । वृषणः । च । पौंस्ये ।

इन्द्रा । नः । अत्र । वरुणा । स्याताम् । अवःऽभिः । दस्मा । परिऽतक्म्यायाम् ॥६

हे इन्द्रावरुणौ देवौ नः “हिते “तोके पुत्रे “तनये तत्पुत्रे च "उर्वरासु सस्याढ्यासु भूमिषु निमित्तभूतासु “सूरः प्रेरकस्य सूर्यस्य “दृशीके चिरकालदर्शनाय । चिरजीवनायेत्यर्थः । तथा “वृषणः सेक्तुर्मम “पौंस्ये “च पुंस्त्वाय च पुनरपि प्रजननसामर्थ्याय च "दस्मा शत्रूणां हिंसकौ सन्तौ “नः अस्माकम् “अवोभिः रक्षणैः सह “परितक्म्यायां परितकने निमित्तभूते सति । यद्वा रात्रिनामैतत् । रात्रौ हिंसकानां वधाय “स्यातां भवेताम् ॥

यु॒वामिद्ध्यव॑से पू॒र्व्याय॒ परि॒ प्रभू॑ती ग॒विषः॑ स्वापी ।

वृ॒णी॒महे॑ स॒ख्याय॑ प्रि॒याय॒ शूरा॒ मंहि॑ष्ठा पि॒तरे॑व श॒म्भू ॥७

यु॒वाम् । इत् । हि । अव॑से । पू॒र्व्याय॑ । परि॑ । प्रभू॑ती॒ इति॒ प्रऽभू॑ती । गो॒ऽइषः॑ । स्वा॒पी॒ इति॑ सुऽआपी ।

वृ॒णी॒महे॑ । स॒ख्याय॑ । प्रि॒याय॑ । शूरा॑ । मंहि॑ष्ठा । पि॒तरा॑ऽइव । श॒म्भू इति॑ श॒म्ऽभू ॥७

युवाम् । इत् । हि । अवसे । पूर्व्याय । परि । प्रभूती इति प्रऽभूती । गोऽइषः । स्वापी इति सुऽआपी ।

वृणीमहे । सख्याय । प्रियाय । शूरा । मंहिष्ठा । पितराऽइव । शम्भू इति शम्ऽभू ॥७

हे इन्द्रावरुणौ “गविषः गा इच्छन्तो वयं "युवामित् । “हि इति पादपूरणः । युवामेव “पूर्व्याय पुरातनाय युवाभ्यां कृताय "अवसे रक्षणाय । वृणीमहे इति संबन्धः । "प्रभूती प्रभवन्तौ “स्वापी शोभनबन्धुभूतौ । आपिरिति बन्धुनाम । यद्वा । सुष्ठु व्यापनशीलौ

“शूरा विक्रान्तौ "मंहिष्ठा अतिशयेन पूज्यौ युवां “सख्याय समानख्यानाय “प्रियाय च “परि “वृणीमहे परितः प्रार्थयामहे । “शंभू सुखस्य भावयितारौ “पितरेव पितरौ पुत्राय तद्वत् ॥

ता वां धियोऽवसे वाजयन्तीराजिं न जग्मुर्युवयूः सुदानू ।

श्रिये न गाव उप सोममस्थुरिन्द्रं गिरो वरुणं मे मनीषाः ॥८

ताः । वाम् । धियः । अवसे । वाजऽयन्तीः । आजिम् । न । जग्मुः । युवऽयूः । सुदानू इति सुऽदानू ।

श्रिये । न । गावः । उप । सोमम् । अस्थुः । इन्द्रम् । गिरः । वरुणम् । मे । मनीषाः ॥८

ताः । वाम् । धियः । अवसे । वाजऽयन्तीः । आजिम् । न । जग्मुः । युवऽयूः । सुदानू इति सुऽदानू ।

श्रिये । न । गावः । उप । सोमम् । अस्थुः । इन्द्रम् । गिरः । वरुणम् । मे । मनीषाः ॥८

“सुदानू शोभनफलदातारौ हे देवौ “वां युवां “वाजयन्तीः रत्नमिच्छन्त्यः “धियः स्तुतयः “जग्मुः गच्छन्ति । “युवयूः युवां कामयमानाः पदातयः “अवसे रक्षणाय “आजिं “न संग्राममिव । किंच “श्रिये दध्यादिश्रयणाय “गावः “सोमं “न सोममिव “इन्द्रं “वरुणं च “मे मदीयाः "मनीषाः मनस ईश्वराः “गिरः स्तुतयः “उप “अस्थुः तिष्ठन्ति प्रीणयन्तीत्यर्थः ॥

इमा इन्द्रं वरुणं मे मनीषा अग्मन्नुप द्रविणमिच्छमानाः ।

उपेमस्थुर्जोष्टार इव वस्वो रघ्वीरिव श्रवसो भिक्षमाणाः ॥९

इमाः । इन्द्रम् । वरुणम् । मे । मनीषाः । अग्मन् । उप । द्रविणम् । इच्छमानाः ।

उप । ईम् । अस्थुः । जोष्टारःऽइव । वस्वः । रघ्वीःऽइव । श्रवसः । भिक्षमाणाः ॥९

इमाः । इन्द्रम् । वरुणम् । मे । मनीषाः । अग्मन् । उप । द्रविणम् । इच्छमानाः ।

उप । ईम् । अस्थुः । जोष्टारःऽइव । वस्वः । रघ्वीःऽइव । श्रवसः । भिक्षमाणाः ॥९

“इन्द्रं “वरुणं च “मे मम “मनीषाः स्तुतयः" "द्रविणमिच्छमानाः सत्यः “उप “अग्मन् उपगच्छन्ति । “जोष्टारः सेवकाः “वस्वः धनस्य लाभाय धनिकं स्वामिनम् ”इव। "रघ्वीरिव लघ्व्य इव शीघ्रगामिन्य इव “श्रवसः अन्नस्य अन्नं "भिक्षमाणाः एनमिन्द्रं वरुणं च "उप “अस्थुः उपतिष्ठन्ते ॥

अश्व्य॑स्य॒ त्मना॒ रथ्य॑स्य पु॒ष्टेर्नित्य॑स्य रा॒यः पत॑यः स्याम ।

ता चं॒क्रा॒णा ऊ॒तिभि॒र्नव्यं॑सीभिरस्म॒त्रा रायों नि॒युतं॑ः सचन्ताम् ॥१०

अश्व्यं॑स्य । त्मनां॑ । रथ्यं॑स्य । पु॒ष्टेः । नित्यं॑स्य । रा॒यः । पत॑यः । स्या॒म् ।

ता । च॒क्रा॒णौ । ऊ॒तिऽभिः॑ । नव्यं॑सीभिः । अ॒स्म॒ऽत्रा । रायः॑ । नि॒ऽयुतः॑ । स॒च॒न्ता॒म् ॥१०

अश्व्यस्य । त्मना । रथ्यस्य । पुष्टेः । नित्यस्य । रायः । पतयः । स्याम ।

ता । चक्राणौ । ऊतिऽभिः । नव्यसीभिः । अस्मऽत्रा । रायः । निऽयुतः । सचन्ताम् ॥१०

“अश्व्यस्य अश्वसमूहस्य “रथ्यस्य रथरूपस्य रथार्हस्य वा “पुष्टेः पोषस्य “नित्यस्य अविचलितस्य “रायः धनस्य “त्मना आत्मना स्वयमेवाप्रयत्नेन "पतयः “स्याम । “ता तौ देवौ "चक्राणा चङ्क्रममाणौ गन्तारौ । भवतमिति शेषः। "नव्यसीभिः नूतनाभिः “ऊतिभिः रक्षाभिः “अस्मत्रा अस्मासु “नियुतः अश्वाः “रायः धनानि च "सचन्तां सेवन्ताम् ॥

आ नों बृहन्ता बृ॒ह॒तीभि॑रू॒ती इन्द्रं॑ या॒तं व॑रुण॒ वाजं॑सातौ ।

यद्वि॒द्यव॒ः पृतं॑नासु प्र॒क्रीळा॒न्तस्यं॑ वां स्याम सनि॒तारं॑ आ॒जेः ॥११

आ । न॒ः । बृ॒ह॒न्ता॒ । बृ॒ह॒तीभिः॑ । ऊ॒ती । इन्द्रं॑ । या॒तम् । व॒रु॒ण॒ । वाजं॑ऽसातौ ।

यत् । दि॒द्यवः॑ । पृतं॑नासु । प्र॒ऽक्रीळां॑न् । तस्यं॑ । वा॒म् । स्या॒म॒ । स॒नि॒तारः॑ । आ॒जेः ॥११

आ । नः । बृहन्ता । बृहतीभिः । ऊती । इन्द्र । यातम् । वरुण । वाजऽसातौ ।

यत् । दिद्यवः । पृतनासु । प्रऽक्रीळान् । तस्य । वाम् । स्याम । सनितारः । आजेः ॥११

हे "बृहन्ता महान्तौ हे "इन्द्र हे “वरुण "बृहतीभिः महतीभिः “ऊती ऊतिभिः रक्षाभिः सह "आ “यातम् आगच्छतम् । “वाजसातौ संग्रामेऽन्नलाभनिमित्तभूते वा “यत् यस्मिन्नाजौ संग्रामे “पृतनासु सेनासु “दिद्यवः । आयुधनामैतत् । आयुधानि शत्रुसंबन्धीनि “प्रक्रीळान् प्रक्रीडन्ते । “तस्य तादृशस्य "आजेः युद्धस्य “सनितारः संभक्तारः “स्याम भवेम । "वां युवयोरनुग्रहात् ॥ ॥ १६ ॥

# ऋग्वेदः सूक्तं ४.४२

ऋग्वेदः - मण्डल ४
← सूक्तं ४.४१ सूक्तं ४.४२ सूक्तं ४.४३ →
त्रसदस्युः पौरुकुत्स्यः

दे. त्रसदस्युः, ७-१० इन्द्रावरुणौ। त्रिष्टुप्

मम द्विता राष्ट्रं क्षत्रियस्य विश्वायोर्विश्वे अमृता यथा नः ।
क्रतुं सचन्ते वरुणस्य देवा राजामि कृष्टेरुपमस्य वव्रेः ॥१॥
अहं राजा वरुणो मह्यं तान्यसुर्याणि प्रथमा धारयन्त ।
क्रतुं सचन्ते वरुणस्य देवा राजामि कृष्टेरुपमस्य वव्रेः ॥२॥
अहमिन्द्रो वरुणस्ते महित्वोर्वी गभीरे रजसी सुमेके ।
त्वष्टेव विश्वा भुवनानि विद्वान्समैरयं रोदसी धारयं च ॥३॥
अहमपो अपिन्वमुक्षमाणा धारयं दिवं सदन ऋतस्य ।
ऋतेन पुत्रो अदितेरृतावोत त्रिधातु प्रथयद्वि भूम ॥४॥
मां नरः स्वश्वा वाजयन्तो मां वृताः समरणे हवन्ते ।
कृणोम्याजिं मघवाहमिन्द्र इयर्मि रेणुमभिभूत्योजाः ॥५॥

अहं ता विश्वा चकरं नकिर्मा दैव्यं सहो वरते अप्रतीतम् ।

यन्मा सोमासो ममदन्यदुक्थोभे भयेते रजसी अपारे ॥६॥

विदुष्टे विश्वा भुवनानि तस्य ता प्र ब्रवीषि वरुणाय वेधः ।

त्वं वृत्राणि शृण्विषे जघन्वान्त्वं वृताँ अरिणा इन्द्र सिन्धून् ॥७॥

अस्माकमत्र पितरस्त आसन्सप्त ऋषयो दौर्गहे बध्यमाने ।

त आयजन्त त्रसदस्युमस्या इन्द्रं न वृत्रतुरमर्धदेवम् ॥८॥

पुरुकुत्सानी हि वामदाशद्धव्येभिरिन्द्रावरुणा नमोभिः ।

अथा राजानं त्रसदस्युमस्या वृत्रहणं ददथुरर्धदेवम् ॥९॥

राया वयं ससवांसो मदेम हव्येन देवा यवसेन गावः ।

तां धेनुमिन्द्रावरुणा युवं नो विश्वाहा धत्तमनपस्फुरन्तीम् ॥१०॥

**सायणभाष्यम्**

‘ मम द्विता ' इति दशर्चं दशमं सूक्तम् । पुरुकुत्सस्य पुत्रस्त्रसदस्यू राजर्षिः । आद्यासु षट्स्वात्मनः स्तुत्यत्वात् आत्मा देवता । अवशिष्टानां चतसृणामिन्द्रावरुणौ देवता । त्रिष्टुप् छन्दः । अत्रानुक्रमणिका- मम द्विता दश त्रसदस्युः 'पौरुकुत्स्यः षळाद्या आत्मस्तवः' इति । उक्तो विनियोगः पूर्वसूक्ते ॥

मम॑ द्वि॒ता रा॒ष्ट्रं क्ष॒त्रिय॑स्य वि॒श्वायो॒र्विश्वे॑ अ॒मृता॒ यथा॑ नः ।

क्रतुं॑ सचन्ते॒ वरु॑णस्य दे॒वा राजा॑मि कृ॒ष्टेरु॑प॒मस्य॑ व॒व्रेः ॥१

मम॑ । द्वि॒ता । रा॒ष्ट्रम् । क्ष॒त्रिय॑स्य । वि॒श्वऽआ॑योः । विश्वे॑ । अ॒मृताः॑ । यथा॑ । नः॒ ।

क्रतु॑म् । स॒च॒न्ते॒ । वरु॑णस्य । दे॒वाः । राजा॑मि । कृ॒ष्टेः । उ॒प॒मस्य॑ । व॒व्रेः ॥१

मम । द्विता । राष्ट्रम् । क्षत्रियस्य । विश्वऽआयोः । विश्वे । अमृताः । यथा । नः ।

क्रतुम् । सचन्ते । वरुणस्य । देवाः । राजामि । कृष्टेः । उपमस्य । वव्रेः ॥१

“क्षत्रियस्य क्षत्रियजात्युत्पन्नस्य “विश्वायोः कृत्स्नमनुष्याधीशस्य । मम इत्यात्मनो निर्देशः । “द्विता क्षितिस्वर्गभेदेन द्वित्वापन्नं “राष्ट्रम् । “मम त्रसदस्योः “विश्वे सर्वे "अमृताः देवाः “यथा “नः अस्माकं भवन्ति तथा राष्ट्रं प्रजाश्चेत्यर्थः । “वरुणस्य वारकस्य वरुणात्मनो वा "कृष्टेः मनुष्यस्य तद्वतो वा “उपमस्य । अन्तिकनामैतत् । सर्वेषामन्तिकतमस्य “वव्रेः । रूपनामैतत् । रूपवतो मम “क्रतुं कर्म “सचन्ते सेवन्ते "देवाः सर्वेऽपि । अहं च “राजामि । राजतिरैश्वर्यकर्मा। सर्वेश्वरः भवामि । यद्वा । उपमस्य वव्रेः कृष्टे राजामीति योज्यम् ॥

अ॒हं राजा॒ वरु॑णो॒ मह्यं॒ तान्य॑सु॒र्या॑णि प्रथ॒मा धा॑रयन्त ।

क्रतुं॑ सचन्ते॒ वरु॑णस्य दे॒वा राजा॑मि कृ॒ष्टेरु॑प॒मस्य॑ व॒व्रेः ॥२

अ॒हम् । राजा॑ । वरु॑णः । मह्य॑म् । तानि॑ । अ॒सु॒र्या॑णि । प्र॒थ॒मा । धा॒र॒य॒न्त॒ ।

क्रतु॑म् । स॒च॒न्ते॒ । वरु॑णस्य । दे॒वाः । राजा॑मि । कृ॒ष्टेः । उ॒प॒मस्य॑ । व॒व्रेः ॥२

अहम् । राजा । वरुणः । मह्यम् । तानि । असुर्याणि । प्रथमा । धारयन्त ।

क्रतुम् । सचन्ते । वरुणस्य । देवाः । राजामि । कृष्टेः । उपमस्य । वव्रेः ॥२

“अहम् एव च “राजा “वरुणः भवामि । “मह्यं मदर्थमेव “प्रथमा मुख्यानि “तानि प्रसिद्धानि “असुर्याणि असुरविघातकानि बलानि “धारयन्त । अधारयन् देवाः । शिष्टं गतम् ॥

अ॒हमिन्द्रो॒ वरु॑ण॒स्ते म॑हि॒त्वोर्वी ग॑भी॒रे रज॑सी सु॒मेके॑ ।

त्वष्टे॑व॒ विश्वा॒ भुव॑नानि वि॒द्वान्समै॑रयं॒ रोद॑सी धा॒रयं॑ च ॥३

अ॒हम् । इन्द्रः॑ । वरु॑णः । ते इति॑ । म॒हि॒ऽत्वा । उ॒र्वी इति॑ । ग॒भी॒रे इति॑ । रज॑सी॒ इति॑ । सु॒मेके॒ इति॑ सु॒ऽमेके॑ ।

त्वष्टा॑ऽइव । विश्वा॑ । भुव॑नानि । वि॒द्वान् । सम् । ऐ॒र॒य॒म् । रोद॑सी॒ इति॑ । धा॒रय॑म् । च॒ ॥३

अहम् । इन्द्रः । वरुणः । ते इति । महिऽत्वा । उर्वी इति । गभीरे इति । रजसी इति । सुमेके इति सुऽमेके ।

त्वष्टाऽइव । विश्वा । भुवनानि । विद्वान् । सम् । ऐरयम् । रोदसी इति । धारयम् । च ॥३

"अहं त्रसदस्युः “इन्द्रः इन्द्रोऽप्यस्मि । अहं “वरुणः च । “ते "महित्वा महित्वेन "उर्वी विस्तीर्णे “गभीरे दुरवगाहे अवकाशवत्यौ वा “सुमेके सुरूपे “रजसी द्यावापृथिव्यौ ते अप्यहमेव । “विद्वान् जानन्नहं “त्वष्टेव प्रजापतिरिव “विश्वा “भुवनानि सर्वाणि भूतानि “समैरयं संप्रैरयम् । “रोदसी द्यावापृथिव्यौ “धारयं “च धृतवानस्मि ॥

अ॒हम॒पो अ॑पिन्वमु॒क्षमा॑णा धा॒रय॑ं दिव॒ं सद॑न ऋ॒तस्य॑ ।

ऋ॒तेन॑ पु॒त्रो अदि॑तेरृ॒तावो॒त त्रि॒धातु॑ प्रथय॒द्वि भूम॑ ॥४

अ॒हम् । अ॒पः । अ॒पि॒न्व॒म् । उ॒क्षमा॑णाः । धा॒रय॑म् । दिव॑म् । सद॑ने । ऋ॒तस्य॑ ।

ऋ॒तेन॑ । पु॒त्रः । अदि॑तेः । ऋ॒तऽवा॑ । उ॒त । त्रि॒ऽधातु॑ । प्र॒थ॒य॒त् । वि । भूम॑ ॥४

अहम् । अपः । अपिन्वम् । उक्षमाणाः । धारयम् । दिवम् । सदने । ऋतस्य ।

ऋतेन । पुत्रः । अदितेः । ऋतऽवा । उत । त्रिऽधातु । प्रथयत् । वि । भूम ॥४

"अहम् एव “उक्षमाणाः सिञ्चतीः “अपः “अपिन्वम् असेचयम् । तथा “ऋतस्य उदकस्य आदित्यस्य वा “सदने स्थाने निमित्ते सति “दिवं द्युलोकं “धारयम् । यद्वा । उदकाधारे स्थाने दिवमादित्यं धारयम् । अहमेव “ऋतेन उदकेन निमित्तेन "अदितेः “पुत्रः “ऋतावा अभूवम् । “उत अपि च “भूम व्याप्तमाकाशं “त्रिधातु त्रिप्रकारं “वि विशेषेण “प्रथयत् । मदर्थमेव क्षित्यादिलोकत्रयमकार्षीत् परमेश्वरः ॥

मां नर॒ः स्वश्वा॑ वा॒जय॑न्तो॒ मां वृ॒ताः स॒मर॑णे हवन्ते ।

कृ॒णोम्या॒जिं म॒घवा॒हमिन्द्र॒ इय॑र्मि रे॒णुम॒भिभू॑त्योजाः ॥५

माम् । नरः॑ । सु॒ऽअश्वाः॑ । वा॒जय॑न्तः । माम् । वृ॒ताः । स॒म्ऽअर॑णे । ह॒व॒न्ते॒ ।

कृ॒णोमि॑ । आ॒जिम् । म॒घऽवा॑ । अ॒हम् । इन्द्रः॑ । इय॑र्मि । रे॒णुम् । अ॒भिभू॑तिऽओजाः ॥५

माम् । नरः । सुऽअश्वाः । वाजयन्तः । माम् । वृताः । सम्ऽअरणे । हवन्ते ।

कृणोमि । आजिम् । मघऽवा । अहम् । इन्द्रः । इयर्मि । रेणुम् । अभिभूतिऽओजाः ॥५

“मां मामेव “स्वश्वाः शोभनाश्वाः “वाजयन्तः संग्राममिच्छन्तः “नरः नेतारो भटाः । अनुगच्छन्ति इति शेषः । “माम् एव “वृताः सन्तः “समरणे संग्रामे “हवन्ते आह्वयन्ति युद्धार्थम् । “मघवा धनवान् “अहमिन्द्रः सन् “आजिं रणं “कृणोमि करोमि । “अभिभूत्योजाः परेषाम् अभिभाविबलोऽहं "रेणुम् “इयर्मि प्रेरयामि ॥ ॥ १७ ॥

अ॒हं ता विश्वा॑ चकर॒ं नकि॑र्मा॒ दैव्य॒ं सहो॑ वरते॒ अप्र॑तीतम् ।

यन्मा॒ सोमा॑सो म॒मद॒न्यदु॒क्थोभे भ॑येते॒ रज॑सी अपा॒रे ॥६

अ॒हम् । ता । विश्वा॑ । च॒क॒र॒म् । नकिः॑ । मा॒ । दैव्य॑म् । सहः॑ । व॒र॒ते॒ । अप्र॑तिऽइतम् ।

यत् । मा॒ । सोमा॑सः । म॒मद॑न् । यत् । उ॒क्था । उ॒भे इति॑ । भ॒ये॒ते॒ इति॑ । रज॑सी॒ इति॑ । अ॒पा॒रे इति॑ ॥६

अहम् । ता । विश्वा । चकरम् । नकिः । मा । दैव्यम् । सहः । वरते । अप्रतिऽइतम् ।

यत् । मा । सोमासः । ममदन् । यत् । उक्था । उभे इति । भयेते इति । रजसी इति । अपारे इति ॥६

“अहं त्रसदस्युः “ता तानि प्रसिद्धानि “विश्वा सर्वाणि “चकरम् अकार्षम् । “अप्रतीतम् अप्रतिगतं “मा मां “दैव्यं “सहः देवसंबन्धि सहो बलं “नकिः “वरते नैव वारयति । “यत् यस्मात् “सोमासः सोमाः “मा मां “ममदन् अमदयन्। “यत् च “उक्था शस्त्राण्यपि ममदन् तस्मात् मत्तः “अपारे दूरपारे “उभे “रजसी द्यावापृथिव्यौ “भयेते चलतः ॥

वि॒दुष्टे॒ विश्वा॒ भुव॑नानि॒ तस्य॒ ता प्र ब्र॑वीषि॒ वरु॑णाय वेधः ।

त्वं वृ॒त्राणि॑ शृण्विषे जघ॒न्वान्त्वं वृ॒ताँ अ॑रिणा इन्द्र॒ सिन्धू॑न् ॥७

वि॒दुः । ते॒ । विश्वा॑ । भुव॑नानि । तस्य॑ । ता । प्र । ब्र॒वी॒षि॒ । वरु॑णाय । वे॒ध॒ः ।

त्वम् । वृ॒त्राणि॑ । शृ॒ण्वि॒षे॒ । ज॒घ॒न्वान् । त्वम् । वृ॒तान् । अ॒रि॒णा॒ः । इ॒न्द्र॒ । सिन्धू॑न् ॥७

विदुः । ते । विश्वा । भुवनानि । तस्य । ता । प्र । ब्रवीषि । वरुणाय । वेधः ।

त्वम् । वृत्राणि । शृण्विषे । जघन्वान् । त्वम् । वृतान् । अरिणाः । इन्द्र । सिन्धून् ॥७

इतः परमिन्द्रावरुणयोः स्तुतिः । हे वरुण “तस्य “ते । कर्मणि षष्ठी। तं त्वां “विश्वा सर्वाणि “ता तानि "भुवनानि भूतजातानि “विदुः जानन्ति । हे “वेधः । स्तोतृनामैतत् । हे स्तोतः “वरुणाय “प्र “ब्रवीषि वरुणं स्तौषि । हे “इन्द्र “त्वं “वृत्राणि वैरिणः “जघन्वान् हतवानिति “शृण्विषे श्रूयसे। किंच हे इन्द्र “त्वं “वृतान् आच्छन्नान् “सिन्धून् स्यन्दनस्वभावानप्संघान् “अरिणाः अगमयः॥

अ॒स्माक॒मत्र॑ पि॒तर॒स्त आ॑सन्स॒प्त ऋष॑यो दौर्ग॒हे ब॒ध्यमा॑ने ।

त आय॑जन्त त्र॒सद॑स्युमस्या॒ इन्द्रं॒ न वृ॑त्र॒तुर॑मर्धदे॒वम् ॥८

अ॒स्माक॑म् । अत्र॑ । पि॒तरः॑ । ते । आ॒स॒न् । स॒प्त । ऋष॑यः । दौ॒ःऽग॒हे । ब॒ध्यमा॑ने ।

ते । आ । अ॒य॒ज॒न्त॒ । त्र॒सद॑स्युम् । अ॒स्या॒ः । इन्द्र॑म् । न । वृ॒त्र॒ऽतुर॑म् । अ॒र्ध॒ऽदे॒वम् ॥८

अस्माकम् । अत्र । पितरः । ते । आसन् । सप्त । ऋषयः । दौःऽगहे । बध्यमाने ।

ते । आ । अयजन्त । त्रसदस्युम् । अस्याः । इन्द्रम् । न । वृत्रऽतुरम् । अर्धऽदेवम् ॥८

पुरुकुत्सस्य महिषी दौर्गहे बन्धनस्थिते । पत्यावराजकं दृष्ट्वा राष्ट्रं पुत्रस्य लिप्सया ॥ यदृच्छया समायातान् सप्तर्षीन्पर्यपूजयत् । ते च प्रीताः पुनः प्रचुर्यजेन्द्रावरुणौ भृशम् ॥ सा चेन्द्रावरुणाविष्ट्वा त्रसदस्युमजीजनत् । इतिहासमिमं जानन्नृषिर्ब्रूते ऋचाविह॥ अथ "अस्माकमत्र अस्मिन्नराजके देशेऽस्यां पृथिव्यां वा "पितरः पालयितारः उत्पादकाः "ते "आसन् अभवन् । एते "सप्त "ऋषयः प्रसिद्धाः "दौर्गहे दुर्गहस्य पुत्रे पुरुकुत्से "बध्यमाने दृढं पाशैर्यस्मात् "अस्याः अस्यै पुरुकुत्सान्यै "त्रसदस्युम् "आयजन्त प्रादुरिन्द्रावरुणयोरनुग्रहात। कीदृशं तम्। "वृत्रतुरं वृत्रस्य शत्रोर्हन्तारम् "अर्धदेवं देवानामर्धे समीपे वर्तमानम् । यद्वा । देवानामर्धभूतम् "इन्द्रं "न इन्द्रमिव स्थितं पुत्रं दत्तवन्तः। ' यत्सर्वेषामर्धमिन्द्रः प्रति तस्मादिन्द्रो देवतानां भूयिष्ठभाक्तमः' (तै. सं. ५. ४. ८. ३) इति तैत्तिरीयकम् ॥

पु॒रु॒कुत्सा॑नी॒ हि वा॒मदा॑शद्ध॒व्येभि॑रिन्द्रावरुणा॒ नमो॑भिः ।

अथा॒ राजा॑नं त्र॒सद॑स्युमस्या वृत्र॒हण॑ं ददथुरर्धदे॒वम् ॥९

पु॒रु॒ऽकुत्सा॑नी । हि । वा॒म् । अदा॑शत् । ह॒व्येभिः॑ । इ॒न्द्रा॒व॒रु॒णा॒ । नमः॑ऽभिः ।

अथ॑ । राजा॑नम् । त्र॒सद॑स्युम् । अ॒स्याः॒ । वृ॒त्र॒ऽहन॑म् । द॒द॒थुः॒ । अ॒र्धऽदे॒वम् ॥९

पुरुऽकुत्सानी । हि । वाम् । अदाशत् । हव्येभिः । इन्द्रावरुणा । नमःऽभिः ।

अथ । राजानम् । त्रसदस्युम् । अस्याः । वृत्रऽहनम् । ददथुः । अर्धऽदेवम् ॥९

हे इन्द्रावरुणौ "पुरुकुत्सानी पुरुकुत्सस्य पत्नी ऋषिप्रेरिता "वां युवाम् "अदाशत् "हि अप्रीणयत् खलु । "हव्येभिः हविर्भिः "नमोभिः स्तुतिभिश्च । "अथ "राजानं "त्रसदस्युं वृत्रहणम् "अर्धदेवम् उक्तलक्षणं पुत्रम् "अस्याः अस्यै पुरुकुत्सान्यै "ददथुः दत्तवन्ताविति ॥

रा॒या व॒यं स॑स॒वांसो॑ मदेम ह॒व्येन॑ दे॒वा यव॑सेन॒ गावः॑ ।

तां धे॒नुमि॑न्द्रावरुणा यु॒वं नो॑ वि॒श्वाहा॑ धत्त॒मन॑पस्फुरन्तीम् ॥१०

रा॒या । व॒यम् । स॒स॒ऽवांसः॑ । म॒दे॒म॒ । ह॒व्येन॑ । दे॒वाः । यव॑सेन । गावः॑ ।

ताम् । धे॒नुम् । इ॒न्द्रा॒व॒रु॒णा॒ । यु॒वम् । न॒ः । वि॒श्वाहा॑ । ध॒त्त॒म् । अन॑पऽस्फुरन्तीम् ॥१०

राया । वयम् । ससऽवांसः । मदेम । हव्येन । देवाः । यवसेन । गावः ।

ताम् । धेनुम् । इन्द्रावरुणा । युवम् । नः । विश्वाहा । धत्तम् । अनपऽस्फुरन्तीम् ॥१०

“राया धनेन “मदेम “ससवांसः युवां संभक्तारः “वयम् । “हव्येन “देवाः मोदन्तु “यवसेन च “गावः। “तां “धेनुं प्रीणयित्रीं रयिं हे इन्द्रावरुणौ “विश्वाहा विश्वस्य हन्तारौ “युवं युवां “नः अस्माकं “धत्तं दत्तम् । कीदृशीम् । “अनपस्फुरन्तीम् अनवहिंसिताम् । यद्वा । विश्वाहेत्यव्ययम् । सर्वदेत्यर्थः ॥ ॥ १८ ॥

# ऋग्वेदः सूक्तं ४.४३



दे. अश्विनौ। त्रिष्टुप्

क उ श्रवत्कतमो यज्ञियानां वन्दारु देवः कतमो जुषाते ।
कस्येमां देवीममृतेषु प्रेष्ठां हृदि श्रेषाम सुष्टुतिं सुहव्याम् ॥१॥
को मृळाति कतम आगमिष्ठो देवानामु कतमः शम्भविष्ठः ।
रथं कमाहुर्द्रवदश्वमाशुं यं सूर्यस्य दुहितावृणीत ॥२॥
मक्षू हि ष्मा गच्छथ ईवतो द्यूनिन्द्रो न शक्तिं परितक्म्यायाम् ।
दिव आजाता दिव्या सुपर्णा कया शचीनां भवथः शचिष्ठा ॥३॥
का वां भूदुपमातिः कया न आश्विना गमथो हूयमाना ।
को वां महश्चित्त्यजसो अभीक उरुष्यतं माध्वी दस्रा न ऊती ॥४॥
उरु वां रथः परि नक्षति द्यामा यत्समुद्रादभि वर्तते वाम् ।
मध्वा माध्वी मधु वां प्रुषायन्यत्सीं वां पृक्षो भुरजन्त पक्वाः ॥५॥

सिन्धुर्ह वां रसया सिञ्चदश्वान्घृणा वयोऽरुषासः परि ग्मन् ।

तदू षु वामजिरं चेति यानं येन पती भवथः सूर्यायाः ॥६॥

इहेह यद्वां समना पपृक्षे सेयमस्मे सुमतिर्वाजरत्ना ।

उरुष्यतं जरितारं युवं ह श्रितः कामो नासत्या युवद्रिक् ॥७॥

**सायणभाष्यम्**

'क उ श्रवत्' इति सप्तर्चमेकादशं सूक्तम् । सुहोत्रपुत्रौ पुरुमीळ्हाजमीळ्हावृषी । त्रिष्टुप् छन्दः । अश्विनौ देवता । अत्रानुक्रमणिका- क उ श्रवत्सप्त पुरुमीळ्हाजमीळ्हौ सौहोत्रौ त्वाश्विनं हि ' इति । प्रातरनुवाकाश्विनशस्त्रयोराश्विने क्रतौ त्रैष्टुभे छन्दसीदमादिके द्वे सूक्ते । "धेनुः प्रत्नस्य क उ श्रवत् ' ( आश्व. श्रौ. ४. १५) इति सूत्रितत्वात् ।।

क उं श्रवत्कत॒मो य॒ज्ञिया॑नां व॒ंदारुं दे॒वः क॑त॒मो जुं॑षाते ।

कस्ये॒मां दे॒वीम॒मृते॑षु॒ प्रेष्ठां॑ हृ॒दि श्रे॑षाम सुष्टु॒तिं सुं॑ह॒व्यां ॥१

कः । ऊं॒ इति॑ । श्र॒व॒त् । क॒त॒मः । य॒ज्ञिया॑नाम् । व॒न्दारु॑ । दे॒वः । क॒त॒मः । जु॒षा॒ते॒ ।

कस्यं॑ । इ॒माम् । दे॒वीम् । अ॒मृते॑षु । प्रेष्ठा॑म् । हृ॒दि । श्रे॒षा॒म॒ । सु॒ऽस्तु॒तिम् । सु॒ऽह॒व्याम् ॥१

कः । ऊं इति । श्रवत् । कतमः । यज्ञियानाम् । वन्दारु । देवः । कतमः । जुषाते ।

कस्य । इमाम् । देवीम् । अमृतेषु । प्रेष्ठाम् । हृदि । श्रेषाम । सुऽस्तुतिम् । सुऽहव्याम् ॥१

"यज्ञियानां यज्ञार्हाणां देवानां मध्ये "क "उ देवः "श्रवत् शृणुयात् स्तुतिम् । "कतमः देवः "वन्दारु वन्दनशीलं स्तोत्रम् । "कतमः "देवः "जुषाते सेवते । "कस्य "हृदि "इमां "प्रेष्ठां प्रियतरां "देवीं द्योतमानां "सुहव्यां शोभनान्नोपेतां शोभनैर्हविभिर्युक्तां वा "सुष्टुतिं शोभनां स्तुतिम् "अमृतेषु मध्ये "श्रेषाम श्लेषयेम श्राययेम वा । अश्विनावन्तरेण स्तुतेः को देवः स्वामी भवेदिति ।।

को मृं॑ळाति कत॒म आग॑मिष्ठो दे॒वाना॑मु कत॒मः शंभं॑विष्ठः ।

रथं॒ कमा॑हुर्द्र॒वद॑श्वमा॒शुं यं सूर्य॑स्य दुहि॒तावृ॑णीत ॥२

कः । मृ॒ळा॒ति॒ । क॒त॒मः । आऽग॑मिष्ठः । दे॒वाना॑म् । ऊं॒ इति॑ । क॒त॒मः । शम्ऽभं॑विष्ठः ।

रथ॑म् । कम् । आ॒हुः॒ । द्र॒वत्ऽअ॑श्वम् । आ॒शुम् । यम् । सूर्य॑स्य । दु॒हि॒ता । अवृ॑णीत ॥२

कः । मृळाति । कतमः । आऽगमिष्ठः । देवानाम् । ऊं इति । कतमः । शम्ऽभविष्ठः ।

रथम् । कम् । आहुः । द्रवत्ऽअश्वम् । आशुम् । यम् । सूर्यस्य । दुहिता । अवृणीत ॥२

“को "मृळाति को देवो मृडाति सुखयेत् अस्मान् । "कतमः देवः "आगमिष्ठः आगन्तृतमः अस्मद्यज्ञं प्रति । "देवानामु देवानां मध्ये "कतमः देवः "शंभविष्ठः सुखस्य भावयितृतमः। एवमुक्तगुणविशिष्टः को भवेत् अश्विनावन्तरेणेति भावः । "कं "रथं "द्रवदश्वमाशुम्” "आहुः ब्रुवते। "यं रथं "सूर्यस्य “दुहिता सूर्यस्य पत्नी "अवृणीत समभजत् । तं कं रथं वेगवन्तमाहुः ॥

म॒क्षू हि ष्मा॒ गच्छ॑थ॒ ईव॑तो॒ द्यूनिंद्रो॒ न श॒क्तिं परिं॑तक्म्यायां ।

दि॒व आजा॑ता दि॒व्या सु॑प॒र्णा कया॒ शची॑नां भवथ॒ः शचिं॑ष्ठा ॥३

म॒क्षु । हि । स्म॒ । गच्छ॑थः । ईव॑तः । द्यून् । इन्द्रः॑ । न । श॒क्तिम् । परिं॑ऽतक्म्यायाम् ।

दि॒वः । आऽजा॑ता । दि॒व्या । सु॒ऽप॒र्णा । कया॑ । शची॑नाम् । भ॒व॒थ॒ः । शचिं॑ष्ठा ॥३

मक्षु । हि । स्म । गच्छथः । ईवतः । द्यून् । इन्द्रः । न । शक्तिम् । परिऽतक्म्यायाम् ।

दिवः । आऽजाता । दिव्या । सुऽपर्णा । कया । शचीनाम् । भवथः । शचिष्ठा ॥३

“मक्षु शीघ्रम् । "हि “स्म इति पूरणौ । “ईवतः गमनवत आगामिनः “द्यून् दिवसान् सुत्यासंबन्धिनः प्रति “गच्छथः। “इन्द्रः “शक्तिं “न स्वकीयां शक्तिं यथा “परितक्म्यायां रात्रावतीतायाम् । प्रदर्शयतीति शेषः । सुत्याहन्युषःकाले इन्द्रो यथा गच्छति तद्वत् युवामपि गच्छतमित्यर्थः । दिवः द्युलोकात् “आजाता आगतौ “दिव्या दिवि भवौ "सुपर्णा शोभनगमनौ युवां “शचीनां युष्मदसंबन्धिनां कर्मणां शक्तीनां वा मध्ये "कया शच्या “शचिष्ठा शक्तिमत्तरौ शोभनकर्मवन्तौ वा “भवथः ।।

का वां॑ भूदुप॑मातिः॒ कया॑ न॒ आश्विं॑ना गमथो हू॒यमा॑ना ।

को वां॑ म॒हश्चि॒त्त्यज॑सो अ॒भीक॑ उरु॒ष्यतं॑ माध्वी दस्रा न ऊ॒ती ॥४

का । वा॒म् । भूत् । उप॑ऽमातिः । कया॑ । न॒ः । आ । अ॒श्वि॒ना॒ । ग॒म॒थ॒ः । हू॒यमा॑ना ।

कः । वा॒म् । म॒हः । चि॒त् । त्यज॑सः । अ॒भीकें॑ । उ॒रु॒ष्यत॑म् । मा॒ध्वी॒ इतिं॑ । द॒स्रा॒ । न॒ः । ऊ॒ती ॥४

का । वाम् । भूत् । उपऽमातिः । कया । नः । आ । अश्विना । गमथः । हूयमाना ।

कः । वाम् । महः । चित् । त्यजसः । अभीके । उरुष्यतम् । माध्वी इति । दस्रा । नः । ऊती ॥४

“वां युवयोः "का “उपमातिः । उप समीपे मातिर्मानं गुणानां परिच्छित्तिर्यस्यां सा स्तुतिः का “भूत् भवेत् । “कया स्तुत्या “हूयमाना आहूयमानौ सन्तौ “नः अस्मान् “आ "गमथः आगच्छथः । “वां युवयोः "अभीके आसन्नप्रदेशे "महश्चित् महतः “त्यजसः । त्यज्यते परित्यज्यते सर्वैरिति त्यजः क्रोधः । तस्य सोढा "कः भवेत् । हे “माध्वी मधुररसस्योदकस्य स्रष्टारौ हे “दस्रा शत्रूणामुपक्षपयितारौ अश्विनौ "नः अस्मान् “ऊती ऊत्या रक्षया “उरुष्यतम् । रक्षाकर्मैतत् । रक्षतम् ॥

उ॒रु वां॒ रथ॒: परि॑ नक्षति॒ द्यामा यत्स॑मु॒द्राद॒भि वर्त॑ते वां ।

मध्वा॑ माध्वी॒ मधु॑ वां प्रु॒षाय॒न्यत्सीं॑ वां॒ पृक्षो॑ भु॒रजं॑त प॒क्वाः ॥५

उ॒रु । वा॒म् । रथः॑ । परि॑ । न॒क्ष॒ति॒ । द्याम् । आ । यत् । स॒मु॒द्रात् । अ॒भि । वर्त॑ते । वा॒म् ।

मध्वा॑ । मा॒ध्वी॒ इति॑ । मधु॑ । वा॒म् । प्रु॒षा॒य॒न् । यत् । सी॒म् । वा॒म् । पृक्षः॑ । भु॒रजं॑न्त । प॒क्वाः ॥५

उरु । वाम् । रथः । परि । नक्षति । द्याम् । आ । यत् । समुद्रात् । अभि । वर्तते । वाम् ।

मध्वा । माध्वी इति । मधु । वाम् । प्रुषायन् । यत् । सीम् । वाम् । पृक्षः । भुरजन्त । पक्वाः ॥५

हे अश्विनौ “वां “रथः “द्यां “परि द्युलोकस्य परितः “उरु प्रभूतं “नक्षति गच्छति । “यत् यस्मात् “आ अर्वाक् “समुद्रात् समुद्द्रवणसाधनादन्तरिक्षात् “वां प्रति “अभि “वर्तते आभिमुख्येन गच्छति । हे “माध्वी उक्तलक्षणौ “मध्वा मधुरेण पयसा “मधु मधुरं सोमरसं “प्रुषायन् सिञ्चन्त्यध्वर्यवः ।। “यत् यस्मात् "सीं सर्वतः “वां “पृक्षः युवयोः सोमं “पक्वाः पक्वा यवाः “भुरजन्त प्राप्नुवन्ति । तस्मादभिवर्तते वामिति ॥

सिंधु॑र्ह वां र॒सया॑ सिंच॒दश्वा॑न्घृ॒णा वयो॑ऽरु॒षास॒: परि॑ ग्मन् ।

तदू॒ षु वा॑मजि॒रं चे॑ति॒ यान॒ं येन॒ पती॒ भव॑थः सू॒र्यायाः॑ ॥६

सिन्धुः॑ । ह॒ । वा॒म् । र॒सया॑ । सि॒ञ्च॒त् । अश्वा॑न् । घृ॒णा । वयः॑ । अ॒रु॒षासः॑ । परि॑ । ग्म॒न् ।

तत् । ऊं॒ इति॑ । सु । वा॒म् । अ॒जि॒रम् । चे॒ति॒ । यान॑म् । येन॑ । पती॒ इति॑ । भव॑थः । सू॒र्यायाः॑ ॥६

सिन्धुः । ह । वाम् । रसया । सिञ्चत् । अश्वान् । घृणा । वयः । अरुषासः । परि । ग्मन् ।

तत् । ऊं इति । सु । वाम् । अजिरम् । चेति । यानम् । येन । पती इति । भवथः । सूर्यायाः ॥६

“वां युवयोः “अश्वान् “सिन्धुः स्यन्दमानो मेघ उदकं वा “रसया रसेन “सिञ्चत् असेचयत् । “घृणा दीप्त्या “वयः पक्षिसदृशा वेतारः वा अश्वाः "अरुषासः आरोचमानाः सन्तः “परि परितः “ग्मन् गच्छन्ति । “वां “यानं गमनसाधनं प्रसिद्धो रथः “अजिरम् । क्षिप्रनामैतत् । सु सुष्ठु “चेति ज्ञायते । “येन रथेन “सूर्यायाः “पती पालयितारौ वोढारौ "भवथः सः रथश्चेतीति ।

इ॒हेह॒ यद्वां॑ सम॒ना प॑पृ॒क्षे सेयम॒स्मे सु॑म॒तिर्वा॑जरत्ना ।

उ॒रु॒ष्यतं॑ जरि॒तारं॑ यु॒वं ह॑ श्रि॒तः कामो॑ नासत्या युव॒द्रिक् ॥७

इ॒हऽइ॑ह । यत् । वा॒म् । स॒म॒ना । प॒पृ॒क्षे । सा । इ॒यम् । अ॒स्मे इति॑ । सु॒ऽम॒तिः । वा॒ज॒ऽर॒त्ना॒ ।

उ॒रु॒ष्यत॑म् । ज॒रि॒तार॑म् । यु॒वम् । ह॒ । श्रि॒तः । काम॑ः । ना॒स॒त्या॒ । यु॒व॒द्रिक् ॥७

इहऽइह । यत् । वाम् । समना । पपृक्षे । सा । इयम् । अस्मे इति । सुऽमतिः । वाजऽरत्ना ।

उरुष्यतम् । जरितारम् । युवम् । ह । श्रितः । कामः । नासत्या । युवद्रिक् ॥७

हे अश्विनौ “यत् यस्मात् । यया वा सुमत्या । “इहेह अस्मिन्नेव यज्ञे “समना समानमनस्कौ । सदृशावित्यर्थः । तौ वां युवां सुमत्या पपृक्षे स्तुत्या संयोजयामि । “सेयम् इदानीं क्रियमाणा “सुमतिः शोभनस्तुति: “अस्मे अस्माकमेव फलवती भवत्विति शेषः । हे “वाजरत्ना रमणीयान्नौ । ‘अन्नं वै वाजः ' ( श. बा. ९. ३. ४. १ ) इति श्रुतेः । “युवं युवां “जरितारं गरितारं स्तोतारं माम् “उरुष्यतं रक्षतम् । हे "नासत्या अश्विनौ “कामः अस्मदीयः "युवद्रिक् “ह युवामेव गच्छन् “श्रितः प्राप्तः ॥ ॥ १९ ॥

# ऋग्वेदः सूक्तं ४.४४



दे. अश्विनौ। त्रिष्टुप्

तं वां रथं वयमद्या हुवेम पृथुज्रयमश्विना संगतिं गोः ।
यः सूर्यां वहति वन्धुरायुर्गिर्वाहसं पुरुतमं वसूयुम् ॥१॥
युवं श्रियमश्विना देवता तां दिवो नपाता वनथः शचीभिः ।
युवोर्वपुरभि पृक्षः सचन्ते वहन्ति यत्ककुहासो रथे वाम् ॥२॥
को वामद्या करते रातहव्य ऊतये वा सुतपेयाय वार्कैः ।
ऋतस्य वा वनुषे पूर्व्याय नमो येमानो अश्विना ववर्तत् ॥३॥
हिरण्ययेन पुरुभू रथेनेमं यज्ञं नासत्योप यातम् ।
पिबाथ इन्मधुनः सोम्यस्य दधथो रत्नं विधते जनाय ॥४॥
आ नो यातं दिवो अच्छा पृथिव्या हिरण्ययेन सुवृता रथेन ।
मा वामन्ये नि यमन्देवयन्तः सं यद्ददे नाभिः पूर्व्या वाम् ॥५॥
नू नो रयिं पुरुवीरं बृहन्तं दस्रा मिमाथामुभयेष्वस्मे ।

नरो यद्वामश्विना स्तोममावन्सधस्तुतिमाजमीळ्हासो अग्मन् ॥६॥

इहेह यद्वां समना पपृक्षे सेयमस्मे सुमतिर्वाजरत्ना ।

उरुष्यतं जरितारं युवं ह श्रितः कामो नासत्या युवद्रिक् ॥७॥

**सायणभाष्यम्**

'तं वां रथम्' इति सप्तर्चं द्वादशं सूक्तम् । पुरुमीळहाजमीळ्हावेव ऋषी । त्रिष्टुप् छन्दः । अश्विनौ देवता ।' तं वाम् ' इत्यनुक्रान्तम् । प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः ॥

तं वां रथं वयमद्या हुवेम पृथुज्रयमश्विना संगतिं गोः ।

यः सूर्यां वहति वंधुरायुर्गिर्वाहसं पुरुतमं वसूयुं ॥१

तम् । वाम् । रथम् । वयम् । अद्य । हुवेम । पृथुऽज्रयम् । अश्विना । सम्ऽगतिम् । गोः ।

यः । सूर्याम् । वहति । वन्धुरऽयुः । गिर्वाहसम् । पुरुऽतमम् । वसुऽयुम् ॥१

तम् । वाम् । रथम् । वयम् । अद्य । हुवेम । पृथुऽज्रयम् । अश्विना । सम्ऽगतिम् । गोः ।

यः । सूर्याम् । वहति । वन्धुरऽयुः । गिर्वाहसम् । पुरुऽतमम् । वसुऽयुम् ॥१

हे अश्विनौ “वां युवयोः “रथं “वयं स्तोतारः “अद्य सुत्याहनि “हुवेम आह्वयामः । कीदृशं तम्। “पृथुज्रयं प्रथितवेगं “गोः गवां “संगतिं संगमयितारम् । “यः रथः “सूर्यां “वहति धारयति । “वन्धुरयुः। रथे निवासाधारभूतः काष्ठो वन्धुरं तद्वान् । “तं “गिर्वाहसं गिरां स्तुतीनां वोढारं “पुरुतमं प्रभूततमं “वसूयुं वसुमन्तम् ॥

युवं श्रियमश्विना देवता तां दिवो नपाता वनथः शचीभिः ।

युवोर्वपुरभि पृक्षः सचंते वहंति यत्ककुहासो रथे वां ॥२

युवम् । श्रियम् । अश्विना । देवता । तान् । दिवः । नपाता । वनथः । शचीभिः ।

युवोः । वपुः । अभि । पृक्षः । सचन्ते । वहन्ति । यत् । ककुहासः । रथे । वाम् ॥२

युवम् । श्रियम् । अश्विना । देवता । तान् । दिवः । नपाता । वनथः । शचीभिः ।

युवोः । वपुः । अभि । पृक्षः । सचन्ते । वहन्ति । यत् । ककुहासः । रथे । वाम् ॥२

हे “दिवो "नपाता अदित्यस्य पुत्रस्थानीयौ द्युलोकस्य वा न पातयितारौ हे अश्विनौ "युवं युवां “देवता देवते ॥ विभक्तिव्यत्ययः ॥”तां प्रसिद्धां “श्रियं शचीभिः कर्मभिः शक्तिभिर्वा "वनथः संभजेथे । यद्वा । वनतिर्दानार्थः । “युवोः युवयोः “वपुः शरीरं "पृक्षः अन्नानि सोमलक्षणानि "अभि “सचन्ते प्राप्नुवन्ति “यत् यदा “रथे "वां “वहन्ति “ककुहासः महान्तोऽश्वाः । यद्वा । स्तुतयो वां युवां रथे वहन्ति ॥

को वा॑म॒द्या क॑रते रा॒तह॑व्य ऊ॒तये॑ वा सुत॒पेया॑य वा॒र्कैः ।

ऋ॒तस्य॑ वा व॒नुषे॑ पू॒र्व्याय॒ नमो॑ येमा॒नो अ॑श्वि॒ना व॑वर्तत् ॥३

कः । वा॒म् । अ॒द्य । क॒र॒ते॒ । रा॒तऽह॑व्यः । ऊ॒तये॑ । वा॒ । सु॒त॒ऽपेया॑य । वा॒ । अ॒र्कैः ।

ऋ॒तस्य॑ । वा॒ । व॒नुषे॑ । पू॒र्व्याय॑ । नमः॑ । ये॒मा॒नः । अ॒श्वि॒ना॒ । आ । व॒व॒र्त॒त् ॥३

कः । वाम् । अद्य । करते । रातऽहव्यः । ऊतये । वा । सुतऽपेयाय । वा । अर्कैः ।

ऋतस्य । वा । वनुषे । पूर्व्याय । नमः । येमानः । अश्विना । आ । ववर्तत् ॥३

“कः यजमानः “अद्य “वां युवयोः “करते कुर्यात् स्तुतिम् । “अर्कैः मन्त्रैः “रातहव्यः दत्तसोमः “ऊतये “वा रक्षणाय वा “सुतपेयाय सोमपानाय “वा । “ऋतस्य उदकस्य यज्ञस्य “वा “पूर्व्याय पुराणाय “वनुषे संभजनाय हे “अश्विना अश्विनौ “नमो “येमानः नमस्कारं कुर्वाणः कः “आ “ववर्तत् आवर्तयेत् यज्ञं प्रति ॥

हि॒र॒ण्यये॑न पुरुभू॒ रथे॑ने॒मं य॒ज्ञं ना॑स॒त्योप॑ यातं ।

पिबा॑थ॒ इन्मधु॑नः सो॒म्यस्य॒ दध॑थो॒ रत्नं॑ विध॒ते जना॑य ॥४

हि॒र॒ण्यये॑न । पु॒रु॒भू॒ इति॑ पुरुऽभू । रथे॑न । इ॒मम् । य॒ज्ञम् । ना॒स॒त्या॒ । उप॑ । या॒त॒म् ।

पिबा॑थः । इत् । मधु॑नः । सो॒म्यस्य॑ । दध॑थः । रत्न॑म् । वि॒ध॒ते । जना॑य ॥४

हिरण्ययेन । पुरुभू इति पुरुऽभू । रथेन । इमम् । यज्ञम् । नासत्या । उप । यातम् ।

पिबाथः । इत् । मधुनः । सोम्यस्य । दधथः । रत्नम् । विधते । जनाय ॥४

हे “पुरुभू बहु भवन्तौ नासत्यौ “इमं “यज्ञं “हिरण्ययेन “रथेन “उप "यातम् । “सोम्यस्य सोमसंबन्धिनः “मधुनः मधुररसस्य ॥ कर्मणि षष्ठ्यौ ॥ सोमरसं “पिबाथः पिबथः । “विधते परिचरते “जनाय मह्यं “रत्नं रमणीयं धनं “दधथः धारयथः । दधतेर्दानार्थस्य लेटि रूपम् ॥

आ नो॑ यातं दि॒वो अच्छा॑ पृथि॒व्या हि॑र॒ण्यये॑न सु॒वृता॒ रथे॑न ।

मा वा॑म॒न्ये नि य॑मंदेव॒यंत॒ः सं यद्द॒दे नाभि॒ः पू॒र्व्या वा॑ ॥५

आ । न॒ः । या॒त॒म् । दि॒वः । अच्छ॑ । पृ॒थि॒व्याः । हि॒र॒ण्यये॑न । सु॒ऽवृता॑ । रथे॑न ।

मा । वा॒म् । अ॒न्ये । नि । य॒म॒न् । दे॒व॒ऽयन्त॑ः । सम् । यत् । द॒दे । नाभि॑ः । पू॒र्व्या । वा॒म् ॥५

आ । नः । यातम् । दिवः । अच्छ । पृथिव्याः । हिरण्ययेन । सुऽवृता । रथेन ।

मा । वाम् । अन्ये । नि । यमन् । देवऽयन्तः । सम् । यत् । ददे । नाभिः । पूर्व्या । वाम् ॥५

“नः अस्मान् "अच्छ अभि प्राप्तुं “दिवः द्युलोकात् “पृथिव्याः सकाशाद्वा “आ “यातम् । केन साधनेन । “हिरण्ययेन हितरमणीयेन' “सुवृता शोभनावर्तनेन “रथेन । “वां युवाम् “अन्ये “देवयन्तः देवौ युवामिच्छन्तो यजमानाः “मा “नि “यमन् नियमनं मा कुर्वन् । “यत् यस्मात “पूर्व्या पूर्वार्हा इतरयष्टृभ्यः पूर्वभाविनी “नाभिः बन्धिका स्तुतिः "सं “ददे संबध्नाति । तस्मादायातम् ॥

नू नो॑ र॒यिं पु॑रु॒वीरं॑ बृ॒हंतं॒ दस्रा॒ मिमा॑थामु॒भये॑ष्व॒स्मे ।

नरो॒ यद्वा॑मश्विना॒ स्तोम॒माव॑न्त्स॒धस्तु॑तिमाजमी॒ळ्हासो॑ अग्मन् ॥६

नु । न॒ः । र॒यिम् । पु॒रु॒ऽवीर॑म् । बृ॒हन्त॑म् । दस्रा॑ । मिमा॑थाम् । उ॒भये॑षु । अ॒स्मे इति॑ ।

नर॑ः । यत् । वा॒म् । अ॒श्वि॒ना॒ । स्तोम॑म् । आव॑न् । स॒धऽस्तु॑तिम् । आ॒ज॒ऽमी॒ळ्हास॑ः । अ॒ग्म॒न् ॥६

नु । नः । रयिम् । पुरुऽवीरम् । बृहन्तम् । दस्रा । मिमाथाम् । उभयेषु । अस्मे इति ।

नरः । यत् । वाम् । अश्विना । स्तोमम् । आवन् । सधऽस्तुतिम् । आजऽमीळ्हासः । अग्मन् ॥६

“नु क्षिप्रं "नः अस्माकं “रयिं धनं “पुरुवीरं बहुपुत्रोपेतं "बृहन्तं महान्तं हे “दस्रा अश्विनौ “मिमाथां कुरुतम् । “उभयेषु पुरुमीळ्हाजमीळ्हेषु “अस्मे अस्मासु “यत् यदा “नरः नेतार ऋत्विजः पुरुमीळ्हसंबन्धिनः “वां युवयोः “स्तोमं स्तोत्रम् “आवन् अगमन् प्राप्ताः । तथा “सधस्तुतिं सहस्तुतिम् “आजमीळ्हासः अजमीळ्हसंबन्धिनोऽपि तैः सह “अग्मन् अगमन् ॥

इ॒हेह॒ यद्वां॑ सम॒ना प॑पृ॒क्षे सेयम॒स्मे सु॑म॒तिर्वा॑जरत्ना ।

उ॒रु॒ष्यतं॑ जरि॒तारं॑ यु॒वं ह॑ श्रि॒तः कामो॑ नासत्या युव॒द्रिक् ॥७

इ॒हऽइ॑ह । यत् । वा॒म् । स॒म॒ना । प॒पृ॒क्षे । सा । इ॒यम् । अ॒स्मे इति॑ । सु॒ऽम॒तिः । वा॒ज॒ऽर॒त्ना॒ ।

उ॒रु॒ष्यत॑म् । ज॒रि॒तार॑म् । यु॒वम् । ह॒ । श्रि॒तः । काम॑ः । ना॒स॒त्या॒ । यु॒व॒द्रिक् ॥७

इहऽइह । यत् । वाम् । समना । पपृक्षे । सा । इयम् । अस्मे इति । सुऽमतिः । वाजऽरत्ना ।

उरुष्यतम् । जरितारम् । युवम् । ह । श्रितः । कामः । नासत्या । युवद्रिक् ॥७

'इहेह' इति गतम् ॥ ॥ २० ॥

# ऋग्वेदः सूक्तं ४.४५



दे. अश्विनौ। जगती, ७ त्रिष्टुप्

---

एष स्य भानुरुदियर्ति युज्यते रथः परिज्मा दिवो अस्य सानवि ।
पृक्षासो अस्मिन्मिथुना अधि त्रयो दृतिस्तुरीयो मधुनो वि रप्शते ॥१॥
उद्वां पृक्षासो मधुमन्त ईरते रथा अश्वास उषसो व्युष्टिषु ।
अपोर्णुवन्तस्तम आ परीवृतं स्वर्ण शुक्रं तन्वन्त आ रजः ॥२॥
मध्वः पिबतं मधुपेभिरासभिरुत प्रियं मधुने युञ्जाथां रथम् ।
आ वर्तनिं मधुना जिन्वथस्पथो दृतिं वहेथे मधुमन्तमश्विना ॥३॥
हंसासो ये वां मधुमन्तो अस्रिधो हिरण्यपर्णा उहुव उषर्बुधः ।
उदप्रुतो मन्दिनो मन्दिनिस्पृशो मध्वो न मक्षः सवनानि गच्छथः ॥४॥
स्वध्वरासो मधुमन्तो अग्नय उस्रा जरन्ते प्रति वस्तोरश्विना ।
यन्निक्तहस्तस्तरणिर्विचक्षणः सोमं सुषाव मधुमन्तमद्रिभिः ॥५॥
आकेनिपासो अहभिर्दविध्वतः स्वर्ण शुक्रं तन्वन्त आ रजः ।

सूरश्चिदश्वान्युयुजान ईयते विश्वाँ अनु स्वधया चेतथस्पथः ॥६॥

प्र वामवोचमश्विना धियंधा रथः स्वश्वो अजरो यो अस्ति ।

येन सद्यः परि रजांसि याथो हविष्मन्तं तरणिं भोजमच्छ ॥७॥

**सायणभाष्यम्**

'एष स्य भानुः' इति सप्तर्चं त्रयोदशं सूक्तम् । आदितः षट् जगत्यः सप्तमी त्रिष्टुप् । मण्डलद्रष्टा वामदेव ऋषिः । अश्विनौ देवता । एष स्य त्रिष्टुबन्तम् ' इति ह्यनुक्रान्तम् । प्रातरनुवाकाश्विनशस्त्रयोर्जागते छन्दसीदं शस्यम् । तथा च सूत्रितम्- अबोध्यग्निर्ज्म एष स्य भानुः' ( आश्व. श्रौ. ४. १५) इति ॥

ए॒ष स्य भा॒नुरुदि॑यर्ति यु॒ज्यते॒ रथ॒: परि॑ज्मा दि॒वो अ॒स्य सान॑वि ।

पृ॒क्षासो॑ अस्मिन्मिथु॒ना अधि॒ त्रयो॒ दृति॑स्तु॒रीयो॒ मधु॑नो॒ वि र॑प्शते ॥१

ए॒षः । स्यः । भा॒नुः । उत् । इ॒य॒र्ति॒ । यु॒ज्यते॑ । रथ॑ः । परि॑ऽज्मा । दि॒वः । अ॒स्य । सान॑वि ।

पृ॒क्षास॑ः । अ॒स्मि॒न् । मि॒थु॒नाः । अधि॑ । त्रय॑ः । दृति॑ः । तु॒रीय॑ः । मधु॑नः । वि । र॒प्श॒ते॒ ॥१

एषः । स्यः । भानुः । उत् । इयर्ति । युज्यते । रथः । परिऽज्मा । दिवः । अस्य । सानवि ।

पृक्षासः । अस्मिन् । मिथुनाः । अधि । त्रयः । दृतिः । तुरीयः । मधुनः । वि । रप्शते ॥१

“एषः पुरतो दृश्यमानः "स्यः सः "भानुः दीप्तिमानादित्यः "उदियर्ति ऊर्ध्वं गच्छति । पुरस्तात् “रथः च युवयोः संबन्धी "परिज्मा परितो गन्ता "अस्य "दिवः द्योतमानस्यादित्यस्य "सानविः सानौ समुच्छ्रितप्रदेशे उदियर्तीति विरप्शते इति वा संबन्धनीयम् । "अस्मिन् रथे “अधि उपरिभागे “मिथुनाः मिथुनीभूताः “त्रयः त्रिविधाः “पृक्षासः अन्नानि । त्रेधा विहितं चान्नम् । इदमन्नमशनं पानं खादश्च ' इति हि श्रुतम् । त्रिष्वपि पदार्थेषु मिथुनशब्दः तैत्तिरीयेषु दृश्यते-- माता पिता पुत्रस्तदेव तन्मिथुनम्' इति । "दृतिस्तुरीयः । रसद्रव्याधारः पदार्थश्चर्ममयो दृतिरित्युच्यते । "मधुनः सोमरसस्य संबन्धी मधुपूर्णश्चतुर्थः “वि “रप्शते विविधं राजते ॥

उद्वां॑ पृ॒क्षासो॒ मधु॑मंत ईरते॒ रथा॒ अश्वा॑स उ॒षसो॒ व्यु॑ष्टिषु ।

अ॒पो॒र्णु॒वंत॒स्तम॒ आ परी॑वृतं॒ स्व१॒॑र्ण शु॒क्रं त॒न्वंत॒ आ रज॑ः ॥२

उत् । वा॒म् । पृ॒क्षास॑ः । मधु॑ऽमन्तः । ई॒र॒ते॒ । रथा॑ः । अश्वा॑सः । उ॒षस॑ः । वि॒ऽउ॑ष्टिषु ।

अ॒प॒ऽऊ॒र्णु॒वन्तः॑ । तमः॑ । आ । परिं॑ऽवृतम् । स्वः॑ । न । शु॒क्रम् । त॒न्वन्तः॑ । आ । रजः॑ ॥२

उत् । वाम् । पृक्षासः । मधुऽमन्तः । ईरते । रथाः । अश्वासः । उषसः । विऽउष्टिषु ।

अपऽऊर्णुवन्तः । तमः । आ । परिऽवृतम् । स्वः । न । शुक्रम् । तन्वन्तः । आ । रजः ॥२

"पृक्षासः पृक्षास्त्रिविधान्नवन्तः "मधुमन्तः सोमरसोपेताः "अश्वासः अश्वयुक्ताः “वां युवयोः “रथाः । यद्वा । मधुमन्तः पृक्षा रथा अश्वासोऽश्वाः “उषसो “व्युष्टिषु व्युच्छनेषु सत्सु "उत् "ईरते उन्मुखं गच्छन्ति । किं कुर्वन्तः । "परीवृतं परितो व्याप्तं “तमः "आ सर्वतः "अपोर्णुवन्तः अपाकुर्वन्तः “स्वर्न आदित्य इव “शुक्रं दीप्तं "रजः तेजश्च “तन्वन्तः । आकारश्चार्थे । यद्वा । रजोऽन्तरिक्षं शुक्रं दीप्तं तन्वन्तः ॥

मध्वः॑ पिबतं मधु॒पेभि॑रा॒सभि॑रु॒त प्रि॒यं मधु॑ने युंजाथा॒ं रथ॑ं ।

आ व॑र्त॒निं॑ मधु॑ना जिन्वथस्प॒थो दृतिं॑ वहेथे॒ मधु॑मंतमश्विना ॥३

मध्वः॑ । पि॒ब॒त॒म् । म॒धु॒ऽपेभिः॑ । आ॒सऽभिः॑ । उ॒त । प्रि॒यम् । मधु॑ने । यु॒ञ्जा॒था॒म् । रथ॑म् ।

आ । व॒र्त॒निम् । मधु॑ना । जि॒न्व॒थ॒ः । प॒थः । दृति॑म् । व॒हे॒थे॒ इति॑ । मधु॑ऽमन्तम् । अ॒श्वि॒ना॒ ॥३

मध्वः । पिबतम् । मधुऽपेभिः । आसऽभिः । उत । प्रियम् । मधुने । युञ्जाथाम् । रथम् ।

आ । वर्तनिम् । मधुना । जिन्वथः । पथः । दृतिम् । वहेथे इति । मधुऽमन्तम् । अश्विना ॥३

“मध्वः मधुरं सोमरसं “"मधुपेभिः सोमपानार्हैः “आसभिः आस्यैः "पिबतम् । "उत अपि च “प्रियं "रथं "मधुने मधुलाभाय "युञ्जाथाम् अश्वैर्युक्तं कुरुतम् । "वर्तनिं यजमानगृहम् "आ गच्छतमिति शेषः । "पथः गमनमार्गान् "मधुना “जिन्वथः प्रीणयतम् । यद्वैकं वाक्यम् । पथो वर्तनिमाकाशं जिन्वथः । “दृतिं "मधुमन्तं हे "अश्विना “वहेथे धारयथः ॥

ह॒ंसासो॒ ये वा॒ं मधु॑मंतो अ॒स्रिधो॒ हिर॑ण्यपर्णा उ॒हुव॑ उष॒र्बुधः॑ ।

उ॒द॒प्रुतो॑ म॒ंदिनो॑ मंदिनि॒स्पृशो॒ मध्वो॒ न मक्ष॒ः सव॑नानि गच्छथः ॥४

ह॒ंसासः॑ । ये । वा॒म् । मधु॑ऽमन्तः । अ॒स्रिधः॑ । हिर॑ण्यऽपर्णाः । उ॒हुवः॑ । उ॒ष॒ःऽबुधः॑ ।

उ॒द॒ऽप्रुतः॑ । म॒न्दिनः॑ । म॒न्दि॒ऽनि॒स्पृशः॑ । मध्वः॑ । न । मक्षः॑ । सव॑नानि । ग॒च्छ॒थ॒ः ॥४

हंसासः । ये । वाम् । मधुऽमन्तः । अस्रिधः । हिरण्यऽपर्णाः । उहुवः । उषःऽबुधः ।

उदऽप्रुतः । मन्दिनः । मन्दिऽनिस्पृशः । मध्वः । न । मक्षः । सवनानि । गच्छथः ॥४

"हंसासः अध्वनि शीघ्रं गन्तारः "मधुमन्तः माधुर्योपेताः "अस्रिधः अद्रोग्धारः “हिरण्यपर्णाः हितरमणीयपर्णाः “उहुवः वोढारः "उषर्बुधः उषसि बुध्यमानाः “उदप्रुतः उदकस्य प्लावयितारः “मन्दिनः हर्षयितारः “मन्दिनिस्पृशः मन्दिनं सोमं स्पृशन्तः । इत्थंलक्षणाः अश्वा “ये सन्ति तैरश्वैः “मध्वो “न मध्विव "मक्षः मक्षिकाः "सवनानि अस्मदीयानि गच्छथः ॥

स्व॒ध्व॒रासो॒ मधु॑मंतो अ॒ग्नय॑ उ॒स्रा ज॑रंते॒ प्रति॒ वस्तो॑र॒श्विना॑ ।

यन्नि॒क्तह॑स्तस्त॒रणि॑र्विचक्ष॒णः सोम॑ सु॒षाव॒ मधु॑मंत॒मद्रि॑भिः ॥५

सु॒ऽअ॒ध्व॒रासः॑ । मधु॑ऽमन्तः । अ॒ग्नयः॑ । उ॒स्रा । ज॒र॒न्ते॒ । प्रति॑ । वस्तोः॑ । अ॒श्विना॑ ।

यत् । नि॒क्तऽह॑स्तः । त॒रणिः॑ । वि॒ऽच॒क्ष॒णः । सोम॑म् । सु॒साव॑ । मधु॑ऽमन्तम् । अद्रि॑ऽभिः ॥५

सुऽअध्वरासः । मधुऽमन्तः । अग्नयः । उस्रा । जरन्ते । प्रति । वस्तोः । अश्विना ।

यत् । निक्तऽहस्तः । तरणिः । विऽचक्षणः । सोमम् । सुसाव । मधुऽमन्तम् । अद्रिऽभिः ॥५

“स्वध्वरासः शोभनयागसाधनाः "मधुमन्तः होतव्यसोमवन्तः "अग्नयः गार्हपत्यादयः "उस्रा सह निवसन्तावश्विनौ "प्रति “वस्तोः अन्वहमुषःकाले "जरन्ते स्तुवन्ति । "यत् यदा "निक्तहस्तः समन्त्रेणोदकेन शोधितहस्तः “तरणिः कर्मणस्तारयिता "विचक्षणः विविधं द्रष्टा अध्वर्युः "सोमं "मधुमन्तम् "अद्रिभिः ग्रावभिः "सुषाव अभिषुतवान् । तदा तेऽग्नयः स्तुवन्ति तस्मादागच्छतमित्यर्थः ।

आ॒के॒नि॒पासो॒ अह॑भि॒र्दवि॑ध्वत॒ः स्व१॒॑र्ण शु॒क्रं त॒न्वंत॒ आ रजः॑ ।

सूर॑श्चि॒दश्वा॑न्युयुजा॒न ईय॑ते॒ विश्वाँ॒ अनु॑ स्व॒धया॑ चेतथस्प॒थः ॥६

आ॒के॒ऽनि॒पासः॑ । अह॑ऽभिः । दवि॑ध्वतः । स्वः॑ । न । शु॒क्रम् । त॒न्वन्तः॑ । आ । रजः॑ ।

सूरः॑ । चि॒त् । अश्वा॑न् । यु॒यु॒जा॒नः । ई॒य॒ते॒ । विश्वा॑न् । अनु॑ । स्व॒धया॑ । चे॒त॒थ॒ः । प॒थः ॥६

आकेऽनिपासः । अहऽभिः । दविध्वतः । स्वः । न । शुक्रम् । तन्वन्तः । आ । रजः ।

सूरः । चित् । अश्वान् । युयुजानः । ईयते । विश्वान् । अनु । स्वधया । चेतथः । पथः ॥६

“आकेनिपासः । आकेऽन्तिके निपतन्तीत्याकेनिपा रश्मयः । ते च “अहभिः अहोभिः “दविध्वतः कम्पयन्तो ध्वंसयन्तः वा तमांसि। "स्वर्न आदित्य इव "शुक्रं दीप्तं “रजः “आ “तन्वन्तः भवन्त्यश्विनोरश्वाः "सूरश्चित् सूर्यश्च "अश्वान्युयुजानः योजयन् “ईयते गच्छति ।

हे अश्विनौ युवां "विश्वान् "पथः आगमनमार्गाननुक्रमेण 'स्वधया अन्नेन सोमलक्षणेन "चेतथः.चेतयथः प्रज्ञापयथः ॥

प्र वा॑मवोचमश्विना धियं॒धा रथ॒: स्वश्वो॑ अ॒जरो॒ यो अस्ति॑ ।

येन॑ स॒द्यः परि॒ रजां॑सि या॒थो ह॒विष्मं॑तं त॒रणिं॑ भो॒जमच्छ॑ ॥७

प्र । वा॒म् । अ॒वो॒च॒म् । अ॒श्वि॒ना॒ । धि॒य॒म्ऽधाः । रथः॑ । सु॒ऽअश्वः॑ । अ॒जरः॑ । यः । अस्ति॑ ।

येन॑ । स॒द्यः । परि॑ । रजां॑सि । या॒थः । ह॒विष्मं॑न्तम् । त॒रणिं॑म् । भो॒जम् । अच्छ॑ ॥७

प्र । वाम् । अवोचम् । अश्विना । धियम्ऽधाः । रथः । सुऽअश्वः । अजरः । यः । अस्ति ।

येन । सद्यः । परि । रजांसि । याथः । हविष्मन्तम् । तरणिम् । भोजम् । अच्छ ॥७

“धियंधाः कर्मणां धारकोऽहम् हे "अश्विना “वां “प्र “अवोचं प्रब्रवीमि स्तौमि । "स्वश्व: “अजरः अजीर्णो नित्यनूतनोऽजरयिता वा "रथः "यः अस्ति । "येन रथेन "सद्यः तदानीमेव “रजांसि लोकान् "परि "याथः । तेन रथेन "हविष्मन्तं सोमादिहविर्युक्तं "तरणिं तारकं शीघ्रगामिनं “भोजं भोजयितारमस्मद्यागम् "अच्छ प्राप्तुम्। आगच्छतमिति शेषः ॥ ॥ २१ ॥ ॥ ४ ॥

# ऋग्वेदः सूक्तं ४.४६


वामदेवो गौतमः, १- ३ इन्द्रो वा।

दे. इन्द्रवायू, १ वायुः। गायत्री

0:00 / 0:00

*द्विदेवत्यसोमभक्षणम्*



*द्विदेवत्यग्रह१*



*वराहमुखे सरस्वती, खजुराहो*

अग्रं पिबा मधूनां सुतं वायो दिविष्टिषु ।

त्वं हि पूर्वपा असि ॥१॥

शतेना नो अभिष्टिभिर्नियुत्वाँ इन्द्रसारथिः ।

वायो सुतस्य तृम्पतम् ॥२॥

आ वां सहस्रं हरय इन्द्रवायू अभि प्रयः ।

वहन्तु सोमपीतये ॥३॥

रथं हिरण्यवन्धुरमिन्द्रवायू स्वध्वरम् ।

आ हि स्थाथो दिविस्पृशम् ॥४॥

रथेन पृथुपाजसा दाश्वांसमुप गच्छतम् ।

इन्द्रवायू इहा गतम् ॥५॥

इन्द्रवायू अयं सुतस्तं देवेभिः सजोषसा ।

पिबतं दाशुषो गृहे ॥६॥

इह प्रयाणमस्तु वामिन्द्रवायू विमोचनम् ।

इह वां सोमपीतये ॥७॥

**सायणभाष्यम्**

पञ्चमेऽनुवाके त्रयोदश सूक्तानि । तत्र 'अग्रं पिब ' इति सप्तर्चं प्रथमं सूक्तं वामदेवस्यार्षं गायत्रम् । कृत्स्नम् इन्द्रवायुदेवताकम् आद्या केवलवायव्या । तथा चानुक्रान्तम् --'अग्रं वायव्याद्यैन्द्रवायवं तु गायत्रम्' इति । सूक्तविनियोगो लैङ्गिकः । आद्ये द्वे ऐन्द्रवायवग्रहस्य याज्ये । तथा च सूत्रितम् - ' अग्रं पिबा मधूनामिति याज्ये अनवानम् ' ( आश्व. श्रौ. ५.५) इति ।

अग्रं॑ पिबा॒ मधू॑नां सु॒तं वा॑यो॒ दिवि॑ष्टिषु ।

त्वं हि पू॑र्व॒पा असि॑ ॥१

अग्र॑म् । पि॒ब॒ । मधू॑नाम् । सु॒तम् । वा॒यो॒ इति॑ । दिवि॑ष्टिषु ।

त्वम् । हि । पू॒र्व॒ऽपाः । असि॑ ॥१

अग्रम् । पिब । मधूनाम् । सुतम् । वायो इति । दिविष्टिषु ।

त्वम् । हि । पूर्वऽपाः । असि ॥१

हे "वायो त्वम् “अग्रम् इन्द्रादिभ्यः पूर्वं “मधूनां मधुररसानां सोमानां संबन्धिनं "सुतम् अभिषुतं रसं “पिब । कुत्रेति तदुच्यते । “दिविष्टिषु दिवः स्वर्गस्य प्रापकेषु यज्ञेषु ।यद्वा । अस्माकं दिवः स्वर्गस्यैषणेषु निमित्तेषु । “त्वं “हि त्वं खलु “पूर्वपा “असि । हिशब्दः 'देव दधिषे पूर्वपेयम्' (ऋ. सं. ७, ९२. १ ) इत्यादिमन्त्रान्तरप्रसिद्धिद्योतनार्थः । वायोरग्रपानं देवा वै सोमस्य राज्ञोऽग्रपेये न समपादयन्नहं प्रथमः पिबेयम्' ( ऐ. ब्रा. २. २५) इत्यादिब्राह्मणे स्पष्टमाम्नातम् । तत्र हि वायुराजिं प्रथमं धावित्वाग्रपानं लब्धवान् ॥

श॒तेना॑ नो अ॒भिष्टि॑भिर्नि॒युत्वाँ॒ इन्द्र॑सारथिः ।

वायो॑ सु॒तस्य॑ तृम्पतम् ॥२

श॒तेन॑ । न॒: । अ॒भिष्टि॑ऽभिः । नि॒युत्वा॑न् । इन्द्र॑ऽसारथिः ।

वायो॒ इति॑ । सु॒तस्य॑ । तृ॒म्प॒त॒म् ॥२

शतेन । नः । अभिष्टिऽभिः । नियुत्वान् । इन्द्रऽसारथिः ।

वायो इति । सुतस्य । तृम्पतम् ॥२

हे “वायो “नियुत्वान् नियुद्भिस्तद्वान् “इन्द्रसारथिः इन्द्रसहायः सन् त्वं “शतेन अपरिमितैः “अभिष्टिभिः अभित एषणीयैः कामैर्निमित्तभूतैरागच्छेति शेषः । आगत्य च “सुतस्य सुतमभिषुतं “नः अस्मदीयं सोमं “तृम्पतं पिबतं त्वमिन्द्रश्च । इन्द्रस्य साहित्यं ब्राह्मणे एवोक्तं -- तत्तुरीयभागिन्द्रोऽभवत्त्रिभाग्वायुः' इति, 'तुरीये हैव संग्रहीतारो वदन्तेऽमुनैवानूकाशेन यदद इन्द्रः सारथिरिव भूत्वोदजयत्' ( ऐ. ब्रा. २. २५ ) इति वा ॥

आ वां॑ स॒हस्रं॒ हर॑य॒ इन्द्र॑वायू अ॒भि प्रय॑ः ।

वह॑न्तु॒ सोम॑पीतये ॥३

आ । वा॒म् । स॒हस्र॑म् । हर॑यः । इन्द्र॑वायू॒ इति॑ । अ॒भि । प्रय॑ः ।

वह॑न्तु । सोम॑ऽपीतये ॥३

आ । वाम् । सहस्रम् । हरयः । इन्द्रवायू इति । अभि । प्रयः ।

वहन्तु । सोमऽपीतये ॥३

हे “इन्द्रवायू “वां युवां “सहस्रं “हरयः सहस्रसंख्याका अश्वाः “प्रयः अन्नं प्रति त्वरयन्तः सन्ति । अत्र हरिशब्दोऽश्वसामान्यवचनः । ते “सोमपीतये “आ “वहन्तु ॥

रथं॒ हिर॑ण्यवन्धुर॒मिन्द्र॑वायू स्वध्व॒रम् ।

आ हि स्थाथो॑ दिवि॒स्पृश॑म् ॥४

रथ॑म् । हिर॑ण्यऽवन्धुरम् । इन्द्र॑वायू॒ इति॑ । सु॒ऽअ॒ध्व॒रम् ।

आ । हि । स्थाथः॑ । दि॒वि॒ऽस्पृश॑म् ॥४

रथम् । हिरण्यऽवन्धुरम् । इन्द्रवायू इति । सुऽअध्वरम् ।

आ । हि । स्थाथः । दिविऽस्पृशम् ॥४

हे “इन्द्रवायू हिरण्यवन्धुरं हिरण्मयनिवासीधारकाष्ठोपेतं “दिविस्पृशं द्युलोकम्पर्शिनं “स्वध्वरं शोभनाध्वरवन्तं “रथम् “आ “स्थाथः “हि आस्थितौ खलु । यस्मादेवं तस्मादागच्छतमित्यर्थः । स्वध्वरं प्रत्यास्थाय इति वा व्याख्येयम् ॥

' रथेन पृथु ' इत्यादिकस्तृचो दशरात्रे पञ्चमेऽहनि प्रउगशस्त्रे ऐन्द्रवायवो द्वितीयः । सूत्रितं च - ' रथेन पृथुपाजसा बहवः सूरचक्षसः' ( आश्व. श्रौ ७. १२ ) इति ॥

रथे॑न पृथु॒पाज॑सा दा॒श्वांस॒मुप॑ गच्छतम् ।

इन्द्र॑वायू इ॒हा ग॑तम् ॥५

रथे॑न । पृ॒थु॒ऽपाज॑सा । दा॒श्वांस॑म् । उप॑ । ग॒च्छ॒त॒म् ।

इन्द्र॑वायू॒ इति॑ । इ॒ह । आ । ग॒त॒म् ॥५

रथेन । पृथुऽपाजसा । दाश्वांसम् । उप । गच्छतम् ।

इन्द्रवायू इति । इह । आ । गतम् ॥५

हे “इन्द्रवायू “पृथुराजसा प्रभूतबलेन “रथेन “दाश्वांसं दातारं यजमानम् “उप “गच्छतम् । तदर्थम् “इह अस्मिन् यज्ञे “आ “गतम् आगच्छतम् ॥

इन्द्र॑वायू अ॒यं सु॒तस्तं दे॒वेभि॑ः स॒जोष॑सा ।

पिब॑तं दा॒शुषो॑ गृ॒हे ॥६

इन्द्र॑वायू॒ इति॑ । अ॒यम् । सु॒तः । तम् । दे॒वेभिः॑ । स॒ऽजोष॑सा ।

पिब॑तम् । दा॒शुषः॑ । गृ॒हे ॥६

इन्द्रवायू इति । अयम् । सुतः । तम् । देवेभिः । सऽजोषसा ।

पिबतम् । दाशुषः । गृहे ॥६

हे "इन्द्रवायू "अयं सोमः “सुतः अभिषुतः । “तं सोमं "देवेभिः देवैः “सजोषसा समानप्रीतौ “दाशुषः हविर्दातुः "गृहे यागशालायां “पिबतम् ॥

इ॒ह प्र॒याण॑मस्तु वा॒मिन्द्र॑वायू वि॒मोच॑नम् ।

इ॒ह वां॒ सोम॑पीतये ॥७

इ॒ह । प्र॒ऽयान॑म् । अ॒स्तु । वा॒म् । इन्द्र॑वायू॒ इति॑ । वि॒ऽमोच॑नम् ।

इ॒ह । वा॒म् । सोम॑ऽपीतये ॥७

इह । प्रऽयानम् । अस्तु । वाम् । इन्द्रवायू इति । विऽमोचनम् ।

इह । वाम् । सोमऽपीतये ॥७

हे “इन्द्रवायू "वां युवयोः “इह अस्मिन् यज्ञे “प्रयाणं गमनम् “अस्तु । "इह अस्मिन्नेव यज्ञे "वाँ “सोमपीतये "विमोचनम् अश्वानाम् अस्तु । पर्यवसानत एकार्थत्वेऽप्यादरार्थत्वादविरोधः ॥ ॥ २२ ॥

**टिप्पणी**

इन्द्रवायूरुपरि टिप्पणी (http://puranastudy.freeoda.com/pur_index3/indravayu.htm)



*द्विदेवत्यग्रह१*



*वराहमुखे सरस्वती, खजुराहो*

वायो शुक्रो अयामि ते मध्वो अग्रं दिविष्टिषु ।

आ याहि सोमपीतये स्पार्हो देव नियुत्वता ॥१॥

इन्द्रश्च वायवेषां सोमानां पीतिमर्हथः ।

युवां हि यन्तीन्दवो निम्नमापो न सध्र्यक् ॥२॥

वायविन्द्रश्च शुष्मिणा सरथं शवसस्पती ।

नियुत्वन्ता न ऊतय आ यातं सोमपीतये ॥३॥

या वां सन्ति पुरुस्पृहो नियुतो दाशुषे नरा ।

अस्मे ता यज्ञवाहसेन्द्रवायू नि यच्छतम् ॥४॥

**सायणभाष्यम्**

‘ वायो शुक्रः' इति चतुर्ऋचं द्वितीयं सूक्तमानुष्टुभं वामदेवस्यार्षम् ऐन्द्रवायवम् । आद्या केवलवायव्या । अत्रानुक्रमणिका - वायो चतुष्कमाद्या वायव्यानुष्टुभं तु ' इति । सूक्तविनियोगो लैङ्गिकः । आद्या दशरात्रे चतुर्थेऽहनि प्रउगशस्त्रे वायच्यतृचे प्रथमा । ‘ वायो शुक्रो अयामि ते विहि होत्रा अवीताः ' ( आश्व. श्रौ. ७. ११ ) इति सूत्रितम् ॥

वायों शु॒क्रो अ॑यामि ते॒ मध्वो॒ अग्रं॒ दिवि॑ष्टिषु ।

आ या॑हि॒ सोम॑पीतये स्पा॒र्हो दे॑व नि॒युत्व॑ता ॥१

वायो॒ इति॑ । शु॒क्रः । अ॒या॒मि॒ । ते॒ । मध्वः॑ । अग्र॑म् । दिवि॑ष्टिषु ।

आ । या॒हि॒ । सोम॑ऽपीतये । स्पा॒र्हः । दे॒व॒ । नि॒युत्व॑ता ॥१

वायो इति । शुक्रः । अयामि । ते । मध्वः । अग्रम् । दिविष्टिषु ।

आ । याहि । सोमऽपीतये । स्पार्हः । देव । नियुत्वता ॥१

हे "वायो “ते तुभ्यं “शुक्रः व्रतचर्यादिना दीप्तोऽहं “मध्वः मधुरं सोमरसम् ॥ कर्मणि षष्ठी ॥ “अग्रम् इतरेभ्यः पूर्वम् “अयामि आययामि॥ अयतिरन्तर्भावितण्यर्थः ॥ किमर्थम् । “दिविष्टिषु दिवो द्युलोकस्यैषणेषु सत्सु हे “देव वायो "स्पार्हः स्पृहणीयस्त्वं “नियुत्वता । नियुत् वायोः प्रतिनियतोऽश्वः । तेन साधनेन “आ “याहि “सोमपीतये सोमपानाय ॥

‘ इन्द्रश्च ' इत्यादिस्तृचो दशरात्रे चतुर्थेऽहन्यैन्द्रवायवो द्वितीयः । सूत्रितं च - ‘ इन्द्रश्च वायवेषां सोमानामा चिकितान सुक्रतू' आ. श्रौ. ७. ११ ) इति ॥

इन्द्र॑श्च वायवेषां॒ सोमा॑नां पी॒तिम॑र्हथः ।

यु॒वां हि यन्तीन्द॑वो नि॒म्नमापो॒ न स॒ध्र्य॑क् ॥२

इन्द्रः॑ । च॒ । वा॒यो॒ इति॑ । ए॒षा॒म् । सोमा॑नाम् । पी॒तिम् । अ॒र्ह॒थ॒ः ।

यु॒वाम् । हि । यन्ति॑ । इन्द॑वः । नि॒म्नम् । आपः॑ । न । स॒ध्र्य॑क् ॥२

इन्द्रः । च । वायो इति । एषाम् । सोमानाम् । पीतिम् । अर्हथः ।

युवाम् । हि । यन्ति । इन्दवः । निम्नम् । आपः । न । सध्र्यक् ॥२

हे "वायो त्वम् “इन्द्रश्च “एषां गृहीतानां “सोमानां “पीतिं पानम् “अर्हथः । “युवां “हि खलु “इन्दवः सोमाः "यन्ति प्राप्नुवन्ति । “निम्नं खातप्रदेशम् “आपो “न “सध्र्यक् उदकानि यथा सहैव गच्छन्ति तद्वत् सर्वे सोमा युवां हि यन्ति ।

वायु॒विन्द्र॑श्च शु॒ष्मिणा॑ स॒रथं॑ शवसस्पती ।

नि॒युत्व॑न्ता न ऊ॒तय॒ आ या॑तं॒ सोम॑पीतये ॥३

वायो॒ इति॑ । इन्द्रः॑ । च॒ । शु॒ष्मिणा॑ । स॒ऽरथ॑म् । श॒व॒स॒ः । प॒ती॒ इति॑ ।

नि॒युत्व॑न्ता । न॒ः । ऊ॒तये॑ । आ । या॒त॒म् । सोम॑ऽपीतये ॥३

वायो इति । इन्द्रः । च । शुष्मिणा । सऽरथम् । शवसः । पती इति ।

नियुत्वन्ता । नः । ऊतये । आ । यातम् । सोमऽपीतये ॥३

हे "वायो त्वम् “इन्द्रश्च हे “शवसस्पती बलस्य पती “शुष्मिणा बलवन्तौ “नियुत्वन्ता नियुत्संज्ञकाश्ववन्तौ युवां "सरथं समानमेव रथमारुह्येति शेषः। “न “ऊतये रक्षणाय “सोमपीतये सोमपानायात्र “आ "यातम् आगच्छतम् । यद्वा । सरथमधितिष्ठतम् आरुह्य चायातमिति च वाक्यद्वयम् ॥

या वां॒ सन्ति॑ पुरु॒स्पृहो॑ नि॒युतो॑ दा॒शुषे॑ नरा ।

अ॒स्मे ता य॑ज्ञवाह॒सेन्द्र॑वायू॒ नि य॑च्छतम् ॥४

याः । वा॒म् । सन्ति॑ । पु॒रु॒ऽस्पृहः॑ । नि॒ऽयुतः॑ । दा॒शुषे॑ । न॒रा॒ ।

अ॒स्मे इति॑ । ताः । य॒ज्ञ॒ऽवा॒ह॒सा॒ । इन्द्र॑वायू॒ इति॑ । नि । य॒च्छ॒त॒म् ॥४

याः । वाम् । सन्ति । पुरुऽस्पृहः । निऽयुतः । दाशुषे । नरा ।

अस्मे इति । ताः । यज्ञऽवाहसा । इन्द्रवायू इति । नि । यच्छतम् ॥४

हे “नरा नेतारौ हे “यज्ञवाहसा यज्ञवाहकौ 'इन्द्रवायू “याः “पुरुस्पृहः बहुभिः स्पृहणीयाः “नियुतः “सन्ति “अस्मे अस्मभ्यं “दाशुषे हविर्दत्तवते यजमानाय मदर्थं “ताः नियुतः “नि “यच्छतम् ॥ ॥ २३ ॥

# ऋग्वेदः सूक्तं ४.४८



वामदेवो गौतमः ।

दे. वायुः।। अनुष्टुप्

विहि होत्रा अवीता विपो न रायो अर्यः ।

वायवा चन्द्रेण रथेन याहि सुतस्य पीतये ॥१॥

निर्युवाणो अशस्तीर्नियुत्वाँ इन्द्रसारथिः ।

वायवा चन्द्रेण रथेन याहि सुतस्य पीतये ॥२॥

अनु कृष्णे वसुधिती येमाते विश्वपेशसा ।

वायवा चन्द्रेण रथेन याहि सुतस्य पीतये ॥३॥

वहन्तु त्वा मनोयुजो युक्तासो नवतिर्नव ।

वायवा चन्द्रेण रथेन याहि सुतस्य पीतये ॥४॥

वायो शतं हरीणां युवस्व पोष्याणाम् ।

उत वा ते सहस्रिणो रथ आ यातु पाजसा ॥५॥

**सायणभाष्यम्**

‘ विहि होत्राः' इति पञ्चर्चं तृतीयं सूक्तं वामदेव्यं वायव्यम् । अत्रानुक्रमणिका---' विहि पञ्च वायव्यम्' इति । सूक्तविनियोगो लैङ्गिकः । आद्या दशरात्रे चतुर्थेऽहनि प्रउगशस्त्रे वायव्यतृचस्य द्वितीया । तथा च सूत्रितं --' विहि होत्रा अवीता वायो शतं हरीणाम्' (आश्व. श्रौ. ७. ११) इति ॥

वि॒हि होत्रा॒ अवी॑ता॒ विपो॒ न रायो॑ अ॒र्यः ।

वाय॒वा च॒न्द्रेण॒ रथे॑न या॒हि सु॒तस्य॑ पी॒तये॑ ॥१

वि॒हि । होत्रा॑ । अवी॑ताः । विपः॑ । न । रायः॑ । अ॒र्यः ।

वायो॒ इति॑ । आ । च॒न्द्रेण॑ । रथे॑न । या॒हि । सु॒तस्य॑ । पी॒तये॑ ॥१

विहि । होत्रा । अवीताः । विपः । न । रायः । अर्यः ।

वायो इति । आ । चन्द्रेण । रथेन । याहि । सुतस्य । पीतये ॥१

हे “वायो “विहि वीहि भक्षय । “होत्राः होमसाधिकाः सोमाहुतीः "अवीताः अन्यैः पूर्वमभक्षिताः “विपो “न शत्रूणां वेपयिता राजेव। किंच “अर्यः स्तोतुर्मम "रायः धनानि । संपादयेति शेषः । हे वायो 'चन्द्रेण आह्लादकेन “रथेन “आ “याहि "सुतस्य सोमस्य पीतये पानाय ।।

नि॒र्यु॒वा॒णो अश॑स्तीर्नि॒युत्वाँ॒ इन्द्र॑सारथिः ।

वाय॒वा च॒न्द्रेण॒ रथे॑न या॒हि सु॒तस्य॑ पी॒तये॑ ॥२

नि॒ःऽयु॒वा॒नः । अश॑स्तीः । नि॒युत्वा॑न् । इन्द्र॑ऽसारथिः ।

वायो॒ इति॑ । आ । च॒न्द्रेण॑ । रथे॑न । या॒हि । सु॒तस्य॑ । पी॒तये॑ ॥२

निःऽयुवानः । अशस्तीः । नियुत्वान् । इन्द्रऽसारथिः ।

वायो इति । आ । चन्द्रेण । रथेन । याहि । सुतस्य । पीतये ॥२

हे "वायो त्वम् “अशस्तीः अभिशस्तीः “निर्युवाणः निःशेषेण नियोजयन् “नियुत्वान् नियुत्संज्ञकाश्ववान् “इन्द्रसारथिः इन्द्रसहायः सन् ”आ “याहि ॥

अनुं कृष्णे वसुंधिती येमातें विश्वपेंशसा ।

वायवा चन्द्रेण रथेंन याहि सुतस्यं पीतयें ॥३

अनुं । कृष्णे इतिं । वसुंधिती इति वसुंऽधिती । येमाते इतिं । विश्वऽपेंशसा ।

वायो इतिं । आ । चन्द्रेणं । रथेंन । याहि । सुतस्यं । पीतयें ॥३

अनु । कृष्णे इति । वसुधिती इति वसुऽधिती । येमाते इति । विश्वऽपेशसा ।

वायो इति । आ । चन्द्रेण । रथेन । याहि । सुतस्य । पीतये ॥३

“कृष्णे कृष्णवर्णे "वसुधिती वसूनां धात्र्यौ "विश्वपेशसा विश्वरूपे द्यावापृथिव्यौ त्वाम् “अनु “येमाते अनुगच्छतः ॥

वहंन्तु त्वा मनोयुजों युक्तासों नवतिर्नवं ।

वायवा चन्द्रेण रथेंन याहि सुतस्यं पीतयें ॥४

वहंन्तु । त्वा । मनःऽयुजः । युक्तासः । नवतिः । नवं ।

वायो इतिं । आ । चन्द्रेणं । रथेंन । याहि । सुतस्यं । पीतयें ॥४

वहन्तु । त्वा । मनःऽयुजः । युक्तासः । नवतिः । नव ।

वायो इति । आ । चन्द्रेण । रथेन । याहि । सुतस्य । पीतये ॥४

हे "वायो “त्वा त्वां “मनोयुजः मनःसमानगतयः "युक्तासः परस्परसंयुक्ताः "नवतिर्नव नवोत्तरनवतिसंख्याका अश्वाः "वहन्तु धारयन्तु ॥

‘वायो शतम्' इति पञ्चमी पूर्वोक्त एवं तृचे तृतीया । सूत्रं पूर्वमेवोक्तम् ॥

वायों शतं हरींणां युवस्व पोष्यांणाम् ।

उ॒त वां॑ ते सह॒स्रिणो॒ रथ॒ आ यां॑तु॒ पाजं॑सा ॥५

वायो॒ इतिं॑ । श॒तम् । हरीं॑णाम् । यु॒वस्वं॑ । पोष्यां॑णाम् ।

उ॒त । वा॒ । ते॒ । स॒ह॒स्रिणः॑ । रथः॑ । आ । या॒तु॒ । पाजं॑सा ॥५

वायो इति । शतम् । हरीणाम् । युवस्व । पोष्याणाम् ।

उत । वा । ते । सहस्रिणः । रथः । आ । यातु । पाजसा ॥५

हे “वायो त्वं “पोष्याणां पोषणीयानां “हरीणां “शतं “युवस्व योजय रथे। “उत “वा अपि च “ते “सहस्रिणः सहस्रसंख्यापूरका अश्वाः । तैर्युक्तः “रथः “पाजसा बलेन “आ “यातु आगच्छतु ॥ ॥ २४ ॥

**टिप्पणी**

रथोपरि पौराणिकसंदर्भाः (http://vedastudy.tripod.com/pur_index25/pva9.htm)

रथोपरि टिप्पणी (http://vedastudy.tripod.com/pur_index25/ratha.htm)

रथोपरि शोधलेखः (https://5da2e8952caa4.site123.me/)

# ऋग्वेदः सूक्तं ४.४९

ऋग्वेदः - मण्डल ४
← सूक्तं ४.४८ सूक्तं ४.४९ सूक्तं ४.५० →
वामदेवो गौतमः

दे. इन्द्राबृहस्पती। गायत्री

इदं वामास्ये हविः प्रियमिन्द्राबृहस्पती ।

उक्थं मदश्च शस्यते ॥१॥

अयं वां परि षिच्यते सोम इन्द्राबृहस्पती ।

चारुर्मदाय पीतये ॥२॥

आ न इन्द्राबृहस्पती गृहमिन्द्रश्च गच्छतम् ।

सोमपा सोमपीतये ॥३॥

अस्मे इन्द्राबृहस्पती रयिं धत्तं शतग्विनम् ।

अश्वावन्तं सहस्रिणम् ॥४॥

इन्द्राबृहस्पती वयं सुते गीर्भिर्हवामहे ।

अस्य सोमस्य पीतये ॥५॥

सोममिन्द्राबृहस्पती पिबतं दाशुषो गृहे ।

मादयेथां तदोकसा ॥६॥

**सायणभाष्यम्**

‘इदं वामास्ये ' इति षड्टचं चतुर्थं सूक्तं वामदेवस्यार्षं गायत्रमैन्द्राबार्हस्पत्यम् । अत्रानुक्रमणिका- इदं वां षळैन्द्राबार्हस्पत्यं गायत्रम्' इति । सूक्तविनियोगो लैङ्गिकः ॥

इ॒दं वा॑मा॒स्ये॑ ह॒विः प्रि॒यमि॑न्द्राबृहस्पती ।

उ॒क्थं मद॑श्च शस्यते ॥१

इ॒दम् । वा॒म् । आ॒स्ये॑ । ह॒विः । प्रि॒यम् । इ॒न्द्रा॒बृ॒ह॒स्प॒ती॒ इति॑ ।

उ॒क्थम् । मदः॑ । च॒ । श॒स्य॒ते॒ ॥१

इदम् । वाम् । आस्ये । हविः । प्रियम् । इन्द्राबृहस्पती इति ।

उक्थम् । मदः । च । शस्यते ॥१

हे "इन्द्राबृहस्पती “वामास्ये “इदं प्रियं “हविः सोमरूपम् । प्रक्षिपामीति शेषः । “उक्थं शस्त्रं “च "मदः मदजनकं “शस्यते ॥

अ॒यं वा॒ं परि॑ षिच्यते॒ सोम॑ इन्द्राबृहस्पती ।

चारु॒र्मदा॑य पी॒तये॑ ॥२

अ॒यम् । वा॒म् । परि॑ । सि॒च्य॒ते॒ । सोमः॑ । इ॒न्द्रा॒बृ॒ह॒स्प॒ती॒ इति॑ ।

चारुः॑ । मदा॑य । पी॒तये॑ ॥२

अयम् । वाम् । परि । सिच्यते । सोमः । इन्द्राबृहस्पती इति ।

चारुः । मदाय । पीतये ॥२

हे “इन्द्राबृहस्पती "वाम् आस्ये “चारुः शोभन: “अयं “सोमः “परि “षिच्यते परितो दीयते । “मदाय हर्षाय “पीतये पानाय च ॥

ऐन्द्राबार्हस्पत्यायामिष्टौ प्रधानस्य ' आ न इन्द्रा' इति तृतीयानुवाक्या उत्तरा याज्या । सूत्रितं च - ‘ आ न इन्द्राबृहस्पती अस्मे इन्द्राबृहस्पती ' ( आश्व. श्रौ. २. ११) इति ।

आ नं इन्द्राबृहस्पती गृहमिन्द्रंश्च गच्छतम् ।

सोमपा सोमंपीतये ॥३

आ । नः । इन्द्राबृहस्पती इतिं । गृहम् । इन्द्रः । च । गच्छतम् ।

सोमऽपा । सोमंऽपीतये ॥३

आ । नः । इन्द्राबृहस्पती इति । गृहम् । इन्द्रः । च । गच्छतम् ।

सोमऽपा । सोमऽपीतये ॥३

हे “इन्द्राबृहस्पती । अथ विविच्योच्यते । हे बृहस्पते त्वं च "इन्द्रश्च “सोमपा सोमपौ युवाँ “सोमपीतये सोमपानाय “नः “गृहम् अस्मद्यागसंबन्धि “आ “गच्छतम् ॥

अस्मे इंन्द्राबृहस्पती रयिं धंत्तं शतग्विनंम् ।

अश्वांवन्तं सहस्रिणंम् ॥४

अस्मे इतिं । इन्द्राबृहस्पती इतिं । रयिम् । धत्तम् । शतऽग्विनंम् ।

अश्वंऽवन्तम् । सहस्रिणंम् ॥४

अस्मे इति । इन्द्राबृहस्पती इति । रयिम् । धत्तम् । शतऽग्विनम् ।

अश्वऽवन्तम् । सहस्रिणम् ॥४

अस्या विनियोगः पूर्वमन्त्रेण सहोक्तः । हे "इन्द्राबृहस्पती “अस्मे अस्मभ्यं “रयिं धनं “धत्तम् । कीदृशं रयिम् । “शतग्विनं शतसंख्याकाभिर्गोभिर्युक्तम् “अश्वावन्तम् अश्ववन्तं “सहस्रिणं सहस्रसंख्यायुक्तम् ॥

इन्द्रा॒बृह॒स्पती॑ व॒यं सु॒ते गी॒र्भिर्ह॑वामहे ।

अ॒स्य सोम॑स्य पी॒तये॑ ॥५

इन्द्रा॒बृह॒स्पती॒ इति॑ । व॒यम् । सु॒ते । गी॒ःऽभिः । ह॒वा॒म॒हे॒ ।

अ॒स्य । सोम॑स्य । पी॒तये॑ ॥५

इन्द्राबृहस्पती इति । वयम् । सुते । गीःऽभिः । हवामहे ।

अस्य । सोमस्य । पीतये ॥५

“सुते सोमेऽभिषुते “गीर्भिः स्तुतिभिः । शिष्टं गतम् ॥

सोम॑मिन्द्राबृहस्पती॒ पिब॑तं दा॒शुषो॑ गृ॒हे ।

मा॒दये॑था॒ं तदो॑कसा ॥६

सोम॑म् । इ॒न्द्रा॒बृ॒ह॒स्प॒ती॒ इति॑ । पिब॑तम् । दा॒शुषः॑ । गृ॒हे ।

मा॒दये॑थाम् । तत्ऽओ॑कसा ॥६

सोमम् । इन्द्राबृहस्पती इति । पिबतम् । दाशुषः । गृहे ।

मादयेथाम् । तत्ऽओकसा ॥६

हे “इन्द्राबृहस्पती युवां “दाशुषः हविर्दातुर्यजमानस्य “गृहे “तदोकसा । तदेव यजमानगृहमोको निवासस्थानं ययोस्तौ । तादृशौ सन्तौ “सोमं “पिबतम् । पीत्वा च "मादयेथाम् इति ॥ ॥२५॥

# ऋग्वेदः सूक्तं ४.५०



दे. बृहस्पतिः, १०-११ इन्द्राबृहस्पती। त्रिष्टुप्, १० जगती

यस्तस्तम्भ सहसा वि ज्मो अन्तान्बृहस्पतिस्त्रिषधस्थो रवेण ।
तं प्रत्नास ऋषयो दीध्यानाः पुरो विप्रा दधिरे मन्द्रजिह्वम् ॥१॥
धुनेतयः सुप्रकेतं मदन्तो बृहस्पते अभि ये नस्ततस्रे ।
पृषन्तं सृप्रमदब्धमूर्वं बृहस्पते रक्षतादस्य योनिम् ॥२॥
बृहस्पते या परमा परावदत आ त ऋतस्पृशो नि षेदुः ।
तुभ्यं खाता अवता अद्रिदुग्धा मध्व श्चोतन्त्यभितो विरप्शम् ॥३॥
बृहस्पतिः प्रथमं जायमानो महो ज्योतिषः परमे व्योमन् ।
सप्तास्यस्तुविजातो रवेण वि सप्तरश्मिरधमत्तमांसि ॥४॥
स सुष्टुभा स ऋक्वता गणेन वलं रुरोज फलिगं रवेण ।
बृहस्पतिरुस्रिया हव्यसूदः कनिक्रदद्वावशतीरुदाजत् ॥५॥

एवा पित्रे विश्वदेवाय वृष्णे यज्ञैर्विधेम नमसा हविर्भिः ।

बृहस्पते सुप्रजा वीरवन्तो वयं स्याम पतयो रयीणाम् ॥६॥

स इद्राजा प्रतिजन्यानि विश्वा शुष्मेण तस्थावभि वीर्येण ।

बृहस्पतिं यः सुभृतं बिभर्ति वल्गूयति वन्दते पूर्वभाजम् ॥७॥

स इत्क्षेति सुधित ओकसि स्वे तस्मा इळा पिन्वते विश्वदानीम् ।

तस्मै विशः स्वयमेवा नमन्ते यस्मिन्ब्रह्मा राजनि पूर्व एति ॥८॥

अप्रतीतो जयति सं धनानि प्रतिजन्यान्युत या सजन्या ।

अवस्यवे यो वरिवः कृणोति ब्रह्मणे राजा तमवन्ति देवाः ॥९॥

इन्द्रश्च सोमं पिबतं बृहस्पतेऽस्मिन्यज्ञे मन्दसाना वृषण्वसू ।

आ वां विशन्त्विन्दवः स्वाभुवोऽस्मे रयिं सर्ववीरं नि यच्छतम् ॥१०॥

बृहस्पत इन्द्र वर्धतं नः सचा सा वां सुमतिर्भूत्वस्मे ।

अविष्टं धियो जिगृतं पुरंधीर्जजस्तमर्यो वनुषामरातीः ॥११॥

**सायणभाष्यम्**

‘ यस्तस्तम्भ ' इत्येकादशर्चं पञ्चमं सूक्तं वामदेवस्यार्षं त्रैष्टुभम् । दशमी जगती । दशम्येकादश्याविन्द्राबृहस्पतिदेवताके शिष्टा नव बार्हस्पत्यः। अत्रानुक्रमणिका--- यस्तस्तम्भैकादश बार्हस्पत्यमन्त्ये ऐन्द्र्यौ चोपान्त्या जगती' । आभिप्लविकेषूक्थेषु तृतीयसवने ब्राह्मणाच्छंसिनः स्तोमवृद्धाविदं सूक्तमावापार्थम् । तथा च सूत्रं - ‘ यस्तस्तम्भ यो अद्रिभित् ' ( आश्व. श्रौ. ७. ९ ) इति । आद्ये बृहस्पतिसवे मरुस्वतीयनिष्केवल्ययोः सूक्तमुखीये । सूत्रितं च -- 'यस्तस्तम्भ धुनेतय इति सूक्तमुखीये' ( आश्व. श्रौ. ९. ५) इति ॥

यस्त॒स्तम्भ॒ सह॑सा॒ वि ज्मो अन्ता॒न्बृह॒स्पति॑स्त्रिषध॒स्थो रवे॑ण ।

तं प्र॒त्नास॒ ऋष॑यो॒ दीध्या॑नाः पु॒रो विप्रा॑ दधिरे म॒न्द्रजि॑ह्वम् ॥१

यः । त॒स्तम्भ॑ । सह॑सा । वि । ज्मः । अन्ता॑न् । बृ॒ह॒स्पतिः॑ । त्रि॒ऽस॒ध॒स्थः । रवे॑ण ।

तम् । प्र॒त्नासः॑ । ऋष॑यः । दीध्या॑नाः । पु॒रः । विप्राः॑ । द॒धि॒रे॒ । म॒न्द्रऽजि॑ह्वम् ॥१

यः । तस्तम्भ । सहसा । वि । ज्मः । अन्तान् । बृहस्पतिः । त्रिऽसधस्थः । रवेण ।

तम् । प्रत्नासः । ऋषयः । दीध्यानाः । पुरः । विप्राः । दधिरे । मन्द्रऽजिह्वम् ॥१

यः "बृहस्पतिः बृहतो देवस्य यज्ञस्य वा पालयिता देवः "सहसा बलेन "ज्मः पृथिव्याः "अन्तान् । दश दिश इत्यर्थः । तान् "वि "तस्तम्भ विविधं स्तम्भितवान् नियमितवान् । "त्रिषधस्थः त्रिषु स्थानेषु वर्तमानः "रवेण एवं तिष्ठतेत्यनेन शब्देन "तं देवं "प्रत्नासः पुराणाः "ऋषयः अतीन्द्रियद्रष्टारः "दीध्यानाः दीप्यमानाः "विप्राः मेधाविनो यजमानादयः "पुरः "दधिरे पुरस्तात् स्थापितवन्तः स्तुत्यादिना । "मन्द्रजिह्वं मादनजिह्वं मोदनजिह्वम् ॥

धु॒नेत॑यः सुप्रके॒तं मद॑न्तो॒ बृह॑स्पते अ॒भि ये न॑स्तत॒स्रे ।

पृष॑न्तं सृ॒प्रमद॑ब्धमू॒र्वं बृह॑स्पते॒ रक्ष॑तादस्य॒ योनि॑म् ॥२

धु॒नऽइ॑तयः । सु॒ऽप्र॒के॒तम् । मद॑न्तः । बृह॑स्पते । अ॒भि । ये । नः॒ । त॒त॒स्रे ।

पृष॑न्तम् । सृ॒प्रम् । अद॑ब्धम् । ऊ॒र्वम् । बृह॑स्पते । रक्ष॑तात् । अ॒स्य॒ । योनि॑म् ॥२

धुनऽइतयः । सुऽप्रकेतम् । मदन्तः । बृहस्पते । अभि । ये । नः । ततस्रे ।

पृषन्तम् । सृप्रम् । अदब्धम् । ऊर्वम् । बृहस्पते । रक्षतात् । अस्य । योनिम् ॥२

हे "बृहस्पते "धुनेतयः । धुना शत्रूणां कम्पयित्रीतिर्गतिर्येषां ते । तादृशाः "सुप्रकेतं शोभनप्रज्ञं त्वां "मदन्तः मादयन्तः "नः अस्मत्संबन्धिनः "ये ऋत्विजः "अभि "ततस्रे आत्मानमुपक्षिपन्ति स्तुवन्ति वा "अस्य एषां "योनिं कारणं यज्ञं यजमानं वा मां रक्षतात् रक्ष । योनिर्विशेष्यते । "पृषन्तं फलानि सिञ्चन्तं "सृप्रं सर्पणस्वभावम् अदब्धम् अहिंसितम् "ऊर्वम् उरुम् ॥

'बृहस्पते या' इत्यादिके द्वे बार्हस्पत्ये पशौ वपापुरोडाशयोरनुवाक्ये । 'बृहस्पते या परमा परावदिति द्वे' (आश्व. श्रौ. ३. ७) इति हि सूत्रितम् ॥

बृह॑स्पते॒ या प॑र॒मा प॑रा॒वदत॒ आ त॑ ऋत॒स्पृशो॒ नि षे॑दुः ।

तुभ्यं॑ खा॒ता अ॑व॒ता अद्रि॑दुग्धा॒ मध्व॑ः श्चोतन्त्य॒भितो॑ विर॒प्शम् ॥३

बृह॑स्पते । या । प॒र॒मा । प॒रा॒ऽवत् । अतः॑ । आ । ते॒ । ऋ॒त॒ऽस्पृशः॑ । नि । से॒दुः॒ ।

तुभ्य॑म् । खा॒ताः । अ॒व॒ताः । अद्रि॑ऽदुग्धाः । मध्वः॑ । श्चो॒त॒न्ति॒ । अ॒भितः॑ । वि॒ऽर॒प्शम् ॥३

बृहस्पते । या । परमा । पराऽवत् । अतः । आ । ते । ऋतऽस्पृशः । नि । सेदुः ।

तुभ्यम् । खाताः । अवताः । अद्रिऽदुग्धाः । मध्वः । श्चोतन्ति । अभितः । विऽरप्शम् ॥३

हे "बृहस्पते “या प्रसिद्धा "परमा उत्कृष्टा “परावत् अत्यन्तं दूरभूता वसतिः स्वर्गाख्यास्ति । यद्वा लिङ्गव्यत्ययः । परमं स्थानमस्ति । “अतः अस्माद्देशात् । आ इत्यर्वागर्थे । अधस्तात् “ते तव संबन्धिनः “ऋतस्पृशः यज्ञं स्पृशन्तोऽश्वाः "नि “षेदुः निषण्णा भवन्ति । “तुभ्यं “खाता अवताः। लुप्तोपमैषा । यथा खाताः कूपाः “अभितः “श्चोतन्ति तद्वत् “अद्रिदुग्धाः ग्रावभिरभिषुताः सोमाः “विरप्शं विशेषेण शब्देन स्तोत्रं यथा भवति तथा “मध्वः मधुररसं श्चोतन्ति स्रवन्ति ।।

बृह॒स्पति॑ः प्रथ॒मं जाय॑मानो म॒हो ज्योति॑षः पर॒मे व्यो॑मन् ।

स॒प्तास्य॑स्तुविजा॒तो रवे॑ण॒ वि स॒प्तर॑श्मिरधम॒त्तमां॑सि ॥४

बृह॒स्पतिः॑ । प्र॒थ॒मम् । जाय॑मानः । म॒हः । ज्योति॑षः । प॒र॒मे । विऽओ॑मन् ।

स॒प्तऽआ॑स्यः । तु॒वि॒ऽजा॒तः । रवे॑ण । वि । स॒प्तऽर॑श्मिः । अ॒ध॒म॒त् । तमां॑सि ॥४

बृहस्पतिः । प्रथमम् । जायमानः । महः । ज्योतिषः । परमे । विऽओमन् ।

सप्तऽआस्यः । तुविऽजातः । रवेण । वि । सप्तऽरश्मिः । अधमत् । तमांसि ॥४

अयं “बृहस्पतिः मन्त्राभिमानी देवः "महः महतः “ज्योतिषः दीप्तस्य आदित्यस्य "परमे निरतिशये “व्योमन् व्योमनि “प्रथमं “जायमानः प्रादुर्भवन् “सप्तास्यः सप्तच्छन्दोमयमुखः "तुविजातः बहुप्रकारं संभूतः “रवेण शब्देन “सप्तरश्मिः सर्पणस्वभावतेजोयुक्तः “तमांसि “वि “अधमत् ।' धमतिर्गतिकर्मा ' ( निरु. ६. २ ) इति निरुक्तम् । विविधं गच्छति । नाशयतीत्यर्थः ॥

स सु॒ष्टुभा॒ स ऋक्व॑ता ग॒णेन॑ व॒लं रु॑रोज फलि॒गं रवे॑ण ।

बृह॒स्पति॑रु॒स्रिया॑ हव्य॒सूद॑ः कनि॑क्रद॒द्वाव॑शती॒रुदा॑जत् ॥५

सः । सु॒ऽस्तुभा॑ । सः । ऋक्व॑ता । ग॒णेन॑ । व॒लम् । रु॒रो॒ज॒ । फ॒लि॒ऽगम् । रवे॑ण ।

बृह॒स्पतिः॑ । उ॒स्रियाः॑ । ह॒व्य॒ऽसूदः॑ । कनि॑क्रदत् । वाव॑शतीः । उत् । आ॒ज॒त् ॥५

सः । सुऽस्तुभा । सः । ऋक्वता । गणेन । वलम् । रुरोज । फलिऽगम् । रवेण ।

बृहस्पतिः । उस्रियाः । हव्यऽसूदः । कनिक्रदत् । वावशतीः । उत् । आजत् ॥५

"सः “बृहस्पतिः "सुष्टुभा शोभनस्तुतिमता “ऋक्वता दीप्तिमता "गणेन अङ्गिरसां “रवेण शब्देन च सह "फलिगम् ॥' ञिफला विशरणे ' ॥ फलिर्भेदः । तेन गच्छतीति फलिगम् । “वलं वलनामानमसुरं “रुरोज बभञ्ज । द्वितीयः सशब्दः पूरणः । स एव देवः "उस्रियाः भोगानामुत्स्राविणीः “हव्यसूदः क्षीरादिहविष्प्रेरिकाः "वावशतीः वावश्यमानाः गाः "कनिक्रदत् शब्दं कुर्वन् “उदाजत् उद्घाटयति स्म ॥ ॥ २६ ॥

‘ एवा पित्रे ' इति बार्हस्पत्ये पशौ हविषो याज्या ।' एवा पित्रे विश्वदेवाय वृष्णे विश्वे अद्य मरुतो विश्व ऊती ' ( आश्व. श्रौ. ३. ७) इति सूत्रितत्वात् । अग्निष्टोमे वैश्वदेवशस्त्रे एषैव धाय्या । तथा च सूत्रम् - ' एवा पित्रे विश्वदेवाय वृष्ण आ नो भद्राः क्रतवो यन्तु विश्वतः ' ( आश्व. श्रौ. ५. १८ ) इति ॥

एवा पित्रे विश्वदेवाय वृष्णे यज्ञैर्विधेम नमसा हविर्भिः ।

बृहस्पते सुप्रजा वीरवन्तो वयं स्याम पतयो रयीणाम् ॥६

एव । पित्रे । विश्वऽदेवाय । वृष्णे । यज्ञैः । विधेम । नमसा । हविःऽभिः ।

बृहस्पते । सुऽप्रजाः । वीरऽवन्तः । वयम् । स्याम । पतयः । रयीणाम् ॥६

एव । पित्रे । विश्वऽदेवाय । वृष्णे । यज्ञैः । विधेम । नमसा । हविःऽभिः ।

बृहस्पते । सुऽप्रजाः । वीरऽवन्तः । वयम् । स्याम । पतयः । रयीणाम् ॥६

"पित्रे पालकाय “विश्वदेवाय सर्वदेवतारूपाय । देवानां मन्त्रप्रतिपाद्यत्वादस्य च मन्त्राभिमानित्वात् विश्वदेवत्वम् । यद्वा । अत्र देवशब्दः स्तुत्यर्थः । सर्वैः स्तुत्याय “वृष्णे वर्षकाय बृहस्पतये देवाय "एव एवमुक्तप्रकारेण “यज्ञैः तत्साधनैः "हविर्भिः आज्यचर्वादिलक्षणैः "नमसा स्तुत्या च “विधेम परिचरेम । हे “बृहस्पते "सुप्रजाः शोभनपुत्राः “वीरवन्तः वीर्योपेताः "वयं “रयीणां धनानां “पतयः “स्याम ॥

स इद्राजा प्रतिजन्यानि विश्वा शुष्मेण तस्थावभि वीर्येण ।

बृहस्पतिं यः सुभृतं बिभर्ति वल्गूयति वन्दते पूर्वभाजम् ॥७

सः । इत् । राजा । प्रतिऽजन्यानि । विश्वा । शुष्मेण । तस्थौ । अभि । वीर्येण ।

बृहस्पतिम् । यः । सुऽभृतम् । बिभर्ति । वल्गुऽयति । वन्दते । पूर्वऽभाजम् ॥७

सः । इत् । राजा । प्रतिऽजन्यानि । विश्वा । शुष्मेण । तस्थौ । अभि । वीर्येण ।

बृहस्पतिम् । यः । सुऽभृतम् । बिभर्ति । वल्गुऽयति । वन्दते । पूर्वऽभाजम् ॥७

इदमाद्यृक्त्रयं पुरोहितप्रशंसा इति ब्राह्मणम् ( ऐ. ब्रा. ८. २६ )। अथवा सूक्तस्य ऋग्द्वयवर्जितस्य बार्हस्पत्यत्वात् बृहस्पतेरेव स्तुतिः । “स “इत् स एव “राजा मूर्धाभिषिक्तः अन्यः वा राजमानः “प्रतिजन्यानि । जन्यं युद्धं प्रति बलानीत्यर्थः । प्रत्यर्थिजनपदानि वा तानि “विश्वा सर्वाणि “शुष्मेण बलेन “वीर्येण शरीरसामर्थ्येन वा “अभि अभिगम्याक्रम्य तस्थौ तिष्ठति । स इत्युक्तं क इत्याह । “यः “बृहस्पतिं बृहतां महतां पालयितारं देवमुक्तलक्षणं पुरोहितं वा "सुभृतं सुष्ठु हविःस्तोत्रादिनान्नाच्छादनादिना वा “बिभर्ति भरति “वल्गूयति स्तौति । “वन्दते नमस्करोति च "पूर्वभाजम् इतरेभ्यः प्रथमं संभक्तारं कृत्वा । एवं यः करोति स एव तस्थाविति ॥

स इत्क्षे॑ति सु॒धि॑त॒ ओक॑सि॒ स्वे तस्मा॒ इळा॑ पिन्वते विश्व॒दानी॑म् ।

तस्मै॒ विश॑ः स्व॒यमे॒वा न॑मन्ते॒ यस्मि॒न्ब्र॒ह्मा राज॑नि॒ पूर्व॒ एति॑ ॥८

सः । इत् । क्षे॒ति॒ । सुऽधि॑तः । ओक॑सि । स्वे । तस्मै॑ । इळा॑ । पि॒न्व॒ते॒ । वि॒श्व॒ऽदानी॑म् ।

तस्मै॑ । विश॑ः । स्व॒यम् । ए॒व । न॒म॒न्ते॒ । यस्मि॑न् । ब्र॒ह्मा । राज॑नि । पूर्व॑ः । एति॑ ॥८

सः । इत् । क्षेति । सुऽधितः । ओकसि । स्वे । तस्मै । इळा । पिन्वते । विश्वऽदानीम् ।

तस्मै । विशः । स्वयम् । एव । नमन्ते । यस्मिन् । ब्रह्मा । राजनि । पूर्वः । एति ॥८

“स “इत् स एव “क्षेति निवसति । “सुधितः सुष्ठु तृप्तः सन् "स्वे स्वकीये एव "ओकसि सदने । स एव समृद्धो निर्बाधः सन् सुखेनास्ते । “तस्मा "इळा भूमिः “विश्वदानीं सर्वकालं “पिन्वते वर्धते फलैः । “तस्मै “विशः प्रजाः “स्वयमेव “नमन्ते प्रणता भवन्ति । दण्डनमन्तरेण स्वयमेव दत्तकरा भवन्ति । "यस्मिन् “राजनि "ब्रह्मा “पूर्वः प्रथमं पूज्यः सन् “एति गच्छति । वर्तत इत्यर्थः ॥ .

अप्र॑तीतो जयति॒ सं धना॑नि॒ प्रति॑जन्यान्यु॒त या सज॑न्या ।

अ॒व॒स्यवे॒ यो वरि॑वः कृ॒णोति॑ ब्र॒ह्मणे॒ राजा॒ तम॑वन्ति दे॒वाः ॥९

अप्र॑तिऽइतः । ज॒य॒ति॒ । सम् । धना॑नि । प्रति॑ऽजन्यानि । उ॒त । या । सऽज॑न्या ।

अ॒व॒स्यवे॑ । यः । वरि॑वः । कृ॒णोति॑ । ब्र॒ह्मणे॑ । राजा॑ । तम् । अ॒व॒न्ति॒ । दे॒वाः ॥९

अप्रतिऽइतः । जयति । सम् । धनानि । प्रतिऽजन्यानि । उत । या । सऽजन्या ।

अवस्यवे । यः । वरिवः । कृणोति । ब्रह्मणे । राजा । तम् । अवन्ति । देवाः ॥९

स एव “अप्रतीतः अन्यैरप्रतिगतः सन् यानि धनानि “प्रतिजन्यानि प्रतिस्पर्धिजनसंबन्धीनि “उत अपि च "सजन्या जनसंबन्धीनि “धनानि “सं "जयति। "यः "राजा “अवस्यवे अवसीयसे धनरहिताय रक्षणमिच्छते “ब्रह्मणे ब्राह्मणाय वा प्रीणनमिच्छते बृहस्पतये वा “वरिवः धनं “कृणोति करोति ददाति । स उक्तप्रकारेण महान् भवति । "तम् एव "देवाः "अवन्ति रक्षन्ति ॥

‘इन्द्रश्च सोमम्' इति दशमी तृतीयसवने ब्राह्मणाच्छंसिनः प्रस्थितयाज्या । सूत्रितं च -- ‘ इन्द्रश्च सोमं पिबतं बृहस्पते आ वो वहन्तु सप्तयो रघुष्यदः ' ( आश्व. श्रौ. ५. ५) इति ॥

इन्द्र॑श्च॒ सोमं॑ पिबतं बृहस्पते॒ऽस्मिन्य॒ज्ञे म॑न्दसा॒ना वृ॑षण्वसू ।

आ वां॑ विश॒न्त्विन्द॑वः स्वा॒भुवो॒ऽस्मे र॒यिं सर्व॑वीरं॒ नि य॑च्छतम् ॥१०

इन्द्रः॑ । च॒ । सोम॑म् । पि॒ब॒त॒म् । बृ॒ह॒स्प॒ते॒ । अ॒स्मिन् । य॒ज्ञे । म॒न्द॒सा॒ना । वृ॒ष॒ण्व॒सू॒ इति॑ वृषण्ऽवसू ।

आ । वा॒म् । वि॒श॒न्तु॒ । इन्द॑वः । सु॒ऽआ॒भुवः॑ । अ॒स्मे इति॑ । र॒यिम् । सर्व॑ऽवीरम् । नि । य॒च्छ॒त॒म् ॥१०

इन्द्रः । च । सोमम् । पिबतम् । बृहस्पते । अस्मिन् । यज्ञे । मन्दसाना । वृषण्वसू इति वृषण्ऽवसू ।

आ । वाम् । विशन्तु । इन्दवः । सुऽआभुवः । अस्मे इति । रयिम् । सर्वऽवीरम् । नि । यच्छतम् ॥१०

हे “बृहस्पते त्वं “इन्द्रश्च "सोमं “पिबतम् । कीदृशौ युवाम् । “अस्मिन्यज्ञे “मन्दसाना हृष्यन्तौ "वृषण्वसू वर्षितृधनौ यजमानेभ्यो दीयमानधनावित्यर्थः । “वां युवां “स्वाभुवः सुष्ठु सर्वतो भवन्तः । कृत्स्नशरीरव्यापनसमर्था इत्यर्थः । तादृशाः “इन्दवः सोमाः “विशन्तु युवयोः शरीरं प्रविशन्तु । “अस्मे अस्मभ्यं "रयिं धनं “सर्ववीरं सर्वपुत्राद्युपेतं “नि "यच्छतं दत्तम् ॥

बृह॑स्पत इन्द्र॒ वर्ध॑तं न॒ः सचा॒ सा वां॑ सुम॒तिर्भू॑त्व॒स्मे ।

अ॒वि॒ष्टं धियो॑ जिगृ॒तं पुरं॑धीर्जज॒स्तम॒र्यो व॒नुषा॒मरा॑तीः ॥११

बृह॑स्पते । इ॒न्द्र॒ । वर्ध॑तम् । नः॒ । सचा॑ । सा । वा॒म् । सु॒ऽम॒तिः । भू॒तु॒ । अ॒स्मे इति॑ ।

अ॒वि॒ष्टम् । धियः॑ । जि॒गृ॒तम् । पुर॑म्ऽधीः । ज॒ज॒स्तम् । अ॒र्यः । व॒नुषा॑म् । अरा॑तीः ॥११

बृहस्पते । इन्द्र । वर्धतम् । नः । सचा । सा । वाम् । सुऽमतिः । भूतु । अस्मे इति ।

अविष्टम् । धियः । जिगृतम् । पुरम्ऽधीः । जजस्तम् । अर्यः । वनुषाम् । अरातीः ॥११

हे "बृहस्पते हे “इन्द्र युवां “नः अस्मान् “वर्धतं वर्धयतं प्रवृद्धान् कुरुतम् । “सा “सुमतिः युवयोरनुग्रहबुद्धिः “अस्मे अस्मासु "सचा सह "भूतु भवतु । “धियः कर्माणि "अविष्टं रक्षतं पारं नयतम् । “पुरंधीः । पुरं शरीरं धीयते स्थाप्यते याभिर्मतिभिस्ताः स्तुतीः “जिगृतं प्रबुध्यतम् । “वनुषां संभक्तॄणामस्माकम् “अर्यः गन्त्रीः “अरातीः । शत्रूनित्यर्थः । “जजस्तं युध्यतं क्षपयतमित्यर्थः ॥ छन्दस्यरातिशब्दः स्त्रीलिङ्गः ॥ एवं स्तुतिं निगमय्याभीष्टं प्रार्थितवान् ॥ ॥ २७ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।

पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

श्रीमत्सायणमन्त्रीशो दाशतय्यास्तृतीयके ।

अष्टके सप्तमाध्यायं व्याकार्षीदतिपेशलम् ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये तृतीयाष्टके सप्तमोऽध्यायः समाप्तः ॥

**टिप्पणी**

बृहस्पति उपरि पौराणिकाः संदर्भाः (http://puranastudy.000space.com/pur_index20/pva29.htm)

बृहस्पति उपरि वैदिकाः संदर्भाः (http://puranastudy.000space.com/pur_index20/brihaspati.htm)

# ऋग्वेदः सूक्तं ४.५१



दे. उषाः। त्रिष्टुप्

इदमु त्यत्पुरुतमं पुरस्ताज्ज्योतिस्तमसो वयुनावदस्थात् ।
नूनं दिवो दुहितरो विभातीर्गातुं कृणवन्नुषसो जनाय ॥१॥
अस्थुरु चित्रा उषसः पुरस्तान्मिता इव स्वरवोऽध्वरेषु ।
व्यू व्रजस्य तमसो द्वारोच्छन्तीरव्रञ्छुचयः पावकाः ॥२॥
उच्छन्तीरद्य चितयन्त भोजान्राधोदेयायोषसो मघोनीः ।
अचित्रे अन्तः पणयः ससन्त्वबुध्यमानास्तमसो विमध्ये ॥३॥
कुवित्स देवीः सनयो नवो वा यामो बभूयादुषसो वो अद्य ।
येना नवग्वे अङ्गिरे दशग्वे सप्तास्ये रेवती रेवदूष ॥४॥
यूयं हि देवीरृतयुग्भिरश्वैः परिप्रयाथ भुवनानि सद्यः ।
प्रबोधयन्तीरुषसः ससन्तं द्विपाच्चतुष्पाच्चरथाय जीवम् ॥५॥

क्व स्विदासां कतमा पुराणी यया विधाना विदधुरृभूणाम् ।

शुभं यच्छुभ्रा उषसश्चरन्ति न वि ज्ञायन्ते सदृशीरजुर्याः ॥६॥

ता घा ता भद्रा उषसः पुरासुरभिष्टिद्युम्ना ऋतजातसत्याः ।

यास्वीजानः शशमान उक्थै स्तुवञ्छंसन्द्रविणं सद्य आप ॥७॥

ता आ चरन्ति समना पुरस्तात्समानतः समना पप्रथानाः ।

ऋतस्य देवीः सदसो बुधाना गवां न सर्गा उषसो जरन्ते ॥८॥

ता इन्न्वेव समना समानीरमीतवर्णा उषसश्चरन्ति ।

गूहन्तीरभ्वमसितं रुशद्भिः शुक्रास्तनूभिः शुचयो रुचानाः ॥९॥

रयिं दिवो दुहितरो विभातीः प्रजावन्तं यच्छतास्मासु देवीः ।

स्योनादा वः प्रतिबुध्यमानाः सुवीर्यस्य पतयः स्याम ॥१०॥

तद्वो दिवो दुहितरो विभातीरुप ब्रुव उषसो यज्ञकेतुः ।

वयं स्याम यशसो जनेषु तद्द्यौश्च धत्तां पृथिवी च देवी ॥११॥

**सायणभाष्यम्**

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।

निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ।।

अथाष्टमं व्याख्यातुमारभते । ' इदमु त्यत्' इत्येकादशर्चं षष्ठं सूक्तं वामदेवस्यार्षं त्रैष्टुभमुषोदेवताकम् । इदमुषस्यं तु' इत्यनुक्रान्तम् । प्रातरनुवाके उषस्ये क्रतौ त्रैष्टुभे छन्दस्याश्विनशस्त्रे इदं सूक्तम् । सूत्रितं च - उषो वाजेनेदमु त्यत्' (आश्व. श्रौ. ४. १४) इति ।।

इ॒दमु॒ त्यत्पु॑रु॒तमं॑ पु॒रस्ता॒ज्ज्योति॒स्तम॑सो व॒युना॑वदस्थात् ।

नू॒नं दि॒वो दु॑हि॒तरो॑ विभा॒तीर्गा॒तुं कृ॑णवन्नु॒षसो॒ जना॑य ॥१

इ॒दम् । ऊं॒ इति॑ । त्यत् । पु॒रु॒ऽतम॑म् । पु॒रस्ता॑त् । ज्योतिः॑ । तम॑सः । व॒युन॑ऽवत् । अ॒स्था॒त् ।

नू॒नम् । दि॒वः । दु॒हि॒तरः॑ । वि॒ऽभा॒तीः । गा॒तुम् । कृ॒ण॒व॒न् । उ॒षसः॑ । जना॑य ॥१

इदम् । ऊं इति । त्यत् । पुरुऽतमम् । पुरस्तात् । ज्योतिः । तमसः । वयुनऽवत् । अस्थात् ।

नूनम् । दिवः । दुहितरः । विऽभातीः । गातुम् । कृणवन् । उषसः । जनाय ॥१

“इदमु पुरतो दृश्यमानमिदं “त्यत् तदस्माभिः स्तुत्यं सर्वप्रसिद्धं “पुरुतमम् अत्यन्तप्रभूतं “ज्योतिः तेजः “वयुनावत् ॥ वेतेः कान्तिकर्मण इदम् ॥ प्रकृष्टकान्तिमत् । अथवा वयुनमिति प्रज्ञानाम । प्रज्ञोपेतम् । सर्वस्य प्रज्ञापकमित्यर्थः । कीदृक् तेजः । “पुरस्तात् पूर्वस्यां दिशि “तमसः अन्धकारात् “अस्थात् उदतिष्ठत् । एवं सति “नूनं सत्यं “दिवः अदित्यस्य “दुहितरः दुहितृस्थानीयाः “विभातीः विभानं कुर्वतीः “उषसो “जनाय यजमानानां “गातुं गमनं गमनादिव्यापारसामर्थ्यं “कृणवन् अकुर्वन् ।।

अस्थु॑रु चि॒त्रा उ॒षस॑ः पु॒रस्ता॑न्मि॒ता इ॑व॒ स्वर॑वोऽध्व॒रेषु॑ ।

व्यू॑ व्र॒जस्य॒ तम॑सो॒ द्वारो॒च्छन्ती॑रव्र॒ञ्छुच॑यः पाव॒काः ॥२

अस्थुः॑ । ऊं॒ इति॑ । चि॒त्राः । उ॒षसः॑ । पु॒रस्ता॑त् । मि॒ताःऽइ॑व । स्वर॑वः । अ॒ध्व॒रेषु॑ ।

वि । ऊं॒ इति॑ । व्र॒जस्य॑ । तम॑सः । द्वारा॑ । उ॒च्छन्तीः॑ । अ॒व्र॒न् । शुच॑यः । पा॒व॒काः ॥२

अस्थुः । ऊं इति । चित्राः । उषसः । पुरस्तात् । मिताःऽइव । स्वरवः । अध्वरेषु ।

वि । ऊं इति । व्रजस्य । तमसः । द्वारा । उच्छन्तीः । अव्रन् । शुचयः । पावकाः ॥२

“चित्राः चायनीयाः “उषसः “पुरस्तात् पूर्वस्यां दिशि “अस्थुः तिष्ठन्ति । व्याप्ता इत्यर्थः । तत्र दृष्टान्तः । “अध्वरेषु “मिताः खाताः “स्वरवः यूपाः “इव । ते यथा वेद्याः पुरतो भासन्ते तद्वत् । यद्यपि स्वरुशब्दो यूपच्छेदपतितप्रथमशकलवाची ' यः प्रथमः शकलः परापतेत्स स्वरुः कार्यः' इत्युक्तत्वात् तथाप्यत्र मितशब्दश्रवणात् 'चषालवन्तः स्वरवः' ( ऋ. सं. ३. ८. १० ) इत्यादौ तथा दर्शनाच्चात्र यूपवचनः । ताः “व्रजस्य वारकस्य “तमसो “द्वारा द्वाराणि “वि “उच्छन्तीः “शुचयः दीप्ताः पावकाः शोधिकाः “अव्रन् व्यावृण्वन् ॥

उ॒च्छन्ती॑र॒द्य चि॑तयन्त भो॒जान्रा॑धो॒देया॑यो॒षसो॑ म॒घोनी॑ः ।

अ॒चि॒त्रे अ॒न्तः प॒णय॑ः सस॒न्त्वबु॑ध्यमाना॒स्तम॑सो॒ विम॑ध्ये ॥३

उ॒च्छन्ती॑ः । अ॒द्य । चि॒त॒य॒न्त॒ । भो॒जान् । रा॒धः॒ऽदेया॑य । उ॒षसः॑ । म॒घोनी॑ः ।

अ॒चि॒त्रे । अ॒न्तरिति॑ । प॒णय॑ः । स॒स॒न्तु॒ । अबु॑ध्यमानाः । तम॑सः । विऽम॑ध्ये ॥३

उच्छन्तीः । अद्य । चितयन्त । भोजान् । राधःऽदेयाय । उषसः । मघोनीः ।

अचित्रे । अन्तरिति । पणयः । ससन्तु । अबुध्यमानाः । तमसः । विऽमध्ये ॥३

“अद्य अस्मिन् दिने “उच्छन्तीः तमः विवासयन्त्यः “मघोनीः धनवत्यः “उषसः “भोजान् भोजयितॄन् यजमानान् तेषां “राधोदेयाय सोमादिधनदानाय “चितयन्त प्रज्ञापयन्ति । “अचित्रे अचायनीये “तमसो “विमध्ये । अत्यन्तगाढान्धकारे इत्यर्थः । तत्र "पणयः वणिज इवादातारः "अयुध्यमानाः “ससन्तु स्वपन्तु ।।

कु॒वित्स दे॑वीः स॒नयो॒ नवो॑ वा॒ यामो॑ बभूयादु॑षसो वो अ॒द्य ।

येना॒ नव॑ग्वे॒ अङ्गि॑रे॒ दश॑ग्वे स॒प्तास्ये॑ रेवती रे॒वदू॒ष ॥४

कु॒वित् । सः । दे॒वी॒ः । स॒नय॑ः । नव॑ः । वा॒ । याम॑ः । ब॒भू॒यात् । उ॒ष॒स॒ः । व॒ः । अ॒द्य ।

येन॑ । नव॑ऽग्वे । अङ्गि॑रे । दश॑ऽग्वे । स॒प्तऽआ॑स्ये । रे॒व॒ती॒ः । रे॒वत् । ऊ॒ष ॥४

कुवित् । सः । देवीः । सनयः । नवः । वा । यामः । बभूयात् । उषसः । वः । अद्य ।

येन । नवऽग्वे । अङ्गिरे । दशऽग्वे । सप्तऽआस्ये । रेवतीः । रेवत् । ऊष ॥४

हे देवीः द्योतमानाः "उषसो “वः युष्मान् “सनयः पुराणः "नवो “वा “यामः गमनसाधनः “सः रथः “अद्य अस्मिन् यागदिने “कुवित् बहुवारं “बभूयात् भवेत् गच्छेदित्यर्थः । “येन रथेन हे “रेवतीः धनवत्यो यूयं "नवग्वे “दशग्वे “सप्तास्ये सप्तच्छन्दोयुक्तमुखे “अङ्गिरे अङ्गिरोगणे । तौ द्वौ तत्र येऽप्यङ्गिरसः तेषां गणे । तथान्यत्र ‘ नवग्वो नु दशग्वो अङ्गिरस्तमः ( ऋ. सं. १०. ६२. ६ ) इति । "रेवत् धनवत् यथा भवति तथा “ऊष विभातं कृतवत्यः ॥ वसेर्व्युच्छनकर्मणो लिण्मध्यमबहुवचनस्येदं रूपम् ॥

यूयं हि दे॑वीरृ॒तयुग्भि॒रश्वै॑ः परिप्रया॒थ भुव॑नानि स॒द्यः ।

प्र॒बो॒धय॑न्तीरुषसः स॒सन्तं॑ द्वि॒पाच्चतु॑ष्पाच्च॒रथा॑य जी॒वम् ॥५

यू॒यम् । हि । दे॒वी॒ः । ऋ॒त॒युक्ऽभि॑ः । अश्वै॑ः । प॒रि॒ऽप्र॒या॒थ । भुव॑नानि । स॒द्यः ।

प्र॒ऽबो॒धय॑न्तीः । उ॒ष॒स॒ः । स॒सन्त॑म् । द्वि॒ऽपात् । चतु॑ःऽपात् । च॒रथा॑य । जी॒वम् ॥५

यूयम् । हि । देवीः । ऋतयुक्ऽभिः । अश्वैः । परिऽप्रयाथ । भुवनानि । सद्यः ।

प्रऽबोधयन्तीः । उषसः । ससन्तम् । द्विऽपात् । चतुःऽपात् । चरथाय । जीवम् ॥५

हे “देवीः द्योतमानाः "उषसः “यूयं “हि खलु "ऋतयुग्भिः यज्ञगामिभिः "अश्वैः "भुवनानि “सद्यः “परिप्रयाथ परितः प्रकृष्टं गच्छथ । किं कुर्वत्यः। “ससन्तं स्वपन्तं द्विपाच्चतुष्पात् मनुष्य गवादिलक्षणं “जीवं “चरथाय चरणाय गमनादिव्यवहाराय "प्रबोधयन्तीः प्रबोधयन्त्यः सत्यः परिप्रयाथ ॥ ॥ १ ॥

क्व॑ स्विदासां क॒त॒मा पु॑रा॒णी यया॑ वि॒धाना॑ विद॒धुरृ॒भू॒णाम् ।

शुभ॒ं यच्छु॒भ्रा उ॒षस॒श्चर॑न्ति॒ न वि ज्ञा॑यन्ते स॒दृशी॑रजु॒र्याः ॥६

क्व॑ । स्वि॒त् । आ॒सा॒म् । क॒त॒मा । पु॒रा॒णी । यया॑ । वि॒ऽधाना॑ । वि॒ऽद॒धुः । ऋ॒भू॒णाम् ।

शुभ॑म् । यत् । शु॒भ्राः । उ॒षसः॑ । चर॑न्ति । न । वि । ज्ञा॒य॒न्ते॒ । स॒ऽदृशीः॑ । अ॒जु॒र्याः ॥६

क्व । स्वित् । आसाम् । कतमा । पुराणी । यया । विऽधाना । विऽदधुः । ऋभूणाम् ।

शुभम् । यत् । शुभ्राः । उषसः । चरन्ति । न । वि । ज्ञायन्ते । सऽदृशीः । अजुर्याः ॥६

“आसाम् उषसां मध्ये “क्व “स्वित् अभूदद्य "कतमा “पुराणी पुरातनी । “यया “ऋभूणां संबन्धीनि “विधाना चमसादिनिर्माणानि “विदधुः अकुर्वन् ऋभवः। “यत् याश्च “उषसः “शुभ्राः दीप्ताः “शुभं “चरन्ति शोभां दीप्तिं कुर्वन्ति । ताः "अजुर्याः अशीर्णा नित्यनूतनाः ”न “वि “ज्ञायन्ते । यतः “सदृशीः सदृश्यः सर्वेष्वपि दिवसेष्वेकरूपा अतोऽद्यतन्य एता एताः पुराण्य इति न ज्ञायन्ते । उषासादृश्यं सदृशीरद्य सदृशीरिदु श्वः' (ऋ. सं. १. १२३. ८) इत्यत्र प्रतिपादितम् ॥

ता घा॒ ता भ॒द्रा उ॒षस॑ः पु॒रासु॑रभि॒ष्टिद्यु॑म्ना ऋ॒तजा॑तसत्याः ।

यास्वी॑जा॒नः श॑शमा॒न उ॒क्थैः स्तु॒वञ्छंस॒न्द्रवि॑णं स॒द्य आप॑ ॥७

ताः । घ॒ । ताः । भ॒द्राः । उ॒षसः॑ । पु॒रा । आ॒सु॒ः । अ॒भि॒ष्टिऽद्यु॑म्नाः । ऋ॒तजा॑तऽसत्याः ।

यासु॑ । ई॒जा॒नः । श॒श॒मा॒नः । उ॒क्थैः । स्तु॒वन् । शंस॑न् । द्रवि॑णम् । स॒द्यः । आप॑ ॥७

ताः । घ । ताः । भद्राः । उषसः । पुरा । आसुः । अभिष्टिऽद्युम्नाः । ऋतजातऽसत्याः ।

यासु । ईजानः । शशमानः । उक्थैः । स्तुवन् । शंसन् । द्रविणम् । सद्यः । आप ॥७

“ता “घ । घेति प्रसिद्धौ । ताः खलूपकारिण्यः “ता "भद्राः कल्याण्यः स्तुत्या वा “उषसः “पुरा पूर्वम् “आसुः अभवन् । "अभिष्टिद्युम्नाः अभिगमनमात्रेण द्युम्नं धनं यासां ताः । “ऋतजातसत्याः । ऋतार्थं यज्ञार्थं जाताश्च ताः सत्याः सत्यफलाश्च तादृश्यः । "यासु उषःसु “ईजानः यागं कुर्वाणः उक्थैः शस्त्रैः “शशमानः शंसमानः “स्तुवन् सामभिः स्तोत्रं निष्पादयन् “शंसन् शस्त्राणि कुर्वन् “द्रविणं धनं “सद्यः “आप प्राप्नोति । ता भद्रा इति संबन्धः ॥

ता आ चंरन्ति सम॒ना पु॒रस्ता॑त्सम॒ानत॑ः सम॒ना प॑प्रथा॒नाः ।

ऋ॒तस्य॑ दे॒वीः सद॑सो बुधा॒ना गवा॒ं न सर्गा॑ उ॒षसो॑ जरन्ते ॥८

ताः । आ । च॒र॒न्ति॒ । स॒म॒ना । पु॒रस्ता॑त् । स॒मा॒नतः॑ । स॒म॒ना । प॒प्र॒था॒नाः ।

ऋ॒तस्य॑ । दे॒वीः । सद॑सः । बु॒धा॒नाः । गवा॑म् । न । सर्गाः॑ । उ॒षसः॑ । ज॒र॒न्ते॒ ॥८

ताः । आ । चरन्ति । समना । पुरस्तात् । समानतः । समना । पप्रथानाः ।

ऋतस्य । देवीः । सदसः । बुधानाः । गवाम् । न । सर्गाः । उषसः । जरन्ते ॥८

“ताः उषसः “आ सर्वतः “चरन्ति । “समना सर्वतः समाना: “पुरस्तात् पूर्वस्यां दिशि “समानतः समानाद्देशात् अन्तरिक्षात् “समना सर्वतः “पप्रथानाः प्रथमाना: “ऋतस्य यज्ञस्य “सदसः सदः । तत्रत्यम् ऋत्विग्घविरादिकम् इत्यर्थः । “बुधानाः बोधयन्त्यः ॥ अन्तर्भावितण्यर्थोऽयम् ॥ एवं महानुभावाः “उषसो “जरन्ते स्तूयन्ते । “गवां “सर्गाः “न उदकानां सृष्टय इव। ‘ गवां सर्गा न रश्मयः ' ( ऋ. सं. ४. ५२. ५) इति हि श्रुतम् । ता यथा सर्वत्र प्रसंगादुपकारत्वाच्च स्तूयन्ते तद्वत् ॥

ता इन्न्वे॒३॑व सं॑म॒ना सं॑मा॒नीरमी॑तवर्णा उ॒षस॑श्चरन्ति ।

गूह॑न्ती॒रभ्व॒मसि॑तं॒ रुश॑द्भिः शु॒क्रास्त॒नूभि॒ः शुच॑यो रुचा॒नाः ॥९

ताः । इत् । नु । ए॒व । स॒म॒ना । स॒मा॒नीः । अमी॑तऽवर्णाः । उ॒षसः॑ । च॒र॒न्ति॒ ।

गूह॑न्तीः । अभ्वं॑म् । असि॑तम् । रुश॑त्ऽभिः । शु॒क्राः । त॒नूभिः॑ । शुच॑यः । रु॒चा॒नाः ॥९

ताः । इत् । नु । एव । समना । समानीः । अमीतऽवर्णाः । उषसः । चरन्ति ।

गूहन्तीः । अभ्वम् । असितम् । रुशत्ऽभिः । शुक्राः । तनूभिः । शुचयः । रुचानाः ॥९

“ता: “एव उषसः । इदिति पूरणः । “नु अद्य “समना समानाः एकधेत्यर्थः । “समानीः एकरूपाः अमीतवर्णाः अहिंसितवर्णाः अपरिमितवर्णा वा “उषसश्चरन्ति सर्वतः । किं कुर्वत्यः । “अभ्वम् । महन्नामैतत् । अतिमहत् “असितं कृष्णं रूपं “गूहन्तीः

गोपयन्त्यः “रुशद्भिः रोचमानैः “तनूभिः स्वशरीरैः “शुक्राः दीप्ताः “शुचयः शुद्धाः “रुचानाः रोचमाना रोचयन्त्यो वा ॥

र॒यिं दिवो॑ दुहितरो विभा॒तीः प्र॒जाव॑न्तं यच्छता॒स्मासु॑ देवीः ।

स्यो॒नादा व॑ः प्रति॒बुध्य॑मानाः सु॒वीर्य॑स्य॒ पत॑यः स्याम ॥१०

र॒यिम् । दि॒वः॒ । दु॒हि॒त॒रः॒ । वि॒ऽभा॒तीः । प्र॒जाऽव॑न्तम् । य॒च्छ॒त॒ । अ॒स्मासु॑ । दे॒वीः॒ ।

स्यो॒नात् । आ । वः॒ । प्र॒ति॒ऽबुध्य॑मानाः । सु॒ऽवीर्य॑स्य । पत॑यः । स्या॒म॒ ॥१०

रयिम् । दिवः । दुहितरः । विऽभातीः । प्रजाऽवन्तम् । यच्छत । अस्मासु । देवीः ।

स्योनात् । आ । वः । प्रतिऽबुध्यमानाः । सुऽवीर्यस्य । पतयः । स्याम ॥१०

हे “दिवो “दुहितरः द्योतमानस्यादित्यस्य दुहितृस्थानीयाः “विभातीः विभात्यो विशेषेण भानं कुर्वत्यः “अस्मासु “प्रजावन्तं “रयिं पुत्राद्युपेतं धनं “यच्छत दत्त । हे “देवीः देव्यः “स्योनात् सुखात् निमित्तभूतात् “वः युष्मान् प्रतिबुध्यमानाः प्रतिबोधयन्तो वयं “सुवीर्यस्य “पतयः “स्याम । पुत्रादिसहितस्य धनस्य पालका भवेम ॥

' तद्वो दिवः' इति व्युष्टायां जपेत् ॥

तद्वो॑ दिवो दुहितरो विभा॒तीरुप॑ ब्रुव उषसो य॒ज्ञके॑तुः ।

व॒यं स्या॑म य॒शसो॒ जने॑षु॒ तद्द्यौश्च॑ ध॒त्तां पृ॑थि॒वी च॑ दे॒वी ॥११

तत् । वः॒ । दि॒वः॒ । दु॒हि॒त॒रः॒ । वि॒ऽभा॒तीः । उप॑ । ब्रु॒वे॒ । उ॒ष॒सः॒ । य॒ज्ञऽके॑तुः ।

व॒यम् । स्या॒म॒ । य॒शसः॑ । जने॑षु । तत् । द्यौः । च॒ । ध॒त्ताम् । पृ॒थि॒वी । च॒ । दे॒वी ॥११

तत् । वः । दिवः । दुहितरः । विऽभातीः । उप । ब्रुवे । उषसः । यज्ञऽकेतुः ।

वयम् । स्याम । यशसः । जनेषु । तत् । द्यौः । च । धत्ताम् । पृथिवी । च । देवी ॥११

हे “दिवो “दुहितरः हे "उषसः “विभाती: “वः युष्मान् “तत् उत्तरार्धप्रथमपादेन वक्ष्यमाणं फलं "यज्ञकेतुः । यज्ञ एव केतुः प्रज्ञापको यस्य तादृशोऽहम् "उप "ब्रुवे उपेत्य ब्रवीमि । अथ बहुवदुच्यते। "वयं स्तुवन्तः "जनेषु अस्मत्समानेषु मध्ये “यशसः कीर्तेः अन्नस्य वा स्वामिनः “स्याम। “तत् यशः "द्यौः “पृथिवी “च "देवी “धत्तां धारयताम् ॥ ॥ २ ॥

# ऋग्वेदः सूक्तं ४.५२

ऋग्वेदः - मण्डल ४
← सूक्तं ४.५१ सूक्तं ४.५२ सूक्तं ४.५३ →
वामदेवो गौतमः

दे. उषाः। गायत्री

प्रति ष्या सूनरी जनी व्युच्छन्ती परि स्वसुः ।

दिवो अदर्शि दुहिता ॥१॥

अश्वेव चित्रारुषी माता गवामृतावरी ।

सखाभूदश्विनोरुषाः ॥२॥

उत सखास्यश्विनोरुत माता गवामसि ।

उतोषो वस्व ईशिषे ॥३॥

यावयद्द्वेषसं त्वा चिकित्वित्सूनृतावरि ।

प्रति स्तोमैरभुत्स्महि ॥४॥

प्रति भद्रा अदृक्षत गवां सर्गा न रश्मयः ।

ओषा अप्रा उरु ज्रयः ॥५॥

आपप्रुषी विभावरि व्यावर्ज्योतिषा तमः ।

उषो अनु स्वधामव ॥६॥

आ द्यां तनोषि रश्मिभिरान्तरिक्षमुरु प्रियम् ।

उषः शुक्रेण शोचिषा ॥७॥

**सायणभाष्यम्**

‘ प्रति ष्या' इति सप्तर्चं सप्तमं सूक्तं वामदेवस्यार्षं गायत्रमुषोदेवताकम् ।' प्रति ष्या सप्त गायत्रम्' इत्यनुक्रमणिका । प्रतिरनुवाक उषस्ये क्रतौ गायत्रे छन्दस्याश्विनशस्त्रे चेदं शस्यम् । ‘ अथोषस्यः प्रति ष्या सूनरी ' ( आश्व. श्रौ. ४. १४ ) इति हि सूत्रितम् ॥

प्रति॒ ष्या सू॒नरी॒ जनी॑ व्यु॒च्छन्ती॒ परि॒ स्वसु॑ः ।

दि॒वो अ॑दर्शि दुहि॒ता ॥१

प्रति॑ । स्या । सू॒नरी॑ । जनी॑ । वि॒ऽउ॒च्छन्ती॑ । परि॑ । स्वसुः॑ ।

दि॒वः । अ॒द॒र्शि॒ । दु॒हि॒ता ॥१

प्रति । स्या । सूनरी । जनी । विऽउच्छन्ती । परि । स्वसुः ।

दिवः । अदर्शि । दुहिता ॥१

"स्या सो संस्तूयमाना "सूनरी सुष्ठु प्राणिनां नेत्री "जनी जनयित्री फलानां “स्वसुः स्वसृस्थानीयाया रात्रेः “परि उपरिभागे रात्रिपर्यवसानकाले “व्युच्छन्ती तमो विवासयन्ती । स्वसा स्वस्रे ज्यायस्यै' (ऋ. सं. १. १२४. ८ ) इत्युक्तम् । "दिवः द्योतमानस्यादित्यस्य “दुहिता उषाः “प्रति "अदर्शि प्रतिदृश्यते सर्वैः ॥

अश्वे॑व चि॒त्रारु॑षी मा॒ता गवा॑मृ॒ताव॑री ।

सखा॑भूद॒श्विनो॑रु॒षाः ॥२

अश्वा॑ऽइव । चि॒त्रा । अरु॑षी । मा॒ता । गवा॑म् । ऋ॒तऽव॑री ।

सखा॑ । अ॒भू॒त् । अ॒श्विनोः॑ । उ॒षाः ॥२

अश्वाऽइव । चित्रा । अरुषी । माता । गवाम् । ऋतऽवरी ।

सखा । अभूत् । अश्विनोः । उषाः ॥२

“अश्वेव “चित्रा चायनीया "अरुषी रोचमाना “गवां रश्मीनां “माता निर्मात्री “ऋतावरी यज्ञवती "उषाः "अश्विनोः “सखा समानख्याना सह स्तूयमाना "अभूत् भवति । अश्विनोः उषसा सह स्तूयमानत्वात् सखित्वं परस्परम् ॥

उ॒त सखा॑स्य॒श्विनो॑रु॒त मा॒ता गवा॑मसि ।

उ॒तोषो॒ वस्व॑ ईशिषे ॥३

उ॒त । सखा॑ । अ॒सि॒ । अ॒श्विनोः॑ । उ॒त । मा॒ता । गवा॑म् । अ॒सि॒ ।

उ॒त । उ॒ष॒ः । वस्वः॑ । ई॒शि॒षे॒ ॥३

उत । सखा । असि । अश्विनोः । उत । माता । गवाम् । असि ।

उत । उषः । वस्वः । ईशिषे ॥३

"उत अपि च "अश्विनोः “सखा “असि। "उत अपि च "गवां रश्मीनां “माता "असि । "उत अपि च हे “उषः "वस्वः धनस्य “ईंशिषे ईश्वरा भवसि ॥

या॒व॒यद्द्वे॑षसं त्वा चिकि॒त्वित्सू॑नृतावरि ।

प्रति॒ स्तोमै॑रभुत्स्महि ॥४

य॒व॒यत्ऽद्वे॑षसम् । त्वा॒ । चि॒कि॒त्वित् । सू॒नृ॒ता॒ऽव॒रि॒ ।

प्रति॑ । स्तोमैः॑ । अ॒भु॒त्स्म॒हि॒ ॥४

यवयत्ऽद्वेषसम् । त्वा । चिकित्वित् । सूनृताऽवरि ।

प्रति । स्तोमैः । अभुत्स्महि ॥४

"यावयद्द्वेषसम् । यवयन्तो वियुज्यमाना द्वेषांसि द्वेष्टारो यस्यास्तादृशी । पृथक्क्रियन्ते द्वेषांस्यनयेति वा । रात्रौ हननायोद्युक्ता द्वेषिण उषःकाले हि पलायन्ते । तादृशीं "चिकित्वित् ज्ञापयन्तीं "त्वा त्वां "सूनृतावरि । सूनृतेति वाङ्नाम । तद्वति देवि "स्तोमैः स्तुतिभिः "प्रति अभुत्स्महि प्रतिबोधयामः । स्तुम इत्यर्थः ॥

प्रतिं भ॒द्रा अ॑दृक्षत॒ गवा॑ं॒ सर्गा॒ न र॒श्मय॑ः ।

ओषा अ॑प्रा उ॒रु ज्रय॑ः ॥५

प्रतिं । भ॒द्राः । अ॒दृ॒क्ष॒त॒ । गवा॑म् । सर्गा॑ः । न । र॒श्मय॑ः ।

आ । उ॒षाः । अ॒प्रा॒ः । उ॒रु । ज्रय॑ः ॥५

प्रति । भद्राः । अदृक्षत । गवाम् । सर्गाः । न । रश्मयः ।

आ । उषाः । अप्राः । उरु । ज्रयः ॥५

"भद्राः स्तुत्याः "रश्मयः "प्रति "अदृक्षत प्रतिदृश्यन्ते । "गवाम् उदकानां "सर्गा "न वर्षधारा इवेयम् "उषाः "उरु "ज्रयः महत्तेजः "आ "अप्राः आपूरयत् ॥

आ॒प॒प्रुषीं॑ विभावरि॒ व्या॑व॒र्ज्योति॑षा॒ तम॑ः ।

उषो॒ अनु॑ स्व॒धाम॑व ॥६

आ॒ऽप॒प्रुषीं॑ । वि॒भा॒ऽव॒रि॒ । वि । आ॒वः॒ । ज्योति॑षा । तम॑ः ।

उष॑ः । अनु॑ । स्व॒धाम् । अ॒व॒ ॥६

आऽपप्रुषी । विभाऽवरि । वि । आवः । ज्योतिषा । तमः ।

उषः । अनु । स्वधाम् । अव ॥६

हे "विभावरि विभावति "उषः त्वम् "आपप्रुषी आपूरयन्ती तेजसा जगत् "ज्योतिषा तेजसा "तमः अन्धकारं "व्यावः व्यावृणोः । किंच "अनु पश्चात् "स्वधां हविर्लक्षणमन्नम् "अव रक्ष ॥

' आ द्यां तनोषि' इत्येषा देवीनां हविःषु उषसोऽनुवाक्या। सूत्रितं च-- ' आ द्यां तनोषि रश्मिभिरावहन्ती पोष्या वार्याणि ' ( आश्व.

श्रौ. ६. १४ ) इति ॥

आ द्यां तं॑नोषि र॒श्मिभि॒रान्तरि॑क्षमु॒रु प्रि॒यम् ।

उष॑ः शु॒क्रेण॑ शो॒चिषा॑ ॥७

आ । द्याम् । त॒नो॒षि॒ । र॒श्मिऽभि॑ः । आ । अ॒न्तरि॑क्षम् । उ॒रु । प्रि॒यम् ।

उष॑ः । शु॒क्रेण॑ । शो॒चिषा॑ ॥७

आ । द्याम् । तनोषि । रश्मिऽभिः । आ । अन्तरिक्षम् । उरु । प्रियम् ।

उषः । शुक्रेण । शोचिषा ॥७

हे "उषः "रश्मिभिः "द्यां दिवम् "आ "तनोषि । "उरु विस्तीर्णं "प्रियम् "अन्तरिक्षं रश्मिभिः "आ तनोषि । "शुक्रेण दीप्तेन "शोचिषा प्रकाशेन युक्ता सती एवं करोषि ॥ ॥ ३ ॥

# ऋग्वेदः सूक्तं ४.५३



दे. सविता। जगती।

---

तद्देवस्य सवितुर्वार्यं महद्वृणीमहे असुरस्य प्रचेतसः ।

छर्दिर्येन दाशुषे यच्छति त्मना तन्नो महाँ उदयान्देवो अक्तुभिः ॥१॥

दिवो धर्ता भुवनस्य प्रजापतिः पिशङ्गं द्रापिं प्रति मुञ्चते कविः ।

विचक्षणः प्रथयन्नापृणन्नुर्वजीजनत्सविता सुम्नमुक्थ्यम् ॥२॥

आप्रा रजांसि दिव्यानि पार्थिवा श्लोकं देवः कृणुते स्वाय धर्मणे ।

प्र बाहू अस्राक्सविता सवीमनि निवेशयन्प्रसुवन्नक्तुभिर्जगत् ॥३॥

अदाभ्यो भुवनानि प्रचाकशद्व्रतानि देवः सविताभि रक्षते ।

प्रास्राग्बाहू भुवनस्य प्रजाभ्यो धृतव्रतो महो अज्मस्य राजति ॥४॥

त्रिरन्तरिक्षं सविता महित्वना त्री रजांसि परिभुस्त्रीणि रोचना ।

तिस्रो दिवः पृथिवीस्तिस्र इन्वति त्रिभिर्व्रतैरभि नो रक्षति त्मना ॥५॥

बृहत्सुम्नः प्रसवीता निवेशनो जगत स्थातुरुभयस्य यो वशी ।

स नो देवः सविता शर्म यच्छत्वस्मे क्षयाय त्रिवरूथमंहसः ॥६॥

आगन्देव ऋतुभिर्वर्धतु क्षयं दधातु नः सविता सुप्रजामिषम् ।

स नः क्षपाभिरहभिश्च जिन्वतु प्रजावन्तं रयिमस्मे समिन्वतु ॥७॥

**सायणभाष्यम्**

‘तद्देवस्य ' इति सप्तर्चमष्टमं सूक्तं वामदेवस्यार्षं जागतं सावित्रम् । तथा चानुक्रम्यते ‘ तद्देवस्य सावित्रं तु जागतम्' इति । आभिप्लविके तृतीयेऽहनि वैश्वदेवशस्त्रे सावित्रनिविद्धानमिदम् । तथा च सूत्रितं- तद्देवस्य घृतेन द्यावापृथिवी इति तिस्रः' ( आश्व. श्रौ. ७. ७) इति ॥

तद्दे॒वस्य॑ सवि॒तुर्वार्यं॑ म॒हद्वृ॑णी॒महे॒ असु॑रस्य॒ प्रचे॑तसः ।

छ॒र्दिर्येन॑ दा॒शुषे॒ यच्छ॑ति॒ त्मना॒ तन्नो॑ म॒हाँ उद॑यान्दे॒वो अ॒क्तुभिः॑ ॥१

तत् । दे॒वस्य॑ । स॒वि॒तुः । वार्य॑म् । म॒हत् । वृ॒णी॒महे॑ । असु॑रस्य । प्रऽचे॑तसः ।

छ॒र्दिः । येन॑ । दा॒शुषे॑ । यच्छ॑ति । त्मना॑ । तत् । नः॒ । म॒हान् । उत् । अ॒या॒न् । दे॒वः । अ॒क्तुऽभिः॑ ॥१

तत् । देवस्य । सवितुः । वार्यम् । महत् । वृणीमहे । असुरस्य । प्रऽचेतसः ।

छर्दिः । येन । दाशुषे । यच्छति । त्मना । तत् । नः । महान् । उत् । अयान् । देवः । अक्तुऽभिः ॥१

“सवितुः प्रेरकस्य “देवस्य "वार्यं वरणीयं “महत् पूज्यं “तत् धनं “वृणीमहे प्रार्थयामः । "असुरस्य । असुर्बलम् । तद्वतः “प्रचेतसः प्रकृष्टमतेः । देवस्येति संबन्धः । “येन धनेन युक्तः सन् “छर्दिः । गृहनामैतत् । गृहोपलक्षितं धनजातं “दाशुषे हविर्दत्तवते यजमानाय “त्मना आत्मनैव "यच्छति “तत् "छर्दिः “महान् “देवः सविता "अक्तुभिः रात्रिभिः । एतदह्नामप्युपलक्षणम् । सर्वैः दिवसैः सर्वेषु दिवसेषु “नः अस्माकम् "उदयान् उद्यच्छतु करोत्वित्यर्थः । यद्वा । छर्दिरिति तेजोनाम। तत्तेज उद्यच्छत्विति ॥

दि॒वो ध॒र्ता भुव॑नस्य प्र॒जाप॑तिः पि॒शङ्गं॑ द्रा॒पिं प्रति॑ मुञ्चते क॒विः ।

वि॒च॒क्ष॒णः प्र॒थय॑न्ना॒पृण॑न्नु॒र्वजी॑जनत्सवि॒ता सु॒म्नमु॒क्थ्य॑म् ॥२

दि॒वः । ध॒र्ता । भुव॑नस्य । प्र॒जाऽप॑तिः । पि॒शङ्ग॑म् । द्रा॒पिम् । प्रति॑ । मु॒ञ्च॒ते॒ । क॒विः ।

वि॒ऽच॒क्ष॒णः । प्र॒थय॑न् । आ॒ऽपृ॒णन् । उ॒रु । अजी॑जनत् । स॒वि॒ता । सु॒म्नम् । उ॒क्थ्य॑म् ॥२

दिवः । धर्ता । भुवनस्य । प्रजाऽपतिः । पिशङ्गम् । द्रापिम् । प्रति । मुञ्चते । कविः ।

विऽचक्षणः । प्रथयन् । आऽपृणन् । उरु । अजीजनत् । सविता । सुम्नम् । उक्थ्यम् ॥२

“दिवः द्युलोकस्य “धर्ता धारकः । न केवलं दिव एवं अपि तु “भुवनस्य कृत्स्नस्यापि लोकस्य धर्ता "प्रजापतिः प्रजानां प्रकाशवृष्ट्यादिना पालयिता “कविः प्राज्ञो देवः “पिशङ्गं “द्रापिं हिरण्मयं कवचं प्रति "मुञ्चते। आच्छादयति प्रत्युदयम् । “विचक्षणः विविधं द्रष्टा स एव देवः "प्रथयन् प्रख्यापयन् तेजः “आपृणन् आपूरयन् परितः "उरु प्रभूतं "सुम्नं सुखम् "उक्थ्यं स्तुत्यम् "अजीजनत् उत्पादयति ॥

आप्रा॒ रजाँ॑सि दि॒व्यानि॒ पार्थि॑वा॒ श्लोकँ॑ दे॒वः कृ॑णुते॒ स्वाय॒ धर्म॑णे ।

प्र बा॒हू अ॑स्राक्सवि॒ता सवी॑मनि निवे॒शय॑न्प्रसु॒वन्न॒क्तुभि॒र्जग॑त् ॥३

आ । अ॒प्राः॒ । रजाँ॑सि । दि॒व्यानि॑ । पार्थि॑वा । श्लोक॑म् । दे॒वः । कृ॒णु॒ते॒ । स्वाय॑ । धर्म॑णे ।

प्र । बा॒हू इति॑ । अ॒स्रा॒क् । स॒वि॒ता । सवी॑मनि । नि॒ऽवे॒शय॑न् । प्र॒ऽसु॒वन् । अ॒क्तुऽभिः॑ । जग॑त् ॥३

आ । अप्राः । रजांसि । दिव्यानि । पार्थिवा । श्लोकम् । देवः । कृणुते । स्वाय । धर्मणे ।

प्र । बाहू इति । अस्राक् । सविता । सवीमनि । निऽवेशयन् । प्रऽसुवन् । अक्तुऽभिः । जगत् ॥३

अयं "देवः सविता "दिव्यानि द्युसंबन्धीनि "पार्थिवा पार्थिवानि "रजांसि लोकान् । तिस्रः खलु द्यावः पृथिव्यश्च । ' तिस्रो भूमीर्धारयन् त्रीँरुत द्यून्' (ऋ. सं. २. २७. ८) इति हि श्रुतम् । “आप्राः । आपूरयति स्वाभिर्भाभिर्देवः । "स्वाय “धर्मणे स्वकीयाय धारणाय “श्लोकं प्रशस्तिं “कृणुते करोति । "सविता “सवीमनि प्रसवेऽनुज्ञायां निमित्तायां “बाहू स्वीयौ “प्र “अस्राक् प्रसृजति ।। प्रसारयतीत्यर्थः। किं कुर्वन् । “अक्तुभिः कान्तिभिः "जगत् "निवेशयन् स्वस्वकार्ये स्थापयन् “प्रसुवन् प्रेरयन् । अथवा अक्तुभिरिति रात्रिनाम । तदुपलक्षितैः सर्वैर्वासरैः सर्वेष्वपि दिनेष्वेवं करोतीत्यर्थः ॥

अदा॑भ्यो॒ भुव॑नानि प्र॒चाक॑शद्व्र॒तानि॑ दे॒वः स॑वि॒ताभि र॑क्षते ।

प्रास्रा॑ग्बा॒हू भुव॑नस्य प्र॒जाभ्यो॑ धृ॒तव्र॑तो म॒हो अज्म॑स्य राजति ॥४

अदा॑भ्यः । भुव॑नानि । प्र॒ऽचाक॑शत् । व्र॒तानि॑ । दे॒वः । स॒वि॒ता । अ॒भि । र॒क्ष॒ते॒ ।

प्र । अ॒स्रा॒क् । बा॒हू इति॑ । भुव॑नस्य । प्र॒ऽजाभ्यः॑ । धृ॒तऽव्र॑तः । म॒हः । अज्म॑स्य । रा॒ज॒ति॒ ॥४

अदाभ्यः । भुवनानि । प्रऽचाकशत् । व्रतानि । देवः । सविता । अभि । रक्षते ।

प्र । अस्राक् । बाहू इति । भुवनस्य । प्रऽजाभ्यः । धृतऽव्रतः । महः । अज्मस्य । राजति ॥४

“सविता “देवः “अदाभ्यः अन्यैरहिंसितः सन् “भुवनानि “प्रचाकशत् दीपयन् "व्रतानि कर्माणि प्राणिनाम् "अभि "रक्षते । "भुवनस्य लोकस्य "प्रजाभ्यः तत्रत्याभ्यः "बाहू स्वीयौ "प्रास्राक् प्रसारयति । स्वस्वकर्मणे अनुजानातीत्यर्थः । सर्वव्यापाराणां सूर्याधीनत्वात् । सविता वै प्रसवानामीशे' ( ऐ. ब्रा. १. १६ ) इति हि श्रुतिः । “धृतव्रतः धृतकर्मा स तथा कुर्वन् "महः महतः "अज्मस्य जगतः "राजति ईश्वरो भवति ॥

त्रिर॒न्तरि॑क्षं सवि॒ता म॑हित्व॒ना त्री रजाँ॑सि परि॒भुस्त्रीणि॑ रोच॒ना ।

ति॒स्रो दिव॑ः पृथि॒वीस्ति॒स्र इ॑न्वति त्रि॒भिर्व्र॒तैर॒भि नो॑ रक्षति॒ त्मना॑ ॥५

त्रिः । अ॒न्तरि॑क्षम् । स॒वि॒ता । म॒हि॒ऽत्व॒ना । त्री । रजाँ॑सि । प॒रि॒ऽभूः । त्रीणि॑ । रो॒च॒ना ।

ति॒स्रः । दिवः॑ । पृ॒थि॒वीः । ति॒स्रः । इ॒न्व॒ति॒ । त्रि॒ऽभिः । व्र॒तैः । अ॒भि । न॒ः । र॒क्ष॒ति॒ । त्मना॑ ॥५

त्रिः । अन्तरिक्षम् । सविता । महिऽत्वना । त्री । रजांसि । परिऽभूः । त्रीणि । रोचना ।

तिस्रः । दिवः । पृथिवीः । तिस्रः । इन्वति । त्रिऽभिः । व्रतैः । अभि । नः । रक्षति । त्मना ॥५

अयं "सविता "त्रिः त्रिभेदम् "अन्तरिक्षम् । अन्तरा क्षान्तं भवति जगदित्यन्तरिक्षम् । “परिभूः परिभविता सन् "महित्वना महित्वेन “इन्वति व्याप्नोति । वायुविद्युद्वरुणाख्यास्त्रयो लोका अन्तरिक्षभेदाः स वायुलोकं स वरुणलोकम्' ( कौ. उ. १. ३ ) इत्यादिश्रुतेः । "त्री "रजांसि रञ्जनात्मकानि त्रीणि क्षित्यन्तरिक्षद्युलक्षणान् त्रीन् लोकान् इन्वति । पूर्वमन्तरिक्षस्यैवावान्तरभेद उक्तः इह तु सामान्याकारेणेत्यपुनरुक्तिः। "त्रीणि "रोचना रोचनानि रोचमानान् अग्निवाय्वादिस्यान् उक्तस्थानत्रयस्वामित्वेन इन्वति । पूर्वमन्तरिक्षस्यैवावान्तरभेद उक्तः । अथ द्युपृथिव्योरवान्तरभेद उच्यते । “तिस्रो "दिवः इन्द्रप्रजापतिसत्याख्यान् त्रीन् लोकान् इन्वति । तथा “तिस्रः "पृथिवीः इन्वति । क्षित्यवान्तरभेदान् लोकान् इन्वति । एवं सर्वत्र व्याप्तो देवः "त्रिभिर्व्रतैः कर्मभिः उष्णवर्षहिमाख्यैः “नः अस्मान् “त्मना आत्मनैव स्वीयानुग्रहबुद्ध्यैव "अभि "रक्षति अभिरक्षतु । परिपालयतु ॥

बृ॒हत्सु॑म्नः प्रसवी॒ता नि॒वेश॑नो॒ जग॑तः स्था॒तुरु॒भय॑स्य॒ यो व॒शी ।

स नों देवः संविता शर्मं यच्छत्वस्मे क्षयांय त्रिवरूंथमंहंसः ॥६

बृहत्ऽसुंम्नः । प्रऽसविता । निऽवेशंनः । जगंतः । स्थातुः । उभयंस्य । यः । वशी ।

सः । नः । देवः । सविता । शर्मं । यच्छतु । अस्मे इतिं । क्षयांय । त्रिऽवरूंथम् । अंहंसः ॥६

बृहत्ऽसुम्नः । प्रऽसविता । निऽवेशनः । जगतः । स्थातुः । उभयस्य । यः । वशी ।

सः । नः । देवः । सविता । शर्म । यच्छतु । अस्मे इति । क्षयाय । त्रिऽवरूथम् । अंहसः ॥६

यः “बृहत्सुम्नः प्रभूतधनः प्रभूतसुखो वा "प्रसविता प्रकर्षेणानुज्ञाता कर्मणां "निवेशनः सर्वैर्गन्तव्यः । "जगतः जङ्गमस्य “स्थातुः स्थावरस्य “उभयस्य "यो "वशी "सः महान् "सविता "देवः "नः अस्मभ्यं "शर्म सुखं "यच्छतु । कीदृशं शर्म । "त्रिवरूथम् । त्रीणि वरूथानि गृहाणि स्थानानि क्षित्यादीनि यस्य तत्तादृशम् । "अस्मे अस्माकम् "अंहसः पापस्य "क्षयाय भवत्विति शेषः ॥

राजक्रये ' आगन्देवः' इत्येषानुवचनीया । सूत्रितं च - ' आगन्देव ऋतुभिर्वर्धतु क्षयमित्यर्धर्च आरमेत् ' ( आश्व. श्रौ. ४. ४ ) इति ॥

आगंन्देव ऋतुभिर्वर्धंतु क्षयं दधांतु नः सविता सुंप्रजामिषंम् ।

स नंः क्षपाभिरहंभिश्च जिन्वतु प्रजावंन्तं रयिमस्मे समिंन्वतु ॥७

आ । अगन् । देवः । ऋतुऽभिः । वर्धंतु । क्षयंम् । दधांतु । नः । सविता । सुऽप्रजाम् । इषंम् ।

सः । नः । क्षपाभिः । अहंऽभिः । च । जिन्वतु । प्रजाऽवंन्तम् । रयिम् । अस्मे इतिं । सम् । इन्वतु ॥७

आ । अगन् । देवः । ऋतुऽभिः । वर्धतु । क्षयम् । दधातु । नः । सविता । सुऽप्रजाम् । इषम् ।

सः । नः । क्षपाभिः । अहऽभिः । च । जिन्वतु । प्रजाऽवन्तम् । रयिम् । अस्मे इति । सम् । इन्वतु ॥७

“देवः "सविता “ऋतुभिः सह “आगन् आगच्छतु । गमेर्लङि रूपम् ॥ किंच "क्षयं गृहं “वर्धतु वर्धयतु । “नः अस्माकं "सुप्रजां शोभनपुत्राद्युपेतम् "इषम् अन्नं "दधातु ददातु । "सः एव “नः अस्मान् "क्षपाभिः रात्रिभिः "अहभिश्च । सर्वेषु दिनेष्वित्यर्थः । "जिन्वतु प्रीणयतु धनादिभिः। “अस्मे अस्मासु "प्रजावन्तं "रयिं "समिन्वतु व्याप्नोतु । प्रापयत्वित्यर्थः ॥ ॥ ४ ॥

**टिप्पणी**

सवित्र्युपरि पौराणिकसंदर्भाः (https://sites.google.com/site/vedastudy/sarita-sahaja)

# ऋग्वेदः सूक्तं ४.५४



दे. सविता।जगती, ६ त्रिष्टुप्

अभूद्देवः सविता वन्द्यो नु न इदानीमह्न उपवाच्यो नृभिः ।
वि यो रत्ना भजति मानवेभ्यः श्रेष्ठं नो अत्र द्रविणं यथा दधत् ॥१॥
देवेभ्यो हि प्रथमं यज्ञियेभ्योऽमृतत्वं सुवसि भागमुत्तमम् ।
आदिद्दामानं सवितर्व्यूर्णुषेऽनूचीना जीविता मानुषेभ्यः ॥२॥
अचित्ती यच्चकृमा दैव्ये जने दीनैर्दक्षैः प्रभूती पूरुषत्वता ।
देवेषु च सवितर्मानुषेषु च त्वं नो अत्र सुवतादनागसः ॥३॥
न प्रमिये सवितुर्दैव्यस्य तद्यथा विश्वं भुवनं धारयिष्यति ।
यत्पृथिव्या वरिमन्ना स्वङ्गुरिर्वर्ष्मन्दिवः सुवति सत्यमस्य तत् ॥४॥
इन्द्रज्येष्ठान्बृहद्भ्यः पर्वतेभ्यः क्षयाँ एभ्यः सुवसि पस्त्यावतः ।
यथायथा पतयन्तो वियेमिर एवैव तस्थुः सवितः सवाय ते ॥५॥

ये ते त्रिरहन्सवितः सवासो दिवेदिवे सौभगमासुवन्ति ।

इन्द्रो द्यावापृथिवी सिन्धुरद्भिरादित्यैर्नो अदितिः शर्म यंसत् ॥६॥

**सायणभाष्यम्**

‘ अभूद्देवः' इति षड़ृचं नवमं सूक्तं वामदेवस्यर्षं सावित्रम् । अन्त्या त्रिष्टुप् शिष्टास्त्रिष्टुबन्तपरिभाषया जगत्यः । तथा चानुक्रमणिका -- अभूद्देवः षट् त्रिष्टुबन्तम्' इति । अनिष्टोमे वैश्वदेवशस्त्रे सावित्रनिविद्धानमिदम् । तथा च सूत्रम् - ‘ अभूद्देव एकया च दशभिश्च स्वभूते' ( आश्व. श्रौ. ५. १८) इति । आद्या सावित्रग्रहस्यानुवाक्या । तथा च सूत्रं - सावित्रेण ग्रहेण चरन्त्यभूद्देवः सविता वन्द्यो नु नः ' ( आश्व. श्रौ. ५. १८) इति ॥

अभू॑द्दे॒वः स॑वि॒ता वन्द्यो॒ नु न॑ इ॒दानी॒मह्न॑ उप॒वाच्यो॒ नृभि॑ः ।

वि यो रत्ना॒ भज॑ति मान॒वेभ्य॒ः श्रेष्ठ॑ नो॒ अत्र॒ द्रवि॑णं॒ यथा॒ दध॑त् ॥१

अभू॑त् । दे॒वः । स॒वि॒ता । वन्द्यः॑ । नु । नः॒ । इ॒दानी॑म् । अह्नः॑ । उ॒प॒ऽवाच्यः॑ । नृऽभिः॑ ।

वि । यः । रत्ना॑ । भज॑ति । मा॒न॒वेभ्यः॑ । श्रेष्ठ॑म् । नः॒ । अत्र॑ । द्रवि॑णम् । यथा॑ । दध॑त् ॥१

अभूत् । देवः । सविता । वन्द्यः । नु । नः । इदानीम् । अह्नः । उपऽवाच्यः । नृऽभिः ।

वि । यः । रत्ना । भजति । मानवेभ्यः । श्रेष्ठम् । नः । अत्र । द्रविणम् । यथा । दधत् ॥१

सः "सविता "देवः "अभूत् प्रादुरासीत् । अतः “नु क्षिप्रमेव "नः अस्माकं "वन्द्यः वन्दनीयो भवति । "इदानीं यागकाले "अह्नः तृतीयसवने "नृभिः अस्मदीयैर्होतृभिः "उपवाच्यः स्तुत्यः भवति । “यः देवः "मानवेभ्यः मनोरपत्येभ्यो यजमानेभ्यस्तेषामर्थाय "रत्ना रमणीयानि धनानि "वि “भजति स देवः "श्रेष्ठं प्रशस्यं "द्रविणं गवादिलक्षणं धनं "नः अस्मभ्यम् "अत्र अस्मिन् कर्मणि "यथा “दधत् दद्यादित्यर्थः । तथा वन्द्य उपवाच्यश्चाभूदिति ॥

दे॒वेभ्यो॒ हि प्र॑थ॒मं य॒ज्ञिये॑भ्योऽमृत॒त्वं सु॒वसि॑ भा॒गमु॑त्त॒मम् ।

आदिद्दा॒मानं॑ सवित॒र्व्यू॑र्णुषेऽनूची॒ना जी॑वि॒ता मानु॑षेभ्यः ॥२

दे॒वेभ्यः॑ । हि । प्र॒थ॒मम् । य॒ज्ञियें॑भ्यः । अ॒मृ॒त॒ऽत्वम् । सु॒वसि॑ । भा॒गम् । उ॒त्ऽत॒मम् ।

आत् । इत् । दा॒मान॑म् । स॒वि॒त॒रिति॑ । वि । ऊ॒र्णु॒षे॒ । अ॒नू॒ची॒ना । जी॒वि॒ता । मानु॑षेभ्यः ॥२

देवेभ्यः । हि । प्रथमम् । यज्ञियेभ्यः । अमृतऽत्वम् । सुवसि । भागम् । उत्ऽतमम् ।

आत् । इत् । दामानम् । सवितः । वि । ऊर्णुषे । अनूचीना । जीविता । मानुषेभ्यः ॥२

"प्रथमं "देवेभ्यो "हि । हिशब्दः प्रसिद्धौ। देवेभ्यः "यज्ञियेभ्यः यज्ञार्हेभ्यः "अमृतत्वं तत्साधनम् "उत्तमम् उत्कृष्टतमं "भागं सोमादिलक्षणं "सुवसि अनुजानासि । "आदित् अनन्तरमेव "दामानं हविषां दातारं हे "सवितः "व्यूर्णुषे प्रकाशयसि । "मानुषेभ्यः यजमानेभ्यः "जीविता जीवितानि "अनूचीना अनुक्रमयुक्तानि । पितृपुत्रपौत्रा इत्यनुक्रमः । ईदृशानि जीवितानि पश्चात् व्यूर्णुषे ॥

अचि॑त्ती॒ यच्च॑कृ॒मा दैव्ये॒ जने॑ दी॒नैर्दक्षैः॒ प्रभू॑ती पूरुष॒त्वता॑ ।

दे॒वेषु॑ च सवित॒र्मानु॑षेषु च॒ त्वं नो॒ अत्र॑ सुवता॒दना॑गसः ॥३

अचि॑त्ती । यत् । च॒कृ॒म । दैव्ये॑ । जने॑ । दी॒नैः । दक्षैः॑ । प्रऽभू॑ती । पु॒रु॒ष॒त्वता॑ ।

दे॒वेषु॑ । च॒ । स॒वि॒त॒रिति॑ । मानु॑षेषु । च॒ । त्वम् । नः॒ । अत्र॑ । सु॒व॒ता॒त् । अना॑गसः ॥३

अचित्ती । यत् । चकृम । दैव्ये । जने । दीनैः । दक्षः । प्रऽभूती । पुरुषत्वता ।

देवेषु । च । सवितः । मानुषेषु । च । त्वम् । नः । अत्र । सुवतात् । अनागसः ॥३

हे "सवितः वयम् "अचित्ती अप्रज्ञया "दैव्ये "जने देवे त्वयि "दीनैः दुर्बलैः पुत्रादिभिर्ऋत्विग्भिर्वा तथा "दक्षैः प्रवृद्धैर्वा तैः "प्रभूती प्रभूत्या। ऐश्वर्यमदेनेति यावत् । "पुरुषत्वता पुरुषवत्तया च "यत् आगः "चकृम । न केवलं त्वय्येव कृतम् अपि तु "देवेषु अन्येषु "मानुषेषु च अज्ञानादिभिः यच्चकृम "नः कृतवतोऽस्मान् "त्वम् "अत्र अस्मिन् कर्मणि "अनागसः अपापान "सुवतात् अनुजानीहि ॥

देवसुवां हविःषु सवितुः सत्यप्रसवस्य ' न प्रमिये' इति याज्या । सूत्रितं च -- न प्रमिये सवितुर्दैव्यस्य तद्बृहस्पते प्रथमम् ' ( आश्व. श्रौ. ४. ११ ) इति ॥

न प्र॒मिये॑ सवि॒तुर्दैव्य॑स्य॒ तद्यथा॒ विश्वं॒ भुव॑नं धारयि॒ष्यति॑ ।

यत्पृ॑थि॒व्या वरि॑म॒न्ना स्व॑ङ्गु॒रिर्वर्ष्म॑न्दि॒वः सु॒वति॑ स॒त्यम॑स्य॒ तत् ॥४

न । प्र॒ऽमियें । स॒वि॒तुः । दैव्यं॑स्य । तत् । यथा॑ । विश्वं॑म् । भुवं॑नम् । धा॒र॒यि॒ष्यतिं ।

यत् । पृ॒थि॒व्याः । वरिं॑मन् । आ । सु॒ऽअ॒ङ्गु॒रिः । वर्ष्मं॑न् । दि॒वः । सु॒वतिं । स॒त्यम् । अ॒स्य॒ । तत् ॥४

न । प्रऽमिये । सवितुः । दैव्यस्य । तत् । यथा । विश्वम् । भुवनम् । धारयिष्यति ।

यत् । पृथिव्याः । वरिमन् । आ । सुऽअङ्गुरिः । वर्ष्मन् । दिवः । सुवति । सत्यम् । अस्य । तत् ॥४

"सवितुर्दैव्यस्य देवस्य “तत् कर्म "न “प्रमिये न प्रमीयेत न प्रहिंस्येत । हिंसार्हं न भवतीत्यर्थः ॥ कृत्यार्थे केन्प्रत्ययः ॥ यद्वा । दैव्यस्येति अधिकरणे षष्ठी । सा च कर्मार्था । दैव्यं कर्मेत्यर्थः । कथमहिंस्यमित्यत आह । "यथा "विश्वं “भुवनं “धारयिष्यति धारयति । विश्वधारणरूपं यत् कर्मास्ति तन्न प्रमिये । तथा 'स्वङ्गुरिः शोभनाङ्गुल्युपलक्षितहस्तः "यत् यः “पृथिव्या "वरिमन्ना । आकारश्चार्थे । भूम्या उरुत्वे च "सुवति प्रेरयति । तथा "दिवः द्युलोकस्य “वर्ष्मन् उरुत्वे च सुवति । "अस्य देवस्य “तत् उक्तं कर्म "सत्यम् अबाध्यमिति ॥

इन्द्रं॑ज्येष्ठान्बृ॒हद्भ्य॒ः पर्वं॑तेभ्य॒ः क्षयाँ॑ एभ्यः सुवसि प॒स्त्या॑वतः ।

यथा॑यथा प॒तयं॑न्तो वियेमि॒र ए॒वैव तं॑स्थुः सवितः स॒वायं॑ ते ॥५

इन्द्रं॑ऽज्येष्ठान् । बृ॒हत्ऽभ्यः॑ । पर्वं॑तेभ्यः । क्षया॑न् । ए॒भ्यः॒ । सु॒व॒सि॒ । प॒स्त्यं॑ऽवतः ।

यथा॑ऽयथा । प॒तयं॑न्तः । वि॒ऽये॒मि॒रे । ए॒व । ए॒व । त॒स्थुः॒ । स॒वि॒त॒रितिं । स॒वायं॑ । ते॒ ॥५

इन्द्रऽज्येष्ठान् । बृहत्ऽभ्यः । पर्वतेभ्यः । क्षयान् । एभ्यः । सुवसि । पस्त्यऽवतः ।

यथाऽयथा । पतयन्तः । विऽयेमिरे । एव । एव । तस्थुः । सवितरिति । सवाय । ते ॥५

हे "सवितः "इन्द्रज्येष्ठान् । इन्द्रः परमैश्वर्ययुक्तस्त्वमेवेन्द्रो वा ज्येष्ठो ज्यायान् पूज्यो येषां ते तादृशाः । तान् अस्मान् "बृहद्भ्यः महद्भ्यः "पर्वतेभ्यः अप्यधिकान् "सुवसि प्रेरयसि । किंच “एभ्यः यजमानेभ्यः "पस्त्यावतः गृहवतः "क्षयान् निवासान् ग्रामनगरादीन् सुवसि प्रेरयसि । "यथायथा "पतयन्तः गच्छन्तः त्वां “वियेमिरे विनियम्यन्ते त्वया । "ते तव "सवाय अनुज्ञायै "एवैव एवमेव नियमनमनतिक्रम्य "तस्थुः तिष्ठन्ति ।।

ये ते॒ त्रिरहं॒न्सवितः स॒वासों दि॒वेदिं॑वे॒ सौभं॑गमासु॒वन्तिं ।

इन्द्रो॒ द्यावा॑पृथि॒वी सिन्धुं॑र॒द्भिरा॑दि॒त्यैर्नो॒ अदिं॑ति॒ः शर्मं यंसत् ॥६

ये । ते॒ । त्रिः । अहं॑न् । स॒वि॒त॒रितिं । स॒वासः॑ । दि॒वेऽदिं॑वे । सौभं॑गम् । आ॒ऽसु॒वन्तिं ।

इन्द्रः᳚ । द्यावा॑पृथि॒वी इति॑ । सिन्धुः᳚ । अ॒त्ऽभिः । आ॒दि॒त्यैः । न॒ः । अदि॑तिः । शर्म॑ । य॒ंस॒त् ॥६

ये । ते । त्रिः । अहन् । सवितरिति । सवासः । दिवेऽदिवे । सौभगम् । आऽसुवन्ति ।

इन्द्रः । द्यावापृथिवी इति । सिन्धुः । अत्ऽभिः । आदित्यैः । नः । अदितिः । शर्म । यंसत् ॥६

"ये यजमाना हे "सवितः "ते त्वदर्थं "सवासः सवाः सोमाः। द्वितीयार्थे प्रथमा । सोमान् । यद्वा । सवासः सवनानि प्रातरादीनि प्रति "त्रिरहन् अभिषुण्वन्ति । न केवलमेकस्मिन्नेवाहनि सवनत्रयेषु अपि तु "दिवेदिवे प्रतिदिनं "सौभगं सौभाग्यजनकम् "आसुवन्ति अभिषुण्वन्ति । तेभ्यः "नः अस्मभ्यम् “इन्द्रः “शर्म "यंसत् यच्छतु । "द्यावापृथिवी द्यावापृथिव्यौ च "अद्भिः विशिष्टा "सिन्धुः सिन्ध्वभिमानिदेवता च "आदित्यैः सहिता "अदितिः च शर्म यंसत् । सावित्रे सूक्ते इन्द्रादीनां निपातमुक्त्वा तेषां प्रार्थना न विरुध्यते ॥ ॥ ५ ॥

# ऋग्वेदः सूक्तं ४.५५

ऋग्वेदः - मण्डल ४
← सूक्तं ४.५४ सूक्तं ४.५५ सूक्तं ४.५६ →
वामदेवो गौतमः

दे. विश्वे देवाः। त्रिष्टुप्, ८-१० गायत्री

को वस्त्राता वसवः को वरूता द्यावाभूमी अदिते त्रासीथां नः ।
सहीयसो वरुण मित्र मर्तात्को वोऽध्वरे वरिवो धाति देवाः ॥१॥
प्र ये धामानि पूर्व्याण्यर्चान्वि यदुच्छान्वियोतारो अमूराः ।
विधातारो वि ते दधुरजस्रा ऋतधीतयो रुरुचन्त दस्माः ॥२॥
प्र पस्त्यामदितिं सिन्धुमर्कैः स्वस्तिमीळे सख्याय देवीम् ।
उभे यथा नो अहनी निपात उषासानक्ता करतामदब्धे ॥३॥
व्यर्यमा वरुणश्चेति पन्थामिषस्पतिः सुवितं गातुमग्निः ।
इन्द्राविष्णू नृवदु षु स्तवाना शर्म नो यन्तममवद्वरूथम् ॥४॥
आ पर्वतस्य मरुतामवांसि देवस्य त्रातुरव्रि भगस्य ।
पात्पतिर्जन्यादंहसो नो मित्रो मित्रियादुत न उरुष्येत् ॥५॥

नू रोदसी अहिना बुध्न्येन स्तुवीत देवी अप्येभिरिष्टैः ।

समुद्रं न संचरणे सनिष्यवो घर्मस्वरसो नद्यो अप व्रन् ॥६॥

देवैर्नो देव्यदितिर्नि पातु देवस्त्राता त्रायतामप्रयुच्छन् ।

नहि मित्रस्य वरुणस्य धासिमर्हामसि प्रमियं सान्वग्नेः ॥७॥

अग्निरीशे वसव्यस्याग्निर्महः सौभगस्य ।

तान्यस्मभ्यं रासते ॥८॥

उषो मघोन्या वह सूनृते वार्या पुरु ।

अस्मभ्यं वाजिनीवति ॥९॥

तत्सु नः सविता भगो वरुणो मित्रो अर्यमा ।

इन्द्रो नो राधसा गमत् ॥१०॥

**सायणभाष्यम्**

‘ को वस्त्राता ' इति दशर्चं दशमं सूक्तं वामदेवस्यार्षं विश्वदेवदेवताकम् । अष्टम्याद्यास्तिस्रो गायत्र्यः शिष्टा अनादेशपरिभाषया त्रिष्टुभः । तथा चानुक्रम्यते -' को वो दश वैश्वदेवं त्रिगायत्र्यन्तं तु ' इति । विनियोगो लैङ्गिकः ॥

को व॑स्त्रा॒ता व॑सव॒ः को व॑रू॒ता द्यावा॑भूमी अदिते॒ त्रासी॑थां नः ।

सही॑यसो वरुण मित्र॒ मर्ता॒त्को वो॑ऽध्व॒रे वरि॑वो धाति देवाः ॥१

कः । व॒ः । त्रा॒ता । व॒स॒व॒ः । कः । व॒रू॒ता । द्यावा॑भूमी॒ इति॑ । अ॒दि॒ते॒ । त्रासी॑थाम् । न॒ः ।

सही॑यसः । व॒रु॒ण॒ । मि॒त्र॒ । मर्ता॑त् । कः । व॒ः । अ॒ध्व॒रे । वरि॑वः । धा॒ति॒ । दे॒वा॒ः ॥१

कः । वः । त्राता । वसवः । कः । वरूता । द्यावाभूमी इति । अदिते । त्रासीथाम् । नः ।

सहीयसः । वरुण । मित्र । मर्तात् । कः । वः । अध्वरे । वरिवः । धाति । देवाः ॥१

हे "वसवः सर्वस्य वासयितारो देवाः “वः युष्मान् "कः “त्राता अस्ति । यतो यूयं वसवोऽत इत्यभिप्रायः । "कः च "वरूता संभक्तास्ति । यद्वा । वो युष्माकं मध्ये कस्त्राता रक्षको देवः कश्च वरूता वारयिता दुःखानां वरणीयो वा भवति । हे "द्यावाभूमी “नः अस्मान् "त्रासीथां रक्षतम् । हे "अदिते अखण्डनीये । एतदपि द्यावाभूम्योर्विशेषणम् । संख्याव्यत्ययः । यदीदं पृथग्देवतामन्त्रणं स्यात् तर्हि निघातो न स्यात् ।' आमन्त्रितं पूर्वमविद्यमानवत्' इति पूर्वस्याविद्यमानवत्त्वेनास्यैव पादादित्वात् । ' अदिते मित्र वरुणोत मृळ ' (ऋ. सं. २. २७. १४ ) इति, ‘आदित्या रुद्रा वसवः सुदानवः' (ऋ. सं. १०. ६६. १२) इतिवत् । तस्यैव विशेषणत्वे समानाधिकरणे इति सामानाधिकरण्यात् ‘ अग्ने पावक रोचिषा' (ऋ. सं. ५. २६. १) इतिवत् अस्य निघातः सिध्यति । तस्मात् द्यावाभूमी इत्येतस्य विशेषणम् । हे "वरुण हे "मित्र युवां "सहीयसः "मर्तात् अभिभवितुः मनुष्यात् नस्त्रासीथाम् । हे "देवाः “वः युष्माकम् "अध्वरे यागे "कः "वरिवः धनं “धाति ददाति। यद्वा । वो युष्माकं मध्ये को वरिवो धाति धारयति ॥

प्र ये धामा॑नि पू॒र्व्याण्यर्चा॒न्वि यदु॒च्छान्वि॑यो॒तारो॒ अमू॑राः ।

वि॒धा॒तारो॒ वि ते द॑धु॒रज॑स्रा ऋ॒तधी॑तयो रुरुचन्त द॒स्माः ॥२

प्र । ये । धामा॑नि । पू॒र्व्याणि॑ । अर्चा॑न् । वि । यत् । उ॒च्छान् । वि॒ऽयो॒तारः॑ । अमू॑राः ।

वि॒ऽधा॒तारः॑ । वि । ते । द॒धुः॒ । अज॑स्राः । ऋ॒तऽधी॑तयः । रु॒रु॒च॒न्त॒ । द॒स्माः ॥२

प्र । ये । धामानि । पूर्व्याणि । अर्चान् । वि । यत् । उच्छान् । विऽयोतारः । अमूराः ।

विऽधातारः । वि । ते । दधुः । अजस्राः । ऋतऽधीतयः । रुरुचन्त । दस्माः ॥२

"ये देवाः "पूर्व्याणि पुरातनानि “धामानि स्थानानि वा “प्र “अर्चान् अर्चन्ति प्रयच्छन्ति स्तोतृभ्यः। "यत् ये च "वियोतारः दुःखानाम् अमिश्रयितारः “अमूराः अमूढाः "वि "उच्छान् उच्छन्ति तमो विवासयन्ति देवाः । ते "विधातारः फलानां कर्तारः "अजस्राः नित्याः "वि “दधुः कुर्वन्त्यभिमतम् । किंच “ऋतधीतयः सत्यकर्माणः "दस्माः दर्शनीयाः “ते “रुरुचन्त रोचन्ते ॥

प्र प॒स्त्या३॒॑मदि॑तिं॒ सिन्धु॑म॒र्कैः स्व॒स्तिमी॑ळे स॒ख्याय॑ दे॒वीम् ।

उ॒भे यथा॑ नो॒ अह॑नी नि॒पात॑ उ॒षासा॒नक्ता॑ करता॒मद॑ब्धे ॥३

प्र । प॒स्त्या॑म् । अदि॑तिम् । सिन्धु॑म् । अ॒र्कैः । स्व॒स्तिम् । ई॒ळे॒ । स॒ख्याय॑ । दे॒वीम् ।

उ॒भे इति॑ । यथा॑ । नः॒ । अह॑नी॒ इति॑ । नि॒ऽपातः॑ । उ॒षसा॒नक्ता॑ । क॒र॒ता॒म् । अद॑ब्धे॒ इति॑ ॥३

प्र । पस्त्याम् । अदितिम् । सिन्धुम् । अर्कैः । स्वस्तिम् । ईळे । सख्याय । देवीम् ।

उभे इति । यथा । नः । अहनी इति । निऽपातः । उषसानक्ता । करताम् । अदब्धे इति ॥३

"पस्त्यां सर्वैर्गन्तव्याम् अदितिम् अदीनां देवमातरं तां "देवीं “सिन्धुं स्यन्दनशीलां नद्यभिमानिदेवीं "स्वस्तिं सुखनिवासामेतन्नामिकां देवीं "सख्याय अनुकूल्याय “अर्कैः मन्त्रैः “ईळे स्तौमि। "उभे "अहनी द्यावापृथिव्यौ "यथा "नः अस्मान् "निपातः नितरां पातः तथा स्तौमि । "उषासानक्ता अहोरात्राभिमानिदेवते "अदब्धे अदम्भनीये "करतां कुरुताम् । अभिमतमिति शेषः ॥

व्य॑र्य॒मा वरु॑णश्चेति॒ पन्था॑मि॒षस्पति॑ः सुवि॒तं गा॒तुम॒ग्निः ।

इन्द्रा॑विष्णू नृ॒वदु॒ षु स्तवा॑ना॒ शर्म॑ नो यन्त॒मम॑व॒द्वरू॑थम् ॥४

वि । अ॒र्य॒मा । वरु॑णः । चे॒ति॒ । पन्था॑म् । इ॒षः । पति॑ः । सु॒वि॒तम् । गा॒तुम् । अ॒ग्निः ।

इन्द्रा॑विष्णू॒ इति॑ । नृ॒ऽवत् । उ॒ं इति॑ । सु । स्तवा॑ना । शर्म॑ । न॒ः । य॒न्त॒म् । अम॑ऽवत् । वरू॑थम् ॥४

वि । अर्यमा । वरुणः । चेति । पन्थाम् । इषः । पतिः । सुवितम् । गातुम् । अग्निः ।

इन्द्राविष्णू इति । नृऽवत् । ऊं इति । सु । स्तवाना । शर्म । नः । यन्तम् । अमऽवत् । वरूथम् ॥४

“अर्यमा देवः अस्माकं "पन्थां यज्ञादिमार्गं “वि “चेति ज्ञापयति । तथा “वरुणः वि चेति । “इषः अन्नस्य हविर्लक्षणस्य “पतिः पालकः “अग्निः "सुवितं सुखकरं "गातुं गमनं मार्गं वा स्वर्गादेः वि चेति । "इन्द्राविष्णू 'सु सुष्ठु "स्तवाना स्तूयमानौ "नृवत् मनुष्यवत् मनुष्योपेतं “वरूथं वरणीयम् "अमवत् बलोपेतं "शर्म गृहं सुखं वा "नः अस्माकं "यन्तं यच्छतम् । “उ पूरणः ॥

आ पर्व॑तस्य म॒रुता॒मवां॑सि दे॒वस्य॑ त्रा॒तुर॑व्रि भग॑स्य ।

पात्पति॒र्जन्या॒दंह॑सो नो मि॒त्रो मि॒त्रिया॑दु॒त न॑ उरुष्येत् ॥५

आ । पर्व॑तस्य । म॒रुता॑म् । अवां॑सि । दे॒वस्य॑ । त्रा॒तुः । अ॒व्रि॒ । भग॑स्य ।

पात् । पति॑ः । जन्या॑त् । अंह॑सः । न॒ः । मि॒त्रः । मि॒त्रिया॑त् । उ॒त । न॒ः । उ॒रु॒ष्ये॒त् ॥५

आ । पर्वतस्य । मरुताम् । अवांसि । देवस्य । त्रातुः । अव्रि । भगस्य ।

पात् । पतिः । जन्यात् । अंहसः । नः । मित्रः । मित्रियात् । उत । नः । उरुष्येत् ॥५

“पर्वतस्य इन्द्रसखस्य एतन्नामकस्य “देवस्य "मरुतां च “त्रातुः रक्षकस्य “भगस्य देवस्य च “अवांसि रक्षणानि “आ “अव्रि आवृणे । किंच "पतिः वरुणो देवः “जन्यात् जनसंबन्धात् "अंहसः पापात् "नः अस्मान् "पात् पातु रक्षतु । "उत अपि च "मित्रः च "मित्रियात्

मित्रभावेन "नः अस्मान् उरुष्येत् रक्षतु ॥ ॥ ६ ॥

नू रोदसी अहिंना बुध्न्येन स्तुवीत देवी अप्येभिरिष्टैः ।

समुद्रं न संचरणे सनिष्यवो घर्मस्वरसो नद्यो३ अप व्रन् ॥६

नु । रोदसी इति । अहिंना । बुध्न्येन । स्तुवीत । देवी इति । अप्येभिः । इष्टैः ।

समुद्रम् । न । सम्ऽचरणे । सनिष्यवः । घर्मऽस्वरसः । नद्यः । अप । व्रन् ॥६

नु । रोदसी इति । अहिना । बुध्न्येन । स्तुवीत । देवी इति । अप्येभिः । इष्टैः ।

समुद्रम् । न । सम्ऽचरणे । सनिष्यवः । घर्मऽस्वरसः । नद्यः । अप । व्रन् ॥६

हे "रोदसी द्यावापृथिव्यौ युवाम् "अहिना "बुध्न्येन अहिर्बुध्न्यनामकेन देवेन सह "नु क्षिप्रम् "अप्येभिः आपनीयैः "इष्टैः कामैर्निमित्तभूतैः "स्तुवीत स्तुवे । "सनिष्यवः धनानां संभक्तुमिच्छन्तः "संचरणे संचाराय समुद्रमध्यगमनाय "समुद्रं "न समुद्रमिव । तं यथा स्तुवन्ति तद्वत् । यस्मादेते देवाः "घर्मस्वरसः दीप्तध्वनयः "नद्यः नदीः "अप "व्रन् अपवृण्वन्तीति परोक्ष इव । अथवा ते देवा नदीरपवृण्वन्तु इत्याशीः । तस्मात् स्तुवे इति संबन्धः ॥

देवैर्नो देव्यदितिर्नि पातु देवस्त्राता त्रायतामप्रयुच्छन् ।

नहि मित्रस्य वरुणस्य धासिमर्हामसि प्रमियं सान्वग्नेः ॥७

देवैः । नः । देवी । अदितिः । नि । पातु । देवः । त्राता । त्रायताम् । अप्रऽयुच्छन् ।

नहि । मित्रस्य । वरुणस्य । धासिम् । अर्हामसि । प्रऽमियम् । सानु । अग्नेः ॥७

देवैः । नः । देवी । अदितिः । नि । पातु । देवः । त्राता । त्रायताम् । अप्रऽयुच्छन् ।

नहि । मित्रस्य । वरुणस्य । धासिम् । अर्हामसि । प्रऽमियम् । सानु । अग्नेः ॥७

"अदितिः "देवी अदीना देवमाता "देवैः अन्यैर्मित्रादिभिः सह "नः अस्मान् "नि "पातु पालयतु। तथा "त्राता पालकः "देवः । इन्द्रः इत्यर्थः । सोऽपि "अप्रयुच्छन् अप्रमाद्यन् "त्रायताम् । वयं च "मित्रस्य "वरुणस्य "अग्नेः च "सानु समुच्छ्रितं "धासिम् अन्नं सोमादिलक्षणं "प्रमियं हिंसितुं "नहि "अर्हामसि अर्हामः । समर्था भवामः । किंत्वनुष्ठानेन संवर्धितुम् अर्हाम इत्यर्थः ॥

अ॒ग्निरी॑शे वसु॒व्य॑स्या॒ग्निर्म॒हः सौभ॑गस्य ।

तान्य॒स्मभ्यं॑ रासते ॥८

अ॒ग्निः । ई॒शे॒ । व॒सु॒व्य॑स्य । अ॒ग्निः । म॒हः । सौभ॑गस्य ।

तानि॑ । अ॒स्मभ्य॑म् । रा॒स॒ते॒ ॥८

अग्निः । ईशे । वसव्यस्य । अग्निः । महः । सौभगस्य ।

तानि । अस्मभ्यम् । रासते ॥८

"अग्निः देवः "वसव्यस्य धनसमूहस्य “ईशे ईष्टे दातुम् । तथा “अग्निः “महः महतः "सौभगस्य सुभगत्वस्यापि ईशे । अतः "तानि धनानि सौभाग्यं च "अस्मभ्यं "रासते ददातु ॥

उषो॑ मघो॒न्या व॑ह॒ सूनृ॑ते॒ वार्या॑ पु॒रु ।

अ॒स्मभ्यं॑ वाजिनीवति ॥९

उषः॑ । म॒घो॒नि॒ । आ । व॒ह॒ । सूनृ॑ते । वार्या॑ । पु॒रु ।

अ॒स्मभ्य॑म् । वा॒जि॒नी॒ऽव॒ति॒ ॥९

उषः । मघोनि । आ । वह । सूनृते । वार्या । पुरु ।

अस्मभ्यम् । वाजिनीऽवति ॥९

हे "उषः हे "मघोनि धनवति हे "सूनृते प्रियसत्यरूपवागभिमानिनि हे "वाजिनीवति अन्नवति देवि “अस्मभ्यं "वार्या वरणीयानि “पुरु बहूनि धनानि “आ “वह प्रापय ॥

तत्सु न॑ः सवि॒ता भगो॒ वरु॑णो मि॒त्रो अ॑र्य॒मा ।

इन्द्रो॑ नो॒ राध॒सा ग॑मत् ॥१०

तत् । सु । न॒ः । स॒वि॒ता । भगः॑ । वरु॑णः । मि॒त्रः । अ॒र्य॒मा ।

इन्द्रः॑ । नः॒ । राध॑सा । आ । ग॒म॒त् ॥१०

तत् । सु । नः । सविता । भगः । वरुणः । मित्रः । अर्यमा ।

इन्द्रः । नः । राधसा । आ । गमत् ॥१०

येन "राधसा धनेन सह "सविता "भगो "वरुणो "मित्रोऽर्यमा "इन्द्रः प्रत्येकम् “आ “गमत् आगच्छति यज्ञम् । "तत् राधो धनं ते देवाः "नः अस्मभ्यं "सु सुष्ठु प्रयच्छन्त्विति शेषः ॥ ॥ ७ ॥

# ऋग्वेदः सूक्तं ४.५६



दे. द्यावापृथिवी। त्रिष्टुप्, ५-७ गायत्री

महो द्यावापृथिवी इह ज्येष्ठे रुचा भवतां शुचयद्भिरर्कैः ।

यत्सीं वरिष्ठे बृहती विमिन्वन्नुवद्धोक्षा पप्रथानेभिरेवैः ॥१॥

देवी देवेभिर्यजते यजत्रैरमिनती तस्थतुरुक्षमाणे ।

ऋतावरी अद्रुहा देवपुत्रे यज्ञस्य नेत्री शुचयद्भिरर्कैः ॥२॥

स इत्स्वपा भुवनेष्वास य इमे द्यावापृथिवी जजान ।

उर्वी गभीरे रजसी सुमेके अवंशे धीरः शच्या समैरत् ॥३॥

नू रोदसी बृहद्भिर्नो वरूथैः पत्नीवद्भिरिषयन्ती सजोषाः ।

उरूची विश्वे यजते नि पातं धिया स्याम रथ्यः सदासाः ॥४॥

प्र वां महि द्यवी अभ्युपस्तुतिं भरामहे ।

शुची उप प्रशस्तये ॥५॥

पुनाने तन्वा मिथः स्वेन दक्षेण राजथः ।

ऊह्याथे सनादृतम् ॥६॥

मही मित्रस्य साधथस्तरन्ती पिप्रती ऋतम् ।

परि यज्ञं नि षेदथुः ॥७॥

**सायणभाष्यम्**

‘मही द्यावापृथिवी ' इति सप्तर्चमेकादशं सूक्तं वामदेवस्यार्षं द्यावापृथिव्यम् । पूर्वत्र ‘ त्रिगायत्र्यन्तं तु ' इत्युक्तत्वात् पञ्चम्याद्यास्तिस्रो गायत्र्यः शिष्टास्त्रिष्टुभः ।' मही सप्त द्यावापृथिवीयम् ' इत्यनुक्रमणिका । व्यूढे दशरात्रे पञ्चमेऽहनि वैश्वदेवशस्त्रे आदितश्चतुर्ऋचं द्यावापृथिव्यनिविद्धानीयम् । तथा च सूत्रितं - मही द्यावापृथिवी इति चतस्र ऋभुर्विभ्वा' ( आश्व. श्रौ. ८. ८) इति ॥

म॒ही द्यावा॑पृथि॒वी इ॒ह ज्येष्ठे॑ रु॒चा भ॑वतां शु॒चय॑द्भिर॒र्कैः ।

यत्सी॒ं वरि॑ष्ठे बृह॒ती वि॑मि॒न्वन्रु॒वद्धो॒क्षा प॑प्रथा॒नेभि॒रेवैः॑ ॥१

म॒ही इति॑ । द्यावा॑पृथि॒वी इति॑ । इ॒ह । ज्येष्ठे॒ इति॑ । रु॒चा । भ॒व॒ता॒म् । शु॒चय॑त्ऽभिः । अ॒र्कैः ।

यत् । सी॒म् । वरि॑ष्ठे॒ इति॑ । बृ॒ह॒ती इति॑ । वि॒ऽमि॒न्वन् । रु॒वत् । ह॒ । उ॒क्षा । प॒प्र॒था॒नेभिः॑ । एवैः॑ ॥१

मही इति । द्यावापृथिवी इति । इह । ज्येष्ठे इति । रुचा । भवताम् । शुचयत्ऽभिः । अर्कैः ।

यत् । सीम् । वरिष्ठे इति । बृहती इति । विऽमिन्वन् । रुवत् । ह । उक्षा । पप्रथानेभिः । एवैः ॥१

“इह यज्ञे "मही महत्यौ "ज्येष्ठे प्रशस्ये "द्यावापृथिवी द्यावापृथिव्यौ "रुचाः दीप्त्या युक्ते “शुचयद्भिः दीपयद्भिः "अर्कैः मन्त्रैः सोमादिहविर्भिर्वा युक्ते "भवताम् । "यत् यस्मात् "सीं सर्वतः “वरिष्ठे उरुतरे “बृहती महत्यौ द्यावापृथिव्यौ "विमिन्वन् परिच्छिन्दन् स्थापयन् "उक्षा सेक्ता पर्जन्यः “पप्रथानेभिः प्रथमानैः "एवैः गमनशीलैर्मरुद्भिर्मेघैर्वा सह "रुवत् रौति शब्दं करोति । "ह इति पूरणः । तस्माद्रुचा भवतामिति संबन्धः ॥

दे॒वी दे॒वेभि॑र्यज॒ते यज॑त्रै॒रमि॑नती तस्थतुरु॒क्षमा॑णे ।

ऋ॒ताव॑री अ॒द्रुहा॑ दे॒वपु॑त्रे य॒ज्ञस्य॑ ने॒त्री शु॒चय॑द्भिर॒र्कैः ॥२

दे॒वी इति॑ । दे॒वेभिः॑ । य॒ज॒ते इति॑ । यज॑त्रैः । अमि॑नती॒ इति॑ । त॒स्थ॒तुः॒ । उ॒क्षमा॑णे॒ इति॑ ।

ऋ॒तव॑री॒ इत्यृ॒तऽव॑री । अ॒द्रुहा॑ । दे॒वपु॑त्रे॒ इति॑ दे॒वऽपु॑त्रे । य॒ज्ञस्य॑ । ने॒त्री इति॑ । शु॒चय॑त्ऽभिः । अ॒र्कैः ॥२

देवी इति । देवेभिः । यजते इति । यजत्रैः । अमिनती इति । तस्थतुः । उक्षमाणे इति ।

ऋतवरी इत्यृतऽवरी । अद्रुहा । देवपुत्रे इति देवऽपुत्रे । यज्ञस्य । नेत्री इति । शुचयत्ऽभिः । अर्कैः ॥२

“देवी देव्यौ "यजते यष्टव्ये "अमिनती प्रजा अहिंसत्यौ “उक्षमाणे सिञ्चत्यौ “ऋतावरी ऋतवत्यौ "अद्रुहा अद्रोग्ध्र्यौ द्रोहमकुर्वत्यौ “देवपुत्रे देवोत्पादिक्यौ "यज्ञस्य “नेत्री निर्वाहयित्र्यौ द्यावापृथिव्यौ "देवेभिः देवैः "यजत्रैः यष्टव्यैः सहिते "शुचयद्भिः शोचयद्भिः “अर्कैः मन्त्रैः हविर्भिर्वा युक्ते “तस्थतुः तिष्ठतः स्यातामित्यर्थः ॥

स इत्स्वपा॒ भुव॑नेष्वास॒ य इ॒मे द्यावा॑पृथि॒वी ज॒जान॑ ।

उ॒र्वी ग॑भी॒रे रज॑सी सु॒मेके॑ अव॒ंशे धीर॒ः शच्या॒ समैर॑त् ॥३

सः । इत् । सु॒ऽअपाः॑ । भुव॑नेषु । आ॒स॒ । यः । इ॒मे इति॑ । द्यावा॑पृथि॒वी इति॑ । ज॒जान॑ ।

उ॒र्वी इति॑ । ग॒भी॒रे इति॑ । रज॑सी॒ इति॑ । सु॒मेके॒ इति॑ सु॒ऽमेके॑ । अ॒व॒ंशे । धीरः॑ । शच्या॑ । सम् । ऐ॒र॒त् ॥३

सः । इत् । सुऽअपाः । भुवनेषु । आस । यः । इमे इति । द्यावापृथिवी इति । जजान ।

उर्वी इति । गभीरे इति । रजसी इति । सुमेके इति सुऽमेके । अवंशे । धीरः । शच्या । सम् । ऐरत् ॥३

“स “इत् स एव "स्वपाः शोभनकर्मा सन् “भुवनेषु "आस आस्ते । “य “इमे "द्यावापृथिवी द्यावापृथिव्यौ "जजान उत्पादितवान् । यश्च प्रजापतिः “उर्वी उर्व्यौ विस्तीर्णे “गभीरे अविचले "सुमेके शोभनरूपे "अवंशे उत्पत्तिरहिते अनाधारे वान्तरिक्षे “धीरः धीमान् "शच्या कुशलकर्मणा “समैरत् सम्यक् प्रेरितवान् । स एव स्वपा इति ॥

नू रोद॑सी बृ॒हद्भि॑र्नो॒ वरू॑थै॒ः पत्नी॑वद्भिरि॒षय॑न्ती स॒जोषा॑ः ।

उ॒रू॒ची विश्वे॑ यज॒ते नि पा॑तं धि॒या स्या॑म र॒थ्य॑ः सदा॒साः ॥४

नु । रो॒द॒सी॒ इति॑ । बृ॒हत्ऽभिः॑ । नः॒ । वरू॑थैः । पत्नी॑वत्ऽभिः । इ॒षय॑न्ती॒ इति॑ । स॒ऽजोषाः॑ ।

उ॒रू॒ची इति॑ । विश्वे॒ इति॑ । य॒ज॒ते इति॑ । नि । पा॒त॒म् । धि॒या । स्या॒म॒ । र॒थ्यः॑ । स॒दा॒ऽसाः ॥४

नु । रोदसी इति । बृहत्ऽभिः । नः । वरूथैः । पत्नीवत्ऽभिः । इषयन्ती इति । सऽजोषाः ।

उरूची इति । विश्वे इति । यजते इति । नि । पातम् । धिया । स्याम । रथ्यः । सदाऽसाः ॥४

हे "रोदसी द्यावापृथिव्यौ “नु क्षिप्रं "पत्नीवद्भिः पत्नीसहितैः "बृहद्भिः महद्भिः "वरूथैः गृहैर्धनैर्वा सह “इषयन्ती अस्माकमन्नमिच्छन्त्यौ “सजोषाः परस्परं संगते “उरूची उर्वञ्चने "विश्वे व्याप्ते "यजते यष्टव्ये सत्यौ "नः अस्मान् "नि "पातं नितरां रक्षतम् । धियेत्यादि गतम् ॥

‘ प्र वाम् ' इत्यादिगायत्रस्तृचो व्यूढे दशरात्रे वैश्वदेवशस्त्रे द्यावापृथिव्यनिविद्धानीयत्वेन प्रक्षेप्यः । तथा च सूत्रितं - ‘ प्र वां महि द्यवी इति तृचौ ' ( आश्व. श्रौ. ८. ११ ) इति ॥

प्र वा॒ं महि॒ द्यवीं अ॒भ्युप॑स्तुतिं भरामहे ।

शुची॒ उप॒ प्रश॑स्तये ॥५

प्र । वा॒म् । महिं । द्यवी॒ इतिं । अ॒भि । उप॑ऽस्तुतिम् । भ॒रा॒म॒हे॒ ।

शुची॒ इतिं । उप॑ । प्रऽश॑स्तये ॥५

प्र । वाम् । महि । द्यवी इति । अभि । उपऽस्तुतिम् । भरामहे ।

शुची इति । उप । प्रऽशस्तये ॥५

हे द्यावापृथिव्यौ “द्यवी द्योतमाने "वां युवाभ्याम् "उपस्तुतिं स्तोत्रं "महि महत् प्रभूतम् "अभि “प्र “भरामहे प्रकर्षेण संपादयामः । "शुची शुद्धे युवां "प्रशस्तये प्रशंसितुम् "उप । उपसर्गश्रुतेरुचितक्रियाध्याहारः । उप गच्छाम इति शेषः ॥

पु॒ना॒ने त॒न्वा॑ मि॒थः स्वेन॒ दक्षें॑ण राजथः ।

ऊ॒ह्याथें स॒नादृ॒तम् ॥६

पु॒ना॒ने इतिं । त॒न्वा॑ । मि॒थः । स्वेनं । दक्षें॑ण । रा॒ज॒थ॒ः ।

ऊ॒ह्याथे॒ इतिं । स॒नात् । ऋ॒तम् ॥६

पुनाने इति । तन्वा । मिथः । स्वेन । दक्षेण । राजथः ।

ऊह्याथे इति । सनात् । ऋतम् ॥६

हे देव्यौ "तन्वा स्वकीयया मूर्त्या "स्वेन "दक्षेण बलेन च "मिथः प्रत्येकं "पुनाने शोधयन्त्यौ यज्ञं यजमानं वा युवां "राजथः । यद्वा । तन्वा स्वस्वशरीरैकदेशेन मिथः परस्परं पुनाने शोधयन्त्यौ । द्यौः स्वीयेनासारेण भुवं सा च स्वकीयेन काष्ण्र्येन चन्द्रमसि स्थितेन दिवम् इति विवेकः । “सनात् सदाकालम् "ऋतं यज्ञम् "ऊह्याथे वहथः ॥

म॒ही मि॒त्रस्यं साधथ॒स्तरंन्ती॒ पिप्रंती ऋ॒तम् ।

परिं य॒ज्ञं नि षेंदथुः ॥७

म॒ही इतिं । मि॒त्रस्यं । सा॒ध॒थ॒ः । तरंन्ती॒ इतिं । पिप्रंती॒ इतिं । ऋ॒तम् ।

परिं । य॒ज्ञम् । नि । से॒द॒थु॒ः ॥७

मही इति । मित्रस्य । साधथः । तरन्ती इति । पिप्रती इति । ऋतम् ।

परि । यज्ञम् । नि । सेदथुः ॥७

“मही महत्यौ द्यावापृथिव्यौ "मित्रस्य मित्रभूतस्य स्तोतुरभिमतं "साधथः । “ऋतम् अन्नं “तरन्ती तारयन्त्यौ "पिप्रती पूरयन्त्यौ "यज्ञं "परि परितः "नि "षेदथुः आश्रयथः ॥ ॥ ८ ॥

# ऋग्वेदः सूक्तं ४.५७



दे. १-३ क्षेत्रपतिः, ४ शुनः, ५, ८ शुनासीरौ, ६-७ सीता। अनुष्टुप्, ५ पुर उष्णिक्, २,३,८ त्रिष्टुप्

क्षेत्रस्य पतिना वयं हितेनेव जयामसि ।

गामश्वं पोषयित्न्वा स नो मृळातीदृशे ॥१॥

क्षेत्रस्य पते मधुमन्तमूर्मिं धेनुरिव पयो अस्मासु धुक्ष्व ।

मधुश्चुतं घृतमिव सुपूतमृतस्य नः पतयो मृळयन्तु ॥२॥

मधुमतीरोषधीर्द्याव आपो मधुमन्नो भवत्वन्तरिक्षम् ।

क्षेत्रस्य पतिर्मधुमान्नो अस्त्वरिष्यन्तो अन्वेनं चरेम ॥३॥

शुनं वाहाः शुनं नरः शुनं कृषतु लाङ्गलम् ।

शुनं वरत्रा बध्यन्तां शुनमष्ट्रामुदिङ्गय ॥४॥

शुनासीराविमां वाचं जुषेथां यद्दिवि चक्रथुः पयः ।

तेनेमामुप सिञ्चतम् ॥५॥

अर्वाची सुभगे भव सीते वन्दामहे त्वा ।

यथा नः सुभगाससि यथा नः सुफलाससि ॥६॥

इन्द्रः सीतां नि गृह्णातु तां पूषानु यच्छतु ।

सा नः पयस्वती दुहामुत्तरामुत्तरां समाम् ॥७॥

शुनं नः फाला वि कृषन्तु भूमिं शुनं कीनाशा अभि यन्तु वाहैः ।

शुनं पर्जन्यो मधुना पयोभिः शुनासीरा शुनमस्मासु धत्तम् ॥८॥

**सायणभाष्यम्**

‘ क्षेत्रस्य पतिना' इत्यष्टर्चं द्वादशं सूक्तं वामदेवस्यार्षम् । आद्याचतुर्थषष्ठीसप्तम्योऽनुष्टुभः पञ्चमी पुरउष्णिक् । ' आद्यश्चेत्पुरउष्णिक्' इति हि तल्लक्षणम् । शिष्टास्तिस्रस्त्रिष्टुभः । आद्यास्तिस्रः क्षेत्रपतिदेवताकाश्चतुर्थी शुनाख्यदेवताका पञ्चम्यष्टम्यौ शुनासीरदेवताके षष्ठीसप्तम्यौ सीतादेवताके । तथा चानुक्रमणिका - क्षेत्रस्याष्टौ तिस्रः क्षैत्रपत्याः शुनायैका परा पुरउष्णिक् सान्त्या च शुनासीराभ्यामुपान्त्ये सीतायै ते' अनुष्टुभावाद्या च चतुर्थी च ' इति ॥ क्षेत्रस्य कर्षणेऽनेन सूक्तेन प्रत्यृचं जुहुयाज्जपेद्वा । तथा च सूत्रितं - क्षेत्रस्य पतिना वयमिति प्रत्यृचं जुहुयाज्जपेद्वा ' (आश्व. गृ. २. १०. ४ ) इति ॥ अप्तोर्यामे होतुरतिरिक्तोक्थ्य आश्विनशस्त्रादूर्ध्वं चत्वार्यतिरिक्तोक्थ्यानि । तत्राद्या परिधानीया । सूत्रितं च - ‘ क्षेत्रस्य पतिना वयमिति परिधानीया ' ( आश्व. श्रौ. ९. ११ ) इति ॥

क्षेत्र॑स्य॒ पति॑ना व॒यं हि॒तेने॑व जयामसि ।

गामश्वं॑ पोषयि॒त्न्वा स नो॑ मृळाती॒दृशे॑ ॥१

क्षेत्र॑स्य । पति॑ना । व॒यम् । हि॒तेन॑ऽइव । ज॒या॒म॒सि॒ ।

गाम् । अश्व॑म् । पो॒ष॒यि॒त्नु । आ । सः । न॒ः । मृ॒ळा॒ति॒ । ई॒दृशे॑ ॥१

क्षेत्रस्य । पतिना । वयम् । हितेनऽइव । जयामसि ।

गाम् । अश्वम् । पोषयित्नु । आ । सः । नः । मृळाति । ईदृशे ॥१

“वयं यजमानाः “क्षेत्रस्य “पतिना देवेन ॥ रुद्रं क्षेत्रपतिं प्राहुः केचिदग्निमथापरे । स्वतन्त्र एव वा कश्चित्क्षेत्रस्य पतिरुच्यते ॥ “हितेनेव । इव शब्द एवार्थे । सर्वप्राणिहितेनैव तेन । अथवा मित्रेणेव । यथा सख्युः साहाय्ये सन् स्वकार्यं साधयति तद्वत् ।

“जयामसि । जयामः क्षेत्रम् । स देवः “गामश्वं च “पोषयित्नु पोषयितृ गवाश्वलक्षणं धनम् "आ हरत्विति शेषः । उपसर्गश्रुतेर्योग्यक्रियाध्याहारः । “सः एव देवः “नः अस्मान् “ईदृशे उक्तलक्षणे धने दातव्ये सति “मृळाति सुखयति । क्षेत्रस्य पतिना' ( निरु. १०. १५ ) इत्यादिनिरुक्तं जानीयात् ॥

अप्तोर्यामे मैत्रावरुणस्यातिरिक्तोक्थ्ये परिधानीया । सूत्रितं च - क्षेत्रस्य पते मधुमन्तमूर्मिमिति परिधानीया ' ( आश्व. श्रौ. ९. ११ ) इति ॥

क्षेत्र॑स्य पत॒े मधु॑मन्तमू॒र्मिं धे॒नुरि॑व॒ पयो॑ अ॒स्मासु॑ धुक्ष्व ।

म॒धु॒श्चुतं॑ घृ॒तमि॑व॒ सुपू॑तमृ॒तस्य॑ न॒ः पत॑यो मृळयन्तु ॥२

क्षेत्र॑स्य । प॒ते॒ । मधु॑ऽमन्तम् । ऊ॒र्मिम् । धे॒नुःऽइ॑व । पयः॑ । अ॒स्मासु॑ । धु॒क्ष्व॒ ।

म॒धु॒ऽश्चुत॑म् । घृ॒तम्ऽइ॑व । सुऽपू॑तम् । ऋ॒तस्य॑ । न॒ः । पत॑यः । मृ॒ळ॒य॒न्तु॒ ॥२

क्षेत्रस्य । पते । मधुऽमन्तम् । ऊर्मिम् । धेनुःऽइव । पयः । अस्मासु । धुक्ष्व ।

मधुऽश्चुतम् । घृतम्ऽइव । सुऽपूतम् । ऋतस्य । नः । पतयः । मृळयन्तु ॥२

हे “क्षेत्रस्य “पते त्वं “मधुमन्तं माधुर्योपेतम् “ऊर्मिं प्रवृद्धम् उदकं “धेनुः “पयः “इव सा यया दुग्धे तथा “अस्मासु “धुक्ष्व । 'मधुश्चुतं मधुस्रावि "सुपूतं “घृतमिव इत्युपमा । तादृशमुदकमित्यर्थः । “ऋतस्य यज्ञस्योदकस्य वा “पतयः स्वामिनः “नः अस्मान् “मृळयन्तु सुखयन्तु । यद्वा । ऋतस्य एतत् कर्मणि षष्ठी । ऋतं मृळयन्तु प्रयच्छन्तु । मृळतिरत्र दानकर्मा ॥

ब्राह्मणाच्छंसिनोऽतिरिक्तोक्थ्ये परिधानीयैषा । ‘ मधुमतीरोषधीर्द्याव आप इति परिधानीया (आश्व. श्रौ. ९. ११ ) इति सूत्रितत्वात् ॥

मधु॑मती॒रोष॑धी॒र्द्याव॒ आपो॒ मधु॑मन्नो भवत्व॒न्तरि॑क्षम् ।

क्षेत्र॑स्य॒ पति॒र्मधु॑मान्नो अ॒स्त्वरि॑ष्यन्तो॒ अन्वे॑नं चरेम ॥३

मधु॑ऽमतीः । ओष॑धीः । द्यावः॑ । आपः॑ । मधु॑ऽमत् । न॒ः । भ॒व॒तु॒ । अ॒न्तरि॑क्षम् ।

क्षेत्र॑स्य । पतिः॑ । मधु॑ऽमान् । न॒ः । अ॒स्तु॒ । अरि॑ष्यन्तः॑ । अनु॑ । ए॒न॒म् । च॒रे॒म॒ ॥३

मधुऽमतीः । ओषधीः । द्यावः । आपः । मधुऽमत् । नः । भवतु । अन्तरिक्षम् ।

क्षेत्रस्य । पतिः । मधुऽमान् । नः । अस्तु । अरिष्यन्तः । अनु । एनम् । चरेम ॥३

“ओषधीः ओषध्यो व्रीहिप्रियङ्वादयः “नः अस्मभ्यं “मधुमतीः मधुमत्यः भवन्तु । तथा “द्यावः । तिस्रो दिव इत्युक्तत्वात् बहुवचनं युक्तम् । तथा “आपः "अन्तरिक्षं च नः "मधुमत् “भवतु । किंच “क्षेत्रस्य “पतिः अपि "मधुमान्नो “अस्तु । “अरिष्यन्तः अन्यैरहिंस्यन्तो वयम् “एनं क्षेत्रपतिम् “अनु अनुसृत्य "चरेम संचरेम सुखेन ॥

शु॒नं वा॒हाः शु॒नं नरः॑ शु॒नं कृ॑षतु॒ लाङ्ग॑लम् ।

शु॒नं व॑र॒त्रा ब॑ध्यन्तां शु॒नमष्ट्रा॒मुदि॑ङ्गय ॥४

शु॒नम् । वा॒हाः । शु॒नम् । नरः॑ । शु॒नम् । कृ॒ष॒तु॒ । लाङ्ग॑लम् ।

शु॒नम् । व॒र॒त्राः । ब॒ध्य॒न्ता॒म् । शु॒नम् । अष्ट्रा॑म् । उत् । इ॒ङ्ग॒य॒ ॥४

शुनम् । वाहाः । शुनम् । नरः । शुनम् । कृषतु । लाङ्गलम् ।

शुनम् । वरत्राः । बध्यन्ताम् । शुनम् । अष्ट्राम् । उत् । इङ्गय ॥४

“वाहाः बलीवर्दाः “शुनम् । सुखनामैतत् । सुखं यथा भवति तथा वहन्त्विति शेषः । तथा “नरः नेतारो मनुष्याः कर्षकाः “शुनं कुर्वन्तु । तथा “लाङ्गलम् अपि “शुनं "कृषतु । “वरत्राः वरणेन त्रायमाणाः प्रग्रहाः “शुनं “बध्यन्ताम् । “अष्ट्रां प्रतोदं "शुनम् “उदिङ्गय प्रेरय । शुनाख्यो वाय्विन्द्रयोरन्यतमः सुखकृद्देवः । तदनुग्रहादेतत्सर्वं भवत्विति तस्य श्रुतिसामान्येन स्तुतिः ॥

शुनासीरीये पर्वणि शुनासीरदेवताकस्य हविषोऽनुवाक्यैषा अन्त्या ॠक् याज्या । सूत्रितं च -- ' शुनासीराविमां वाचं जुषेथां शुनं नः फालाः ' ( आश्व. श्रौ. २. २० ) इति ॥

शुना॑सीरावि॒मां वाचं॑ जुषेथां॒ यद्दि॒वि च॒क्रथुः॑ पयः॑ ।

तेने॒मामुप॑ सिञ्चतम् ॥५

शुना॑सीरौ । इ॒माम् । वाच॑म् । जु॒षे॒था॒म् । यत् । दि॒वि । च॒क्रथुः॑ । पयः॑ ।

तेन॑ । इ॒माम् । उप॑ । सि॒ञ्च॒त॒म् ॥५

शुनासीरौ । इमाम् । वाचम् । जुषेथाम् । यत् । दिवि । चक्रथुः । पयः ।

तेन । इमाम् । उप । सिञ्चतम् ॥५

‘ द्युदेवः शुनदेवता ' इति शौनकः । अतः शुन इन्द्रः सीरो वायुः । ‘ शुनो वायुः शु एत्यन्तरिक्षे सीर आदित्यः सरणात् ' (निरु. ९. ४० ) इति यास्कः । हे शुनासीरौ तौ युवाम् “इमां वक्ष्यमाणां मदीयां “वाचं “जुषेथाम् । “यत् “पयः “दिवि “चक्रथुः “तेनेमां भूमिम् “उ “सिञ्चतम् ॥

अ॒र्वाची॑ सुभगे भव॒ सीते॒ वन्दा॑महे त्वा ।

यथा॑ नः सु॒भगास॑सि॒ यथा॑ नः सु॒फलास॑सि ॥६

अ॒र्वाची॑ । सु॒ऽभ॒गे॒ । भ॒व॒ । सीते॑ । वन्दा॑महे । त्वा॒ ।

यथा॑ । न॒ः । सु॒ऽभगा॑ । अस॑सि । यथा॑ । न॒ः । सु॒ऽफला॑ । अस॑सि ॥६

अर्वाची । सुऽभगे । भव । सीते । वन्दामहे । त्वा ।

यथा । नः । सुऽभगा । अससि । यथा । नः । सुऽफला । अससि ॥६

हे "सुभगे “सीते त्वम् “अर्वाची अर्वागञ्चना “भव । “त्वा त्वां “वन्दामहे स्तुवीमहि । "यथा “नः “सुभगाससि शोभनधना भवसि । “यथा “नः “सुफलाससि तथा वन्दामहे ॥

इन्द्र॒ः सीतां॒ नि गृ॑ह्णातु॒ तां पू॒षानु॑ यच्छतु ।

सा न॒ः पय॑स्वती दुहा॒मुत्त॑रामुत्तरां॒ समा॑म् ॥७

इन्द्रः॑ । सीता॑म् । नि । गृ॒ह्णा॒तु॒ । ताम् । पू॒षा । अनु॑ । य॒च्छ॒तु॒ ।

सा । न॒ः । पय॑स्वती । दु॒हा॒म् । उत्त॑राम्ऽउत्तराम् । समा॑म् ॥७

इन्द्रः । सीताम् । नि । गृह्णातु । ताम् । पूषा । अनु । यच्छतु ।

सा । नः । पयस्वती । दुहाम् । उत्तराम्ऽउत्तराम् । समाम् ॥७

“इन्द्रः देवः “सीतां सीताधारकाष्ठं “नि “गृह्णातु । “तां सीतां “पूषा देवः “अनु यच्छतु नियमयतु । “सा द्यौः “पयस्वती उदकवती" “दुहां दुह्यात् । कदेति तदुच्यते। "उत्तरामुत्तरां “समाम् उत्तरमुत्तरं संवत्सरम् ॥

अस्या अष्टम्या विनियोगः शुनासीराविमाम् ' इत्यत्रोक्तः ॥

शु॒नं न॒ः फाला॒ वि कृ॑षन्तु॒ भूमिं॑ शु॒नं की॒नाशा॑ अ॒भि य॑न्तु वा॒हैः ।

शु॒नं प॒र्जन्यो॒ मधु॑ना॒ पयो॑भि॒ः शुना॑सीरा शु॒नम॒स्मासु॑ धत्तम् ॥८

शु॒नम् । न॒ः । फाला॑ः । वि । कृ॒ष॒न्तु॒ । भूमि॑म् । शु॒नम् । की॒नाशा॑ः । अ॒भि । य॒न्तु॒ । वा॒हैः ।

शु॒नम् । प॒र्जन्य॑ः । मधु॑ना । पय॑ःऽभिः । शुना॑सीरा । शु॒नम् । अ॒स्मासु॑ । ध॒त्त॒म् ॥८

शुनम् । नः । फालाः । वि । कृषन्तु । भूमिम् । शुनम् । कीनाशाः । अभि । यन्तु । वाहैः ।

शुनम् । पर्जन्यः । मधुना । पयःऽभिः । शुनासीरा । शुनम् । अस्मासु । धत्तम् ॥८

"नः “भूमिं “फालाः भूमिविदारककाष्ठाः "शुनं “वि “कृषन्तु । “शुनं यथा भवति तथा "कीनाशाः बलीवर्दरक्षकाः "वाहैः बलीवर्दैः "अभि "यन्तु अभिगच्छन्तु । “शुनं यथा भवति तथा “पर्जन्यो "मधुना मधुरैः “पयोभिः उदकैः सिञ्चतु । हे “शुनासीरा इन्द्रवायू वाय्वादित्यौ वा “शुनं सुखम् “अस्मासु “धत्तं धारयतम् ॥ ॥ ९ ॥

**टिप्पणी**

क्षेत्रपति/वास्तु उपरि टिप्पणी (http://puranastudy.byethost14.com/pur_index26/vaastu.htm)

# ऋग्वेदः सूक्तं ४.५८



दे. अग्निः, सूर्यो वाऽऽपो वा गावो वा घृतस्तुतिर्वा। त्रिष्टुप्, ११ जगती

समुद्रादूर्मिर्मधुमाँ उदारदुपांशुना सममृतत्वमानट् ।

घृतस्य नाम गुह्यं यदस्ति जिह्वा देवानाममृतस्य नाभिः ॥१॥

वयं नाम प्र ब्रवामा घृतस्यास्मिन्यज्ञे धारयामा नमोभिः ।

उप ब्रह्मा शृणवच्छस्यमानं चतुःशृङ्गोऽवमीद्गौर एतत् ॥२॥

चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य ।

त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ आ विवेश ॥३॥

त्रिधा हितं पणिभिर्गुह्यमानं गवि देवासो घृतमन्वविन्दन् ।

इन्द्र एकं सूर्य एकं जजान वेनादेकं स्वधया निष्टतक्षुः ॥४॥

एता अर्षन्ति हृद्यात्समुद्राच्छतव्रजा रिपुणा नावचक्षे ।

घृतस्य धारा अभि चाकशीमि हिरण्ययो वेतसो मध्य आसाम् ॥५॥

सम्यक्स्रवन्ति सरितो न धेना अन्तर्हृदा मनसा पूयमानाः ।

एते अर्षन्त्यूर्मयो घृतस्य मृगा इव क्षिपणोरीषमाणाः ॥६॥

सिन्धोरिव प्राध्वने शूघनासो वातप्रमियः पतयन्ति यह्वाः ।

घृतस्य धारा अरुषो न वाजी काष्ठा भिन्दन्नूर्मिभिः पिन्वमानः ॥७॥

अभि प्रवन्त समनेव योषाः कल्याण्यः स्मयमानासो अग्निम् ।

घृतस्य धाराः समिधो नसन्त ता जुषाणो हर्यति जातवेदाः ॥८॥

कन्या इव वहतुमेतवा उ अञ्ज्यञ्जाना अभि चाकशीमि ।

यत्र सोमः सूयते यत्र यज्ञो घृतस्य धारा अभि तत्पवन्ते ॥९॥

अभ्यर्षत सुष्टुतिं गव्यमाजिमस्मासु भद्रा द्रविणानि धत्त ।

इमं यज्ञं नयत देवता नो घृतस्य धारा मधुमत्पवन्ते ॥१०॥

धामन्ते विश्वं भुवनमधि श्रितमन्तः समुद्रे हृद्यन्तरायुषि ।

अपामनीके समिथे य आभृतस्तमश्याम मधुमन्तं त ऊर्मिम् ॥११॥

**सायणभाष्यम्**

‘ समुद्रादूर्मिः ' इत्येकादशर्चं त्रयोदशं सूक्तम् । अन्त्या जगती शिष्टास्त्रिष्टुभः । अग्निसूर्याब्गोघृतानामन्यतमो देवता । वामदेव ऋषिः । अत्रानुक्रमणिका -- समुद्रादूर्मिरेकादशाग्नेयं जगत्यन्तं सौर्यं वापं वा गव्यं वा घृतस्तुतिर्वा ' इति । विषुवतीदं सूक्तमाज्यम् । तथा च सूत्रं -- ‘ समुद्रादूर्मिरित्याज्यं त्यं सुमेषम् ' ( आश्व. श्रौ. ८. ६ (https://sa.wikisource.org/s/1auk) ) इति । व्यूढे दशरात्रे सप्तमेऽहनीदमेव सूक्तमाज्यम् । सूत्रितं च -' अथ छन्दोमाः समुद्रादूर्मिरित्याज्यम् ' ( आश्व. श्रौ. ८. ९ (https://sa.wikisource.org/s/1aun) ) इति ॥

स॒मु॒द्रादू॒र्मिर्मधु॑माँ॒ उदा॑र॒दुपां॒शुना॒ सम॑मृ॒त॒त्वमा॑नट् ।

घृ॒तस्य॒ नाम॒ गुह्यं॒ यदस्ति॑ जि॒ह्वा दे॒वाना॑म॒मृत॑स्य॒ नाभि॑ः ॥१

स॒मु॒द्रात् । ऊ॒र्मिः । मधु॑ऽमान् । उत् । आ॒र॒त् । उप॑ । अं॒शुना॑ । सम् । अ॒मृ॒त॒ऽत्वम् । आ॒न॒ट् ।

घृ॒तस्य॑ । नाम॑ । गुह्य॑म् । यत् । अस्ति॑ । जि॒ह्वा । दे॒वाना॑म् । अ॒मृत॑स्य । नाभिः॑ ॥१

समुद्रात् । ऊर्मिः । मधुऽमान् । उत् । आरत् । उप । अंशुना । सम् । अमृतऽत्वम् । आनट् ।

घृतस्य । नाम । गुह्यम् । यत् । अस्ति । जिह्वा । देवानाम् । अमृतस्य । नाभिः ॥१

संमोदन्तेऽस्मिन्यजमाना इति वा समुद्रोऽग्निः पार्थिवः अथवा समुद्द्रवन्त्यापोऽस्मादिति व्युत्पत्त्या वैद्युतोऽग्निः । तस्मात् “ऊर्मिः ऊर्मिवदुपर्युपरि उद्भूतः “मधुमान् माधुर्योपेतफलसमूहः "उदारत् उद्गच्छति । अथवा वैद्युतात् ऊर्म्यूत्पादकः रस उदारत् उद्भूतः । अथवा समुद्रात् समुद्द्रवणसाधनात् आदित्यादूर्मी रस उदकलक्षण उदारत् । ‘ आदित्याज्जायते वृष्टिः' इति श्रुतेः । यद्वा । समुद्रादुक्तव्युत्पत्तेः अन्तरिक्षादूर्मिरुदकमुदारत् । अथवा समुद्रादुक्तलक्षणात् गवामूधसः सकाशात् ऊर्मिरुज्वलः क्षीररसः । एतत् घृतपक्षेऽपि समानम् । यद्यपि घृतं क्षीराज्जायते तथापि तस्योधस उत्पत्तेरेवमुपचर्यते । शिष्टं वाक्यमग्न्यादिपञ्चसु पक्षेष्वपि समानम् । “अंशुना दीप्त्यांशेन वा “अमृतत्वं मोक्षम् “उप “सम् “आनट् । उपेति पूरणः । प्राप्नोति नरः । “घृतस्य दीप्तस्य क्षीरद्रव्यरूपस्य वा "गुह्यं “नाम गोपनीयं नमनसाधनं “यदस्ति तद्ब्रवीमि । तत् "देवानां “जिह्वा आस्वादकजिह्वास्थानीयं भवति । तदेव “अमृतस्य “नाभिः बन्धकं भवति । तदुभयं घृतस्य नामेत्यर्थः । एवं सर्वमन्त्रेषु तत्तत्पक्षानुसारेण योज्यम् ॥

व॒यं नाम॒ प्र ब्र॑वामा घृ॒तस्या॒स्मिन्य॒ज्ञे धा॑रयामा॒ नमो॑भिः ।

उप॑ ब्र॒ह्मा शृ॑णवच्छ॒स्यमा॑नं॒ चतु॑ःशृङ्गोऽवमीद्गौ॒र ए॒तत् ॥२

व॒यम् । नाम॑ । प्र । ब्र॒वा॒म॒ । घृ॒तस्य॑ । अ॒स्मिन् । य॒ज्ञे । धा॒र॒या॒म॒ । नमः॑ऽभिः ।

उप॑ । ब्र॒ह्मा । शृ॒ण॒व॒त् । श॒स्यमा॑नम् । चतुः॑ऽशृङ्गः । अ॒व॒मी॒त् । गौ॒रः । ए॒तत् ॥२

वयम् । नाम । प्र । ब्रवाम । घृतस्य । अस्मिन् । यज्ञे । धारयाम । नमःऽभिः ।

उप । ब्रह्मा । शृणवत् । शस्यमानम् । चतुःऽशृङ्गः । अवमीत् । गौरः । एतत् ॥२

"वयं यजमानाः “घृतस्य “नाम “प्र “ब्रवाम स्तुमः । अस्मिन्यज्ञे “नमोभिः नमस्कारैः हविर्भिर्वा “धारयाम च । “ब्रह्मा परिवृढो देवः “शस्यमानं स्तूयमानमिदम् “उप “शृणवत् शृणुयात् । “चतुःशृङ्गः । चत्वारि शृङ्गाणि वेदचतुष्टयरूपाणि यस्य सः । आदित्याग्निपक्षे एवम् । इतरेष्वपि यास्कोक्तव्युत्पत्त्या शृङ्गशब्दो व्याख्येयः । “गौरः अरुणवर्णः तादृशो देवः “एतत् कर्म जगद्वा “अवमीत् उद्गिरति निर्वहतीत्यर्थः ।।

च॒त्वारि॒ शृङ्गा॒ त्रयो॑ अस्य॒ पादा॒ द्वे शी॒र्षे स॒प्त हस्ता॑सो अस्य ।

त्रिधा॑ ब॒द्धो वृ॑ष॒भो रो॑रवीति म॒हो दे॒वो मर्त्याँ॒ आ वि॑वेश ॥३

च॒त्वारि॑ । शृङ्गा॑ । त्रयः॑ । अ॒स्य॒ । पादाः॑ । द्वे इति॑ । शी॒र्षे इति॑ । स॒प्त । हस्ता॑सः । अ॒स्य॒ ।

त्रिधा॑ । ब॒द्धः । वृ॒ष॒भः । रो॒र॒वी॒ति॒ । म॒हः । दे॒वः । मर्त्या॑न् । आ । वि॒वे॒श॒ ॥३

चत्वारि । शृङ्गा । त्रयः । अस्य । पादाः । द्वे इति । शीर्षे इति । सप्त । हस्तासः । अस्य ।

त्रिधा । बद्धः । वृषभः । रोरवीति । महः । देवः । मर्त्यान् । आ । विवेश ॥३

यद्यपि सूक्तस्याग्निसूर्यादिपञ्चदेवताकत्वात् पञ्चधायं मन्त्रो व्याख्येयस्तथापि निरुक्ताद्युक्तनीत्या यज्ञात्मकाग्नेः सूर्यस्य च प्रकाशकत्वेन तत्परतया व्याख्यायते । अस्य यज्ञात्मकस्याग्नेः "चत्वारि "शृङ्गा चत्वारो वेदाः शृङ्गस्थानीयाः । यद्यप्यापस्तम्बेन यज्ञं व्याख्यास्यामः स त्रिभिर्वेदैर्विधीयते (परिभा. १. ३ ) इत्युक्तं तथाप्याथर्वणस्य इतरानपेक्षयैव एकाग्निसाध्यानां कृत्स्नकर्मणामभिधायक त्वात्तदपेक्षया चत्वारि शृङ्गेत्युक्तम् । "त्रयो "अस्य "पादाः सवनानि त्रीण्यस्य पादाः । प्रवृत्तिसाधनत्वात् पादा इत्युच्यन्ते । "द्वे "शीर्षे ब्रह्मौदनं प्रवर्ग्यश्च । इष्टिसोमप्राधान्येनेदमुक्तम् । "सप्त "हस्तासः सप्त छन्दांसि । हस्ता: अनुष्ठानस्य मुख्यसाधनम् । छन्दांस्यपि देवताप्रीणनस्य मुख्यसाधनमिति हस्तव्यवहारः। "त्रिधा "बद्धः मन्त्रब्राह्मणकल्पैः त्रिप्रकारं बद्धः । बन्धनमस्य तन्निष्पाद्यत्वम् । "वृषभः फलानां वर्षिता "रोरवीति । भृशं शब्दायते । ऋग्यजुःसामोक्थैः शस्त्रयागस्तुतिरूपैर्होत्राद्युत्पादितैर्ध्वनिभिरसौ रौति । एवं "महो "देवः "मर्त्यान् "आ "विवेश । मर्त्यैर्यजमानैर्निष्पाद्यत्वात् प्रवेश उपचर्यते । अत्र यास्कः -- ' चत्वारिशृङ्गेति वेदा वा एत उक्ताः । ( निरु. १३.७ ) इत्यादिना निरवोचत् । तदत्रानुसंधेयम् ॥ अथ ' सूर्यपक्षे व्याख्यायते-- अस्यादित्यस्य चत्वारि शृङ्गाणि चतस्रो दिशः । एताः श्रयणार्थत्वात् शृङ्गाणीत्युपचर्यन्ते । त्रयो अस्य पादाः । त्रयो वेदाः पादस्थानीया भवन्ति गमनसाधनत्वात् । तथा हि - ऋग्भिः पूर्वाह्णे दिवि देव ईयते ' इत्युपक्रम्य • वेदैरशून्यस्त्रिभिरेति सूर्यः ' (तै. ब्रा. ३. १२. ९. १ ) इति हि वेदत्रयेण गतिराम्नाता । द्वे शीर्षे । अहश्च रात्रिश्चेति द्वे शिरसी । सप्त हस्तासो अस्य । सप्त रश्मयः षड्विलक्षणा ऋतव एकः साधारण इति वा सप्त हस्ता भवन्ति । त्रिधा बद्धस्त्रिषु स्थानेषु क्षित्यादिषु अग्न्याद्यात्मकत्वेन संबद्धः । ग्रीष्मवर्षाहेमन्ताख्यैस्त्रिभिस्त्रेधा बद्धो वा । वृषभो वर्षिता रोरवीति । शब्दं करोति वृष्ट्यादिद्वारा । स महो महान् देवो मर्त्यानां विवेश तन्नियन्तृतया। सूर्य आत्मा जगतस्तस्थुषश्च' ( ऋ. सं. १. ११५. १ ) इति हि श्रुतम् ॥ एवं त्वबादिपक्षेऽपि योज्यम् । शाब्दिकास्तु शब्दब्रह्मपरतया चत्वारि शृङ्गेति चत्वारि पदजातानि नामाख्याते चोपसर्गनिपाताश्च इत्यादिना व्याचक्षते । अपरे त्वपरथा । तत्सर्वमत्र द्रष्टव्यम् ॥

त्रिधा॑ हि॒तं प॒णिभि॑र्गु॒ह्यमा॑नं॒ गवि॑ दे॒वासो॑ घृ॒तमन्व॑विन्दन् ।

इन्द्र॒ एकं॒ सूर्य॒ एकं॑ जजान वे॒नादेकं॑ स्व॒धया॒ निष्ट॑तक्षुः ॥४

त्रिधा॑ । हि॒तम् । प॒णिऽभिः॑ । गु॒ह्यमा॑नम् । गवि॑ । दे॒वासः॑ । घृ॒तम् । अनु॑ । अ॒वि॒न्द॒न् ।

इन्द्रः॑ । एक॑म् । सूर्यः॑ । एक॑म् । ज॒जा॒न॒ । वे॒नात् । एक॑म् । स्व॒धया॑ । निः । त॒त॒क्षुः॒ ॥४

त्रिधा । हितम् । पणिऽभिः । गुह्यमानम् । गवि । देवासः । घृतम् । अनु । अविन्दन् ।

इन्द्रः । एकम् । सूर्यः । एकम् । जजान । वेनात् । एकम् । स्वधया । निः । ततक्षुः ॥४

“पणिभिः असुरैः “गवि गोषु “त्रिधा क्षीरदध्याज्यभेदेन त्रिप्रकारं “हितं निहितं “गुह्यमानं गोपितं “घृतं दीप्तं रसरूपं वा द्रव्यं “देवासः देवाः “अन्वविन्दन् अलभन्त । तत्र “इन्द्र “एकं क्षीरं “जजान उदपादयत् । “सूर्य “एकं जजान । "वेनात् कान्तिमतः अग्नेर्गमनवतो वायोर्वा “एकं घृतं “स्वधया अन्नेन निमित्तेन द्रव्येण वा साधनेन “निष्टतक्षुः निरपादयन् देवाः ।।

ए॒ता अ॑र्षन्ति॒ हृद्या॑त्समु॒द्राच्छ॒तव्र॑जा रि॒पुणा॒ नाव॒चक्षे॑ ।

घृ॒तस्य॒ धारा॑ अ॒भि चा॑कशीमि हिर॒ण्ययो॑ वेत॒सो मध्य॑ आसाम् ॥५

ए॒ताः । अ॒र्ष॒न्ति॒ । हृद्या॑त् । स॒मु॒द्रात् । श॒तऽव्र॑जाः । रि॒पुणा॑ । न । अ॒व॒ऽचक्षे॑ ।

घृ॒तस्य॑ । धाराः॑ । अ॒भि । चा॒क॒शी॒मि॒ । हि॒र॒ण्ययः॑ । वे॒त॒सः । मध्ये॑ । आ॒सा॒म् ॥५

एताः । अर्षन्ति । हृद्यात् । समुद्रात् । शतऽव्रजाः । रिपुणा । न । अवऽचक्षे ।

घृतस्य । धाराः । अभि । चाकशीमि । हिरण्ययः । वेतसः । मध्ये । आसाम् ॥५

“एताः आपो घृतधारा वा “अर्षन्ति अधः पतन्ति। “शतव्रजाः अपरिमितगतयः सत्यः “हृद्यात् हृदयङ्गमात् “समुद्रात् अन्तरिक्षात् रिपुणा जलमोकप्रतिबन्धकारिणा शत्रुणा वृत्रेण “नावचक्षे न अवदर्शनाय यथादृष्टं भवति तथा अर्षन्ति । ताः “घृतस्य “धारा “अभि “चाकशीमि अभिपश्यामि । कुत्रेति तदुच्यते “हिरण्ययः हिरण्मयः "वेतसः अप्संभवोऽग्निर्वैद्युतः “आसाम् अपां “मध्ये वर्तत इति शेषः । अत्र घृतस्य धारा अभि चाकशीमीत्यनेन चरमपादेन होमाधारोऽग्निर्वैद्युतोऽग्निरादित्यो वोक्तः ॥ ॥१०॥

स॒म्यक्स्र॑वन्ति स॒रितो॒ न धेना॑ अ॒न्तर्हृ॒दा मन॑सा पू॒यमा॑नाः ।

ए॒ते अ॑र्षन्त्यू॒र्मयो॑ घृ॒तस्य॑ मृ॒गा इ॑व क्षिप॒णोरीष॑माणाः ॥६

स॒म्यक् । स्र॒व॒न्ति॒ । स॒रितः॑ । न । धेनाः॑ । अ॒न्तः । हृ॒दा । मन॑सा । पू॒यमा॑नाः ।

ए॒ते । अ॒र्ष॒न्ति॒ । ऊ॒र्मयः॑ । घृ॒तस्य॑ । मृ॒गाःऽइ॑व । क्षि॒प॒णोः । ईष॑माणाः ॥६

सम्यक् । स्रवन्ति । सरितः । न । धेनाः । अन्तः । हृदा । मनसा । पूयमानाः ।

एते । अर्षन्ति । ऊर्मयः । घृतस्य । मृगाःऽइव । क्षिपणोः । ईषमाणाः ॥६

अस्याग्नेरुपरि “सम्यक् “स्रवन्ति क्षरन्ति । घृतस्य धाराः। किमिव । “सरितो "न “धेनाः प्रीणयित्र्यो नद्य इव । “अन्तर्हृदा “मनसा हृदयमध्यगतेन चित्तेन । भावनासचिवेनेति यावत् । तेन “पूयमानाः शुद्धीकृताः । तदेवोच्यते । “एते “घृतस्य “ऊर्मयः रसाः “अर्षन्ति गच्छन्ति । जुह्वाः सकाशादग्नेरुपरि पतन्ति । किमिव । “क्षिपणोः क्षेपकात् व्याधात् । “ईषमाणाः पलायमानाः “मृगाइव । ते यथा कक्षं प्रविशन्ति तद्वत् । अनेन शैघ्र्यमुक्तं भवति ॥

सिन्धो॑रिव प्राध्व॒ने शू॑घ॒नासो॒ वात॑प्रमियः पतयन्ति य॒ह्वाः ।

घृ॒तस्य॒ धारा॑ अरु॒षो न वा॒जी काष्ठा॑ भि॒न्दन्नू॒र्मिभि॒ः पिन्व॑मानः ॥७

सिन्धोः॑ऽइव । प्र॒ऽअ॒ध्व॒ने । शू॒घ॒नासः॑ । वात॑ऽप्रमियः । प॒त॒य॒न्ति॒ । य॒ह्वाः ।

घृ॒तस्य॑ । धाराः॑ । अ॒रु॒षः । न । वा॒जी । काष्ठाः॑ । भि॒न्दन् । ऊ॒र्मिभिः॑ । पिन्व॑मानः ॥७

सिन्धोःऽइव । प्रऽअध्वने । शूघनासः । वातऽप्रमियः । पतयन्ति । यह्वाः ।

घृतस्य । धाराः । अरुषः । न । वाजी । काष्ठाः । भिन्दन् । ऊर्मिभिः । पिन्वमानः ॥७

“सिन्धोः स्यन्दमानाया नद्याः सकाशात् “इव उदकानीव “प्राध्वने प्रवणवति देशे “शूघनासः आशुगन्त्र्यः । ‘ आशु इति च शु इति च क्षिप्रनामनी भवतः ' ( निरु. ६. १ ) इति निरुक्तम् । “वातप्रमियः वायुवत् प्रकृष्टवेगाः "यह्वाः महत्यः “घृतस्य “धाराः “पतयन्ति गच्छन्त्यग्नेरुपरि । घृतमुदकमिति पक्षे सिन्धोरिवेत्यत्र इवशब्दोऽनर्थकः । स्यन्दनसाधनादन्तरिक्षादुक्तलक्षणा घृतधारा उदकधाराः पतयन्ति गच्छन्ति भूमौ । किंच घृतसंस्त्यायः "काष्ठाः मर्यादाभूतान् परिधीन् “भिन्दन् “ऊर्मिभिः रसैः “पिन्वमानः वर्धमानो भवति । उदकमिति पक्षे काष्ठाः क्रान्त्वा स्थिता दिशो भिन्दन्नूर्मिभिः तरङ्गैः पिन्वमानो भवति । तत्र दृष्टान्तः । “अरुषो “न “वाजी आरोचमानो गर्वेण गमनशीलोऽश्व इव । स यथा भिन्दन् पिन्वमानश्च भवति तद्वत् ॥

अ॒भि प्र॑वन्त॒ सम॑नेव॒ योषा॑ः कल्या॒ण्य१॒ः स्मय॑मानासो अ॒ग्निम् ।

घृ॒तस्य॒ धारा॑ः स॒मिधो॑ नसन्त॒ ता जु॑षा॒णो ह॑र्यति जा॒तवे॑दाः ॥८

अ॒भि । प्र॒व॒न्त॒ । सम॑नाऽइव । योषाः॑ । क॒ल्या॒ण्यः॑ । स्मय॑मानासः । अ॒ग्निम् ।

घृ॒तस्य॑ । धाराः॑ । स॒म्ऽइधः॑ । न॒स॒न्त॒ । ताः । जु॒षा॒णः । ह॒र्य॒ति॒ । जा॒तऽवे॑दाः ॥८

अभि । प्रवन्त । समनाऽइव । योषाः । कल्याण्यः । स्मयमानासः । अग्निम् ।

घृतस्य । धाराः । सम्ऽइधः । नसन्त । ताः । जुषाणः । हर्यति । जातऽवेदाः ॥८

“घृतस्य धाराः अमुम् "अग्निं "समनेव समानमनस्काः “योषाः योषितः पतिमिव “अभि ”प्रवन्त अभिनमयन्ति । निमग्नं कुर्वन्ति । कीदृश्यस्ताः । "कल्याण्यः भद्ररूपाः 'स्मयमानासः हसन्त्यः । किंच ताः “समिधः सम्यग्दीपयित्र्यः सत्यः "नसन्त व्याप्नुवन्ति । “ताः एव धाराः "जुषाणः प्रीयमाणः सेवमानो वा अयं “जातवेदाः "हर्यति कामयते । घृतशब्दस्योदकमिति पक्षेऽग्निजातवेदःशब्दाभ्यां वैद्युतोऽग्निरादित्यो वा गृह्यते । तं देवमुदकधारा अभि प्रवन्त नसन्त च । स ताश्च हर्यति ॥

क॒न्या॑ इव वह॒तुमेत॒वा उं अ॒ञ्ज्य॑ञ्जा॒ना अ॒भि चा॑कशीमि ।

यत्र॒ सोम॑ः सू॒यते॒ यत्र॑ य॒ज्ञो घृ॒तस्य॒ धारा॑ अ॒भि तत्प॑वन्ते ॥९

क॒न्याः॑ऽइव । व॒ह॒तुम् । एत॒वै । ऊं॒ इति॑ । अ॒ञ्जि । अ॒ञ्जा॒नाः । अ॒भि । चा॒क॒शी॒मि॒ ।

यत्र॑ । सोमः॑ । सू॒यते॑ । यत्र॑ । य॒ज्ञः । घृ॒तस्य॑ । धाराः॑ । अ॒भि । तत् । प॒व॒न्ते॒ ॥९

कन्याःऽइव । वहतुम् । एतवै । ऊं इति । अञ्जि । अञ्जानाः । अभि । चाकशीमि ।

यत्र । सोमः । सूयते । यत्र । यज्ञः । घृतस्य । धाराः । अभि । तत् । पवन्ते ॥९

"कन्याइव अनूढा बालिका इव । ता यथा “वहतुम् उद्वाहं प्राप्तुम् “एतवा “उ एतुं पतिं गन्तुम् “अञ्जि अञ्जकमाभरणं तेजो वा “अञ्जानाः व्यञ्जयन्त्यः । एवं कुर्वत्यः कन्याइव स्वभर्तृभूतमाध्वरं वैद्यतं वाग्निमादित्यं वा वहतुम् एतुम् अञ्जि व्यञ्जकं तदीयं रूपमञ्जाना व्यञ्जयन्तीः “घृतस्य “धाराः "अभि “चाकशीमि अभिपश्यामि । घृतेनोदकेन च भौमस्य वैद्युतस्य चाग्नेः प्रज्वलनं प्रसिद्धम् । किंच ता धाराः “सोमः “सूयते “यत्र “यत्र चेतरः “यज्ञः तायते “तत् तं यज्ञमभिलक्ष्य “पवन्ते गच्छन्ति खलु ॥

अ॒भ्य॑र्षत सुष्टु॒तिं गव्य॑मा॒जिम॒स्मासु॑ भ॒द्रा द्रवि॑णानि धत्त ।

इ॒मं य॒ज्ञं न॑यत दे॒वता॑ नो घृ॒तस्य॒ धारा॒ मधु॑मत्पवन्ते ॥१०

अ॒भि । अ॒र्ष॒त॒ । सु॒ऽस्तु॒तिम् । गव्य॑म् । आ॒जिम् । अ॒स्मासु॑ । भ॒द्रा । द्रवि॑णानि । ध॒त्त॒ ।

इ॒मम् । य॒ज्ञम् । न॒य॒त॒ । दे॒वता॑ । नः॒ । घृ॒तस्य॑ । धाराः॑ । मधु॑ऽमत् । प॒व॒न्ते॒ ॥१०

अभि । अर्षत । सुऽस्तुतिम् । गव्यम् । आजिम् । अस्मासु । भद्रा । द्रविणानि । धत्त ।

इमम् । यज्ञम् । नयत । देवता । नः । घृतस्य । धाराः । मधुऽमत् । पवन्ते ॥१०

हे मदीया ऋत्विजः “गव्यं गोसमूहरूपं गोसंबन्धिनं वा “आजिं संघातम् “अभ्यर्षत अभिगच्छत अभिगमयत वा “सुष्टुतिं शोभनां स्तुतिम् । अत्र गोशब्देनोदकानि गावो वोच्यन्ते । तत्संघातोऽभिप्रेतः । “अस्मासु यजमानेषु "भद्रा स्तुत्यानि 'द्रविणानि “धत्त

धारयत । स्तुत्या खलु फलं लप्स्यते । किंच “नः अस्मदीयम् "इमं “यज्ञं “देवता अत्र यष्टव्यान् देवान् “नयत प्रापयत । “घृतस्य “धारा “मधुमत् यथा तथा “पवन्ते गच्छन्ति ॥

‘धामन्ते ' इत्येषोत्तरसूक्तस्याद्या चाध्यायोत्सर्जनोपाकरणयोर्विनियुक्ते । ‘धामन्ते विश्वम्' इति प्रतीकमुक्त्वा तदन्ते ' द्वृचाः ' ( आश्व. गृ. ३. ५. ७ (https://sa.wikisource.org/s/2a66) ) इति सूत्रितत्वात् ॥

धाम॑न्ते॒ विश्वं॒ भुव॑न॒मधि॑ श्रि॒तम॒न्तः स॑मु॒द्रे हृ॒द्य१॒॑न्तरायु॑षि ।

अ॒पामनी॑के समि॒थे य आभृ॑त॒स्तम॑श्याम॒ मधु॑मन्तं त ऊ॒र्मिम् ॥११

धाम॑न् । ते॒ । विश्व॑म् । भुव॑नम् । अधि॑ । श्रि॒तम् । अ॒न्तरिति॑ । स॒मु॒द्रे । हृ॒दि । अ॒न्तः । आयु॑षि ।

अ॒पाम् । अनी॑के । स॒म्ऽइ॒थे । यः । आऽभृ॑तः । तम् । अ॒श्या॒म॒ । मधु॑ऽमन्तम् । ते॒ । ऊ॒र्मिम् ॥११

धामन् । ते । विश्वम् । भुवनम् । अधि । श्रितम् । अन्तरिति । समुद्रे । हृदि । अन्तः । आयुषि ।

अपाम् । अनीके । सम्ऽइथे । यः । आऽभृतः । तम् । अश्याम । मधुऽमन्तम् । ते । ऊर्मिम् ॥११

“ते त्वदीये “धामन् धामनि तेजःस्थाने "विश्वं “भुवनम् “अधि “श्रितम् । “अन्तः “समुद्रे वडवाग्नित्वेन “हृद्यन्तः सर्वप्राणिनां हृदये वैश्वानरत्वेन “आयुषि अन्ने सर्व प्राण्याहारत्वेन । यद्वा । आयुषीत्येतत् हृद्विशेषणम् । जठराग्निना खल्वायुः धार्यते । “अपामनीके उदकसंस्त्याये वैद्युताग्नित्वेन “समिथे संग्रामे च शौर्याग्निरूपेण । एवं सर्वेषु स्थानेषु वर्तमानं धाम । तस्मिन् धामनि “यः ऊर्मिर्घृतरूप उदकरूपो वा रसः “आभृतः स्थापितः “ते त्वदीयं “तं रसं “मधुमन्तं माधुर्योपेतम् “अश्याम व्याप्नुयाम ॥ ॥ ११ ॥ ॥ ५ ॥

इत्थं श्रीबुक्कभूपालसाम्राज्यैकधुरंधरः ।।

विद्यातीर्थगुरोदृष्टया प्राप्तसार्वज्ञ्यवैभवः॥

श्रीमत्सायणमन्त्रीशः 'सकलागमतत्ववित् ।

दाशतय्यां माधवीये वेदार्थस्य प्रकाशने ॥

चतुर्थं मण्डलं सम्यक् वामदेवेन वीक्षितम् ।

अष्टोत्तरैस्तु पञ्चाशत्सूक्तैः पञ्च शतैरपि ॥

एकोनया नवत्या च युक्तैर्मन्त्रैश्च संमितम् ।

व्याकार्षीत्सुखबोधार्थं पश्यतैतद्विमत्सराः ॥

॥ इति चतुर्थं मण्डलं समाप्तम् ॥

**टिप्पणी**

घृतोपरि संक्षिप्त टिप्पणी एवं संदर्भाः (http://puranastudy.000space.com/pur_index10/ghrita.htm)

आज्योपरि संक्षिप्त टिप्पणी एवं संदर्भाः (http://puranastudy.angelfire.com/pur_index2/aajya.htm)

४.५८.३ चत्वारि शृङ्गा इति

चत्वारि शृङ्गेति वेदा वा एत उक्तास् त्रयो अस्य पादा इति सवनान्य् एव द्वे शीर्षे इति ब्रह्मौदनप्रवर्ग्याव् एव सप्त हस्तासो अस्येति छन्दांस्य् एव त्रिधा बद्ध इति मन्त्रः कल्पो ब्राह्मणम् वृषभो रोरवीत्य् एष ह वै वृषभ एष तद् रोरवीति यद् यज्ञेषु शस्त्राणि शंसत्य् ऋग्भिर् यजुर्भिः सामभिर् ब्रह्मभिर् इति महो देवो मर्त्यां आविवेशेत्य् एष ह वै महान् देवो यद् यज्ञः .....एतद् वै यज्ञस्य शिरो यन् मन्त्रवान् ब्रह्मौदनः यो ह वा एतम् अमन्त्रवन्तं ब्रह्मौदनम् उपेयाद् अपशिरसा ह वा अस्य यज्ञम् उपेतो भवति - गोब्रा. १.२.१६ (https://sa.wikisource.org/s/14nw)

रोरवीति - पुराणेषु रुरुः द्विजः सर्पदंशेन मृतायै पत्न्यै स्वआयुं दत्त्वा तां पुनर्जीवयति। अतएव, रुरुस्थितिः करुणातः रोदनस्य अथवा अन्या कोपि अवस्था भवितुं शक्यते। द्र. अररु उपरि टिप्पणी (http://puranastudy.angelfire.com/pur_index2/araru.htm) रुरु उपरि पौराणिकसंदर्भाः (http://vedastudy.tripod.com/pur_index25/pva14.htm)

